पण्डितराजमारवाडकेसरिश्रीलेहरिरामजीशास्त्रिस्मारक-

श्रीराजस्थान-संस्कृत-कालेज-ग्रन्थमालायाः-

* निदाकुसुमम् *

श्रीमद्भगवत्पतञ्जलिमुनिविरचितं-

# पातञ्जलं महाभाष्यम्

महामहोपाध्यायश्रीनागोजीभट्टविरचितमहा-
भाष्यप्रदीपोद्द्योतोद्भासितेन महामहो-
पाध्यायश्रीकैयटोपाध्याय-
विरचितेन प्रदीपेन
विराजितम् ।

तस्यायं—

## तृतीयोऽध्यायः

पण्डितराजश्रीलेहरिरामशास्त्रिणां पौत्रेण, न्यायाचार्य,-पण्डितश्रीशिव नारायणशास्त्रिणां पुत्रेण श्रीगुरुप्रसादशास्त्रिणा व्याकरणाचार्येण महता परिश्रमेण संशोधितः, टिप्पण्या समन्वितश्च ।

निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः ।
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्यचित् ॥ मनुः ।

प्रथम संस्करणम्

मूल्य २)

## अत्यावश्यक सूचना—

जन्मना ब्राह्मण क्षत्रिय वैश्य के सिवाय अन्य किसी जाति को हमारी इस महाभाष्य के खरीदने व पढ़ने का अधिकार नहीं है। अतः जो जन्मना द्विज नहीं हैं वे इसे न खरीदें और न पढ़ें। ब्राह्मण क्षत्रिय आदि भी इसे शुद्ध होकर शान्तिपाठपूर्वक ही पढ़ें और पढ़ायें और अन्त में भी शान्तिपाठ करें। अन्यथा वे प्रत्यवायभाजन होंगे।

---

महाभाष्यस्य आद्यावन्ते चावश्यपठनीया शान्तिमन्त्राः —

तत्रादौ—ॐ शन्नो मित्रः शं वरुणः शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शन्नो विष्णुरुरुक्रमः॥ ॐ नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम् अवतु वक्तारम्॥ ॐ शान्तिः शान्तिः शान्तिः॥ ॐ॥

[ ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि। वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाऽधीतेनाहोरात्रान्सन्दधाम्यृतं वदिष्यामि सत्यं तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम् अवतु वक्तारम्। ]॥

ॐ शान्तिः शान्तिः शान्तिः।

ॐ नमः श्रीपाणिनिकात्यायनपतञ्जलिभ्यो मुनिभ्यः॥

ॐ काराश्चाऽथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्मांगलिकावुभौ॥

पाठस्य अन्ते च—ॐ नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वमेव प्रत्यक्षं ब्रह्माऽवादिषम्। ऋतमवादिषम्। सत्यमवादिषम्। तन्मामावीत्। तद्वक्तारमावीत्। आवीन्माम्। आवीद्वक्तारम्॥

ॐ शान्तिः शान्तिः शान्तिः॥

---

*Published by —*
**Pandit Nandkishore Shastri Ayurvedacharya,**
SHRI RAJASTHAN SANSKRIT COLLEGE GRANTH MALA,
Dharmakoop Meerghat, BENARES CITY


मुद्रक—माधव विष्णु पराडकर, ज्ञानमण्डल यन्त्रालय, काशी। ७६८४-९५

प्रत्ययसंज्ञा क्रियते। सा प्रकृत्युपपदोपाधीनामपि प्राप्नोति तस्याः प्रतिषेधो वक्तव्यः। प्रकृति–'गुप्तिज्किद्भ्यः सन्'। उपपद–'स्तम्बकर्णयो रमिजपोः'। उपाधि

प्र.] वाक्यम्। 'ते च हरतिदृतिनाथपशव प्रत्ययसंज्ञा' इति द्वितीयं वाक्यम्। न चैकवाक्यताया सम्भवन्त्या वाक्यभेदो युक्त। नैतदस्ति। सनादीनामपि वाक्यभेदेनैव संज्ञा विधेया, न ह्यसत संज्ञिसम्बन्धसंज्ञाविधानमुपपद्यते। तत्रैकेन वाक्येन सनादीनां विधिः। अपरेण तेषामेव संज्ञाविधिः। ततश्च यथा सनादीनां वाक्यभेदेन संज्ञाविधिः, एवं प्रकृत्यादीनामपि प्रतिनिर्दिष्टे प्रत्ययसंज्ञोपस्थानसामर्थ्यात्सन्निधानात्संबन्धप्रतिपत्तियोग्यविभक्त्यन्तराऽध्याहारेण प्राप्नोति। सनादिषु प्रतिवाक्य एव प्रथमं मैतेषां पारार्थ्यमवगतम्। द्वितीये तु संज्ञासंज्ञिसम्बन्धप्रतिपादनवाक्ये सम्बन्धप्रतिपत्तौ स्वार्थता स्यात्, यथा च सप्तमीनिर्दिष्टस्य वाक्यभेदेनोपपदसंज्ञा अधिकाराद्भवति तथा प्रत्ययसंज्ञापि प्राप्नोति। उपाधिशब्देन चेह तुल्यन्यायत्वाद्विशेषणमप्युच्यते। क्व चित्तु तयोर्भेदेन व्यवहारो दृश्यते, यथा 'नोपाधेरुपाधिर्भवति विशेषणस्य वा विशेषण'मिति। 'अर्थविशेष उपाधिस्तदन्तवाच्य समानशब्दो य। अनुपाधिरतोऽन्य स्याच्छायादि विशेषणं यद्वत्॥' इति॥

उ.] प्रथमान्ततया प्रत्यय'इत्यनेन सामानाधिकरण्यादेकवाक्यतया संज्ञासम्बन्धः। अन्ये-षान्तु विविभक्तित्वाद्वाक्यभेदेनैव संज्ञासम्बन्ध इति भावः। सम्भवत्येकवाक्यत्वे एव वाक्यभेदो दोषो न त्वसम्भव इति समाधत्ते–नैतदिति। ननु विविभक्तित्वात्कथं 'प्रत्यय' इत्यनेन तेषां सम्बन्ध इत्यत आह—विभक्त्यन्तरेति। ननु सनादिविधानार्थत्वात्प्रकृत्यादेरप्रधानतया संज्ञा न भविष्यतीत्यत आह–सनादीति। अन्यथाऽप्रधानत्वेऽप्यन्यत् संस्कार्यत्वलक्षणमर्थं वेऽविरोध इति भावः। ननु प्रकृतीनां प्रत्ययविधानुद्देश्यतया तासामेव संज्ञायामनुद्देश्यत्वं न्याय्यं न तु प्रत्ययानामिति चेत्, समानविभक्तिकत्वेन प्रत्ययानां क्लृप्तोद्देश्यतया विभक्त्यन्तराऽध्याहारेण प्रकृत्यादीनामपि तत्सम्भवादित्यभिमानः। छायादिविशेषणस्य प्रत्ययसंज्ञा युक्ता नोद्भाविनेत्यत आह—उपाधिशब्देनेति। तुल्यन्यायत्वादिति। प्रत्ययनिमित्तत्वेन प्रकृत्या तुल्यन्यायत्वमित्यर्थः। एवञ्चोपाधिषु तदुद्भावनेनैव विशेषणेऽप्युद्भावितेति भावः। तदन्तवाच्य–प्रत्ययान्तवाच्य इत्यर्थः। समानशब्द इति। प्रयोगे भिन्नशब्दबोध्यत्वाद्दारादा समानाधिकरणशब्दबोध्यो योऽर्थो प्रत्ययान्तशब्दवाच्य स उपाधिरुच्यत इत्यर्थः। यथा पचादेर्ना विषय 'पाचाऽ' इत्यत्र देशो, 'हरिहरे'रित्यादौ च श्वादि पशु। नानार्थवात्सन्देहवारणाय–'इरिहरे श्वे'त्यादौ विशेषनियमार्थाय स्पष्टप्रतिपत्तये वा क्वचित्समानाधिकरणशब्दप्रयोगोऽपि। आभ्या-

१ 'प्रकृति'। 'उपपद' 'उपाधि' इति निर्विभक्तिकं क्वचित्पाठान्तरम्।

'हस्तेदंत्तिनायया पञ्चौ' । पुनरेषा प्रतिषेधो वक्तव्य ॥ किं च स्यादयत्नेयमपि प्रत्ययसंज्ञा स्यात् ? ॥ परत्वमाद्युदात्तत्वमङ्गसंज्ञेत्येते विधय प्रसज्येरन् ॥

प्र ] किञ्च स्यादिति । नहि सज्ञाप्रवर्तिमात्रादेव दोषो भवति किन्तु तन्निमित्त कार्यप्रवर्तनात्, न च प्रकृत्यादीना किञ्चिन्निमित्त कार्य सम्भवति । परत्व तावदत्र निविशेषोपादानेन सनादिभिरेव प्रतिपन्नम् । न च गुणादीना सनादीना च परस्परस्य परत्व युज्यते विरोधात् । उपपदस्यापि–समासे सति पूर्वनिपातेन भवितव्यमिति परत्वाऽभाव । उपाधेरपि–पौर्वापर्यस्य लौकिके प्रयोगे नियमाऽभावात् स्थितस्यैव च परत्वस्य शास्त्रेणाऽनुवादात्परत्वस्य विधायकत्वाऽभावादनुवादकत्वाद् धर्मस्य चौपाधिकत्वात्तस्य च परत्वाऽसम्भवात्परत्वाऽभाव । आद्युदात्तत्वमपि न भविष्यति, यथाक्रम स्वरगत तेषा स्वरस्य विहितत्वात् । अङ्गसंज्ञा च विधानप्रतिबद्धा, न च प्रकृत्यादय कुतश्चिद्विहिता इति तेषु परत सा नान्यस्य भविष्यतीति प्रश्न ॥

परत्वमिति।प्रकृतिप्रत्ययो पर्यायेण परस्परापेक्ष परत्व स्यात् । शब्दान्तरापेक्ष वा प्रकृते , प्रकृत्यपेक्ष तु प्रत्ययस्य । उपपदस्यापि–परत्वादुपसर्जनत्वेन पूर्वनिपातेन- प्रत्यक्षरादिषु मानरूपा बाधिता परत्व स्यात् । 'भोक्तु भवता'त्येव च नित्य स्या-

उ ] सन्नक्रत्वादीनामुपाधित्वमाशङ्क्य , सत्त्वादिभ्याशक्तिश्च । स्वाधाद्यति । आदिना 'धाता कर्मण समानकर्तृका'दित्यादि । अतएव तदसमानाधिकरणमेव, 'गार्गिक्या श्लाघते' इति पदान्तराऽभिधेयश्च । तत्प्रयोगे च तुनोऽप्रयुक्तमेव ॥ 'अर्थविशेष उपाधि'रित्यादि कात्यायनवचनमिति न्यायवार्त्तिकतात्पर्यटीकाया वाचस्पति मिश्रा ॥ न च प्रकृत्यादीनामिति । न च प्रातिपदिकत्वाऽभाव फलम्, व्याप्रातिपदिकादित्यादावुदेश्यताऽवच्छेदकत्वेन तत्त्वज्ञापनात् । ननु प्रतिमाहे 'परश्चे'–त्युत्पन्ना प्रकृत्यादयोऽविनिविशेषाऽनुवादनेऽपि सन्निधानात्सनादेरेव परे भव न्त्वित्यत आह—न चेति । 'गुणा'दिति शेष । समासे इति । नित्यसमासे इत्यर्थ । लौकिके प्रयोगे पौर्वापर्यस्य नियमाऽभावात्तुपाधेरपि परत्वाऽभाव इत्य न्वय । तत्र हेतुमाह—स्थितस्यैवेति । तदनूद्य साधुत्वस्यैव विधेयत्वमिति भाव । विधायकत्वाऽभावादिति । परत्वादिविधायकत्वाऽभावादित्यर्थ ।

तद्विधायकत्वेऽप्याह—अर्थस्य चेति। पर्यायत्वमिति । तेषामनवकाशत्वेन बाधकत्वमिति भाव ॥पर्यायेणेति। यौगपद्ये हि विरोध इति भाव ।सन्नादीना परत्व चेष्यतेनैव सूत्रोपात्तत्वात् सनिव्यादेर्विभक्ति विपरिणामादिनाऽर्थान्तरवर्णनमनुपपन्नमित्यत आह—शब्दान्तरापेक्षमिति । प्रकृत्यपेक्षन्त्विति । तासां पञ्चम्यन्तत्वादिति भाव ।

ननु सनादीनामपि 'प्रातिपदिका'दिति निर्दिश्य प्रत्ययसंज्ञाया 'परश्चे'त्यस्य प्राप्तौ कथमुपसर्जनं पूर्वनिपातेनत्याशङ्क्याह आह—भोक्तु भवतीति । अत्र

अत उत्तरं पठति—॥*॥ प्रत्ययाधिकारे प्रकृत्युपपदोपाधीनामप्रतिषेधः ॥*॥ अधिकारेणाऽपि प्रत्ययसंज्ञायां सत्यां प्रकृत्युपपदोपाधीनामप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः ॥ प्रत्ययसंज्ञा कस्मान्न भवति ? ॥ ॥*॥ निमित्तस्य निमित्तिकार्यार्थत्वादन्यत्रापि ॥*॥ निमित्तानि हि निमित्तिकार्यार्थानि भवन्ति॥

प्र.] स तु 'व्रजति भोक्तु'मिति । उपाधिवाचिनोऽपि प्रयोगाऽनियमे प्राप्ते 'परश्चे'ति नियमः स्यात् । 'य प्रत्ययस्य पर' इति परिभाषणात् । आद्युदात्तत्वमपि स्वरान्तरं बाधित्वा स्यात् । अत्र सञ्ज्ञेति । ननु विधानप्रतिबद्धाऽत्र संज्ञा, न चेह प्रकृत्यादयो विधीयन्ते । नैष दोषः । सिद्धशब्दाऽन्वाख्यानात् तेषामपि शास्त्रेण विधानात् । परत्वेन च पूर्वस्याऽवधेराक्षेपात् । ननु पूर्वाक्षेपेऽपि परत्वे तस्माद्विधिर्नास्तीत्यत्र संज्ञा न भविष्यतीति चिन्त्यमेतत् ॥ निमित्तस्येति । प्रकृत्यादीनां भूतविभक्त्या निर्देशात्सनाद्युत्पत्तौ निमित्तभावेनोपादानात्पारार्थ्यात्स्वसंस्कारं प्रति प्रयोग

उ.] समासाऽभावेनोपपदस्य परत्वं स्यादिति भावः । अर्थे परत्वाऽसम्भवस्योक्तत्वादाह उपाधिवाचिन इति । स्वरान्तरमिति । योऽनवकाशस्तद्विषये मा भूत्, सावकाशविषये तु स्यादिति तात्पर्यम् । न च प्रातिपदिकधात्वोरित्यनेन सर्वप्रकृतिनिर्देशात्तदंशे सावकाशविषयो दुर्लभ इति वाच्यं, स्वरान्तरगतं नित्यत्वं बाधित्वा पर्याय स्यादित्यत्र तात्पर्यात् । सिद्धेति । 'टकि लोपः' इत्यनुवादेन ढको विध्यनुमानवदिहाप्यनुवादेनैव प्रकृतिविधानाऽनुमानमिति भावः । ननु श्रुताधिस्तु पूर्वस्माद्विधिर्नास्तीति कथमत्र संज्ञेत्यत आह—आक्षेपादिति । तथा च पूर्वोद्देशेन परत्वेन तेषां विधानमिति भावः । पूर्वापेक्षेऽपि परत्वे इति । अनुमितो विधिः सामान्यत एव, पूर्वोद्देशेन तु परत्वमात्रविधानम् । वस्तुतो ढगादेर्मानान्तरेणाऽसिद्ध्या भवतु तद्विध्यनुमानम्, प्रकृत्यादीनान्तु मानान्तरेण सिद्धतया तद्विध्यनुमानमेव दुर्लभमिति भावः । चिन्त्यमेतदिति । 'दत्तादयः प्रत्ययसञ्ज्ञा भवन्ति, ते च प्रत्ययेभ्यः शब्दान्तरेभ्यो वा परे भवन्ती'त्यत्र परशब्दस्य धर्मिप्रधानतया परत्वविशिष्टानां तेषामेव विधानं शाब्दम् । प्राप्ताऽप्राप्तविवेकन्यायेन तु देशमात्रविधानम् । अतएव सर्वोऽपि विशिष्टविधिरेव, प्राप्ताऽप्राप्तन्यायेन तु कस्य चिद्गुणविधित्वमिति मीमांसकाः । न हि 'यस्मात्प्रत्ययविधि'रित्यत्र प्राप्ताऽप्राप्तविवेकन्यायलब्धविधेयत्वमेव गृह्यत इत्यत्र मानमस्तीत्यत्र संज्ञा प्रयोजनमेव । ननु विधिग्रहणसामर्थ्यान्न्यायलब्धविधेयत्वस्य ग्रहः । 'स्त्री ईयती'त्यादावविदग्धिहपिताऽत्वस्य दुर्वारत्वेन व्यावर्त्याऽभावादिति चेन्न, 'भवती'त्यादौ दीर्घवारणाय विधिग्रहणस्यावश्यकत्वादित्याशयात् ॥

भूतविभक्त्या—सिद्धत्वबोधकविभक्त्या । ननु भिन्ने वाक्ये स्वसंस्कारं प्रति प्रयोज-

१ 'अनभिव्यक्तौ' पा० ।

तद्यथा बहुष्वासीनेषु कश्चित्कं चित्पृच्छति–कतरो देवदत्तः कतमो यज्ञदत्त इति[1]। स तस्मा आचष्टे–'योऽयं य. पीठे'[इति। योऽयं य. पीठे]इत्युक्ते निमित्तस्य निमित्तिकार्यार्थत्वादध्यवस्यति–'अयं देवदत्तोऽयं यज्ञदत्त' इति। नेदानीमभस्य पीठस्य वा 'देवदत्त' इति संज्ञा भवति ॥ [किं पुनर्निमित्तं को वा निमित्ती ? ॥ निर्ज्ञातोऽर्थो निमित्तमनिर्ज्ञातोऽर्थो निमित्ती। इह च प्रत्ययोऽनिर्ज्ञातः, प्रकृत्युपपदोपाधयो निर्ज्ञाता ॥ क्व ?॥ धातूपदेशे प्रातिपदिकोपदेशे च। ते निर्ज्ञाता निमित्तत्वेनोपदिश्यन्ते ।] ॥२॥ प्रधाने कार्यसंप्रत्ययाद्वा सिद्धम् ॥३॥ अथवा [प्रधाने[3] कार्यसंप्रत्ययात्सिद्धमेतत्। ] । प्रधाने कार्यसम्प्रत्ययो भवति ॥ *किं च प्रधानम् ? ॥ प्रत्ययः ॥* तद्यथा बहुषु यास्तु कश्चित्कं चित् पृच्छति–'को यातो'ति ?॥ स आह 'राजे'ति। 'राजे'त्युक्ते प्रधाने कार्यसंप्रत्ययाद्य पृच्छति यश्चाचष्टे[6] उभयोः संप्रत्ययो भवति ॥ किं कृतं पुनः प्राधान्यम् ? ॥ अर्थकृतम् ॥ यथा पुनर्लोकेऽर्थकृतं प्राधान्यं, शब्दस्येदानीं किंकृतं

प्र.] कतर इति। 'किं यत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' 'वा बहूनां जातिपरिप्रश्ने डतमच्' इति सूत्रद्वये उपाधिप्रत्याख्यानाद्बहूनामप्येकस्य निर्धारणे कतरशब्द प्रयुक्तः॥

प्रधान इति। प्रत्ययसंज्ञ स्वनिरतप्रकृतये प्रधानतयेष्यते न तु पारतन्त्र्यादप्रधानमित्यर्थः। किंकृतमिति। भवतु राज्ञ प्राधान्यं तदधीनस्थितित्वादन्येषाम्, इह तु कथमिति प्रश्न। अर्थकृतमिति। प्रयोजनकृतमित्यर्थः। यस्याऽपूर्वं

उ.] उपायभावेनेति। कल्पितप्रकृतिप्रत्ययविभागमुपायत्वेनाश्रित्याऽन्वाख्यानादित्यर्थः। तदनुगुणेति। तत्र निमित्तित्वाऽनुगुणा प्रथमा, अन्या प्रधानेन निमित्तत्वाऽनुगुणा इत्याहुः। बहुषु निर्धारणे डतरोऽनुपपन्न इत्यत आह–किं यदिति ॥ 'प्रधाने कार्य्यसम्प्रत्यया'दित्यस्य 'निमित्तिकार्यार्थत्वा'दित्यनेन पौनरुक्त्यमाशङ्क्याह–प्रत्ययसंज्ञेति। पूर्वं प्रत्ययसंज्ञाया आश्रयज्ञानार्थत्वेन प्रकृत्यादीनां निरपेक्षत्वात्पत्वाऽभाव इत्युक्तम्। इदानीन्तु प्रत्ययसंज्ञाया अपि गुणभूतेष्वाश्रयज्ञा नास्तीति प्रतिपादन इति विशेष इति भावः। वाक्यभेदभिया तैस्तस्या असम्बन्ध इति प्रागुक्तम्। अनेन तु तत्राऽन्वयप्रसक्त्यभाव एवोच्यत इति विशेष इति तत्त्वम्। भाष्ये—को यातेति। डतरस्य वैकल्पिकत्वात्तदप्रयोगः। उभयोः सम्प्रत्ययो भवतीति। तत्र कथमितु सम्प्रत्यय –तन्मूलकप्रयोग । तथाऽत्रापि आचार्यस्तेनैव तात्पर्येण प्रयुक्तवान्, शिष्याणाञ्च तथैव बोध इति भावः। प्रयोजनकृतमिति। प्रयोजकत्वकृत। प्रेरणाकृतमित्यर्थः। भाष्ये—यथा पुनरित्यव्ययम्–यस्तु पुनरित्यर्थे। किं कृतमिति।

१ 'कतमो देवदत्त' 'कतरो यज्ञदत्त' पा०। २ 'स आह' पा०। ३ अयं पाठो न सार्वत्रिकः। ४ 'नाधीयते'। ५ 'प्रधानस्य कार्यं संप्र'। ६ 'यश्च कथयति' पा०।

३अ १पा १आ १म्. ] ॐ व्याकरणमहाभाष्यम् ॐ ७

प्राधान्यम्? ॥*॥ तदस्याऽपूर्वोपदेशः प्राधान्यम् ॥*॥ यस्याऽपूर्वोपदेशः स प्रधानम्। प्रकृत्युपपदोपाधयश्चोपदिष्टाः ॥ क? ॥ धातूपदेशे प्रातिपदिकोपदेशे च ॥ यच्चैव निमित्तस्य निमित्तिकार्यार्थत्वाद्यथापि प्रधाने कार्यमप्रत्ययानां प्रकृत्युपपदोपाधीनां न भवति, विकारागमानां तु प्राप्नोति। 'हनस्त च'। 'प्वुन्तुनो घुक्' [ इति ]। एतेषां ह्यपूर्वोपदेशात्प्राधान्यं, निमित्तिनश्चैते ॥*॥ विकारागमेषु च परविज्ञानात् ॥*॥ विकारागमेषु च परविज्ञाना

प्र ]इति। तदर्थस्यादन्यथा तस्यैव प्राधान्यमित्यर्थः ॥ यच्चैवेति। ननु ये तावत्प्रकृत्यविकारागमास्ते प्रकृत्यनुप्रवेशात्प्रकृतिवत्संज्ञया न सम्भन्त्स्यन्ते। ये तु प्रत्ययस्य ते तद्ग्रहणेन गृह्यन्त एवेति नास्त्यनिष्टप्रसङ्ग। नैतदस्ति। प्रकृतिविकारागमाना तत्सम्बन्धित्वेऽपि प्रयोजकत्वात्प्रधानत्वाच्च स्यादेव प्रत्ययसंज्ञा। प्रत्ययसम्बन्धिनामपि तदवयवत्वे सिद्धे पृथक् प्रत्ययसंज्ञा स्यादेव, योग्यतासम्भवात् ॥ विकारागमेष्विति। 'य परः स प्रत्ययो, न च विकारागमाः परे। तेन ते प्रत्ययसंज्ञा न भविष्यन्ती'त्येव न व्याख्येयम्, नहि परत्वनिमित्ता प्रत्ययसंज्ञा, अपि तु प्रत्ययसंज्ञानिमित्तं परत्वम्। तथा च परत्वाऽभावेऽपि अस्मद्युष्मत्योश्चाप्रत्ययसंज्ञा भवति। तस्मादेव व्याख्यायते–प्रयोजनाऽभावाद्विकारागमाना प्रत्ययसंज्ञा न भवति। तथाहि परविज्ञान प्रत्ययसंज्ञाफलम्, तच्च तेषां न सम्भवति। षष्ठ्याः स्थानसम्बन्धस्याऽवयवसम्बन्धस्य च प्रतिपादनात्। आगमाना चाऽनुदात्तत्वेन भवितव्यमित्यनुदात्तत्वाऽभाव। विकारा अपि येऽनन्त्यास्ते न स्वरभाज, ये तु साऽन्त्यास्ते प्रकृतिस्वरेणान्तरङ्गत्वात्स्थानिस्वरयुक्ता। अन्यतरतोऽपि तन्निमित्ताऽन्यस्य न प्राप्नोति। सा

उ ]प्रेरकत्वाऽभावादिति भाव। अपूर्वोपदेशमात्रेण कथं प्राधान्यमत आह–तदर्थत्वादिति। तन्निष्पादकत्वादित्यर्थ ॥ प्रयोजकत्वादिति। प्रयुज्यत इति प्रयोजक–प्रयोज्य, तत्त्वानिमित्ति त्वादित्यर्थ। प्रधानत्वाच्चेति। अपूर्वोपदेशादित्यर्थ। योग्यतासम्भवादिति। समानविभक्तिकत्वरूपयोग्यतासम्भवादित्यर्थ ॥ नहि परत्वनिमित्तेति। तद्व्याप्येत्यर्थ। तथा हि सति व्यापकाऽभावेन व्याप्याऽभाव सिद्धेदिति भाव। अपि तु प्रत्ययसंज्ञानिमित्त परत्वमिति। इद चिन्त्यम्, 'राजपुरुष' इत्यादौ प्रत्ययत्वाऽभावेऽपि पुरुषादिपदस्य परत्वदर्शनात्। अस्मच्चेति। अस्मच्च प्रत्ययत्वकल्पप्रत्ययस्यादीनीत्यम्। परविज्ञानमिति। परश्चेति परिभाषा। प्रत्ययसंज्ञा चाऽस्या निरम्। प्रत्ययसंज्ञक परो भवतीत्यर्थ इति भाव। अन्तरङ्गत्वात्स्थानी-

१ 'निर्दिष्ट' पा०। २ 'यत्र' पा०। ३ 'यद्वा' पा०। ४ इद क्वचित्र।
५ 'ह्यपूर्व उपदेशः निमित्तिनश्चैते, प्राधान्यञ्च'। 'ह्यपूर्वश्चैवोपदेशः निमित्तिनश्चैते' पा०। ६ च क्वचित्। ७ 'आदि'रिति क्वचित्।

प्रत्ययसंज्ञा न भविष्यति । 'प्रत्ययः परो भवती'त्युच्यते न च विकारागमाः परे सम्भवन्ति ॥ किं पुनः कारणं समानेऽपूर्वोपदेशे प्रत्ययः परो, विकारागमा न परे ? ॥वा॥ षष्ठीनिर्दिष्टस्य च तद्युक्तत्वात् ॥वा॥ षष्ठीनिर्दिष्टं विकारागमयुक्तं [भवति] । पञ्चमीनिर्दिष्टाच्च प्रत्ययो विधीयते ॥ ॥वा॥ प्रत्ययविधानानुपपत्तिस्तु ॥वा॥ प्रत्ययविधिस्तु नोपपद्यते ॥ क्व ? ॥ यत्र विकारागमा

प्र ] इति प्रत्ययविधानप्रसङ्गः । प्रयोजनाभावात्तु अत आगमेऽपि शकारस्येत्संज्ञार्थं प्रत्ययसंज्ञा प्रवर्तत एव । परनिमित्तत्वादिति । 'विकारा गुण' इति हेतौ पञ्चमी । फलमपि प्रयोजनत्वाद्धेतुरित्युच्यते, यथा 'ऽध्ययनेन वसती'ति । तत्रायमर्थः — प्रत्ययसंज्ञाया परत्वं फलं तच्चाऽत्र न सम्भवतीति प्रत्ययसंज्ञा प्रयोजनाऽभावान्न भविष्यति ॥ किं पुनरिति । परत्वमेव भवतु प्रत्ययत्वाप्रयोजनमिति भावः ॥

षष्ठीनिर्दिष्टस्येति । षष्ठ्या च पूर्वोदितस्य सम्बन्धस्य प्रतिपादनाद्विरोधात् परत्वाऽभाव इत्यर्थः । पञ्चमीनिर्दिष्टाच्चेति । पञ्चमीनिर्देशे पर्यायेण पूर्वपरत्वतो प्राप्तौ 'परश्चे'त्यनेन परत्वं नियम्यत इति नास्ति कश्चिद्विरोध इत्यर्थः ॥ प्रत्ययेति । षष्ठीनिर्देशेष्विति भावः । क्वेति । 'गाङोट'गित्यादावानन्तर्यसम्बन्धे षष्ठीविधानादुपप-

उ.] त्ति । आन्तरतम्येनेत्यर्थः । आद्युदात्तत्वं तु तस्मादौ चरितार्थमिति भावः । सा हीति । प्रत्ययविधानेन परत्वेन च प्रतिबद्धेत्यर्थः । शकारस्येत्संज्ञार्थमिति । अत एव 'तृणह' इत्यादिनिर्देशा सङ्गच्छन्ते । अत्र शकारस्तु 'श्नसोरल्लोपः' इत्यत्र विशेषणार्थ इति भावः । नन्वेवम्परत्वनिमित्तत्वादिति पञ्चम्यनुपपन्ना, हेतुत्वाऽभावादत आह—फलमपीति । भाष्ये 'न च विकारागमा परे' इत्येव पाठः, तदुत्तरं 'सम्भवन्ती'त्यपपाठ इत्याहुः । अत्राहु — 'प्रत्यय' इत्यादीनां प्रत्यासत्त्याधिकारत्वेन प्रतिसूत्रमुपस्थितावेकवाक्यतया युगपदेव प्रत्ययविधानस्य न्याय्यत्वेन नाऽन्योऽन्यं प्रत्यन्योऽन्यस्योद्देश्यता न्याय्येति कथं प्रत्ययसंज्ञाया परत्वं फलं, कथं वाऽऽद्युदात्तत्वमिति । अतएव 'लुटः प्रथमस्ये'त्यादिसूत्रस्थभाष्याऽविरोधः । तस्मादयमर्थः — "स्थानषष्ठ्यादिनिर्देशादेशागमानां विकारादीनामभावेन 'परः' इत्यस्याऽनन्वयं मत्वा सन्नियोगशिष्टन्यायेन 'प्रत्यय' इत्यादीनामप्यसंबन्धः" इति । 'परविज्ञाना'दित्यस्य तत्सन्नियोगशिष्टत्वादित्यर्थः । क्वचित्तु 'तृणह इ'मित्यादिनिर्देशात् 'आगमोऽ'पीति ज्ञापकाच्च सन्नियोगशिष्टन्यायाऽनित्यत्वेन प्रवर्तत एव संज्ञेति दिक् ॥ एतदेव ध्वनयन् विकारागमेषु परश्चेत्यस्याऽप्रवृत्तिं प्रश्नमुखेनोपपादयति भाष्ये—किम्पुनरिति ॥

पूर्वोदितस्येति । स्थानसम्बन्धस्याऽवयवसंबन्धस्य चेत्यर्थः ॥ आनन्तर्यसंबन्धे

१ 'न विकारागमा परे' पा० । २ च क्वचिन्न । ३ इदं क्वचिन्न ।
४ 'प्रयोजनाऽभावे तु' पा० । ५ 'एवे'ति क्वचिन्न । ६ 'पूर्वपरत्वो' पा० ।

निर्धीयन्ते। 'हनस्त च' 'त्रपुजतुनोः षुग्' इति॥ किं पुनः कारणं न सिध्यति?॥ विकारागमयुक्तं षष्ठीपञ्चमीनिर्दिष्टत्वात्। ॥*॥ तस्मात्तत्र पञ्चमीनिर्देशात्सिद्धम् ॥*॥ तस्मात्तत्र पञ्चमीनिर्देशः कर्तव्यः ॥ न कर्तव्यः। इह तावद्धनस्त चेति,—'धातो'रिति वर्तते। इहं 'त्रपुजतुनोः षुग्' इति,—'प्रातिपदिका'दिति वर्तते ॥ यद्येवं 'हनस्त च'—'धातोः क्यब्भवती'ति धातुमात्रात्क्यप् प्राप्नोति ॥

नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति—'न धातुमात्रात्क्यब् भवती'ति यदयम् 'एतिस्तुशास्वृदृजुषः क्यप्' इति परिगणनं करोति ॥ अथ वा हन्तिमेवात्र धातुग्रहणेनाभिसम्भन्त्स्यामः—'हन्तेर्धातोः क्यब्भवती'ति ॥ कस्मात्? ॥ हन्तेरिति ॥*॥ अर्थाश्रयत्वाद्वा ॥*॥ अथ वा—अर्थाश्रयः प्रत्ययविधिः। यस्तमर्थं सम्प्रत्याययति स प्रत्ययः ॥ किं वक्तव्यमेतत्? ॥ न हि ॥ कथमनुच्यमानं गंस्यते?। 'प्रत्ययः' इति महती सञ्ज्ञा क्रियते। सञ्ज्ञा च नाम

प्र.] ग्रन्थ एव प्रत्ययविधिरिति प्रश्नः। हनस्त चेति। षष्ठ्या तकारेण स्थान्यादेशयोरागमाग-मिनोश्च सम्बन्धप्रतिपादने वाक्यस्योपयोगाद्वाक्यान्तराभावाच्च प्रत्ययविधिर्न प्रकल्पत इत्यर्थः ॥ इह तावदिति। ग्रहणसामर्थ्यादनुवृत्तिसामर्थ्यात् प्रत्ययोऽपि विधास्यते, निराकाङ्क्षत्वादित्यर्थः ॥ यद्येवमिति। हन्तेरादेशविधानसम्बन्धाद्विविभक्तित्वान्न धातोरविशेषितत्वादिति भावः ॥ यदयमिति। पूर्वं स्थितं धातुश्रुतिर्हन्तेरनुग्राहकत्वा, इदानीं वाक्यभेदेन सन्निधानाद्धन्तिसम्बन्धस्य च प्रतीयमानं धातुश्च विशिनष्टीत्युच्यते ॥ अर्थाश्रय एतदिति। अन्वर्थसञ्ज्ञाश्रयेणार्थवत्सञ्ज्ञाविधानाद्विकारागमानामनर्थकत्वात्प्रत्ययसञ्ज्ञा न भवतीत्यर्थः। किं वक्तव्यमिति। पूर्वोपात्तार्थपरित्यागेन स्वरूपेणैव सञ्ज्ञाः सञ्ज्ञान्तरवत् प्रवर्तन्त इति प्रत्यायकः प्रत्यय इत्येव वक्तव्य-मिति मत्वा प्रश्नः। महतीति। महत्त्वात् प्रत्ययशब्दस्याऽऽन्वर्थिकत्वमनुमीयते। तेन

उ.] इति। 'धातो'रिति पञ्चमीनिर्देशेन परविधानमुपपद्यत इति भावः। ननु 'धातो'-रित्यनुवृत्त्या क्यपोऽनुवृत्त्या च वाक्यभेदेन प्रत्ययस्याऽपि विधानं स्यादत आह—श्रुतयोरेवेति ॥ नन्वनुवृत्तप्रकृतेरपि विभक्तिविपरिणामेन पञ्चम्यन्तविशेषणत्वात् कथं प्रत्ययविधिरत आह—प्रकृतिप्रत्ययेति ॥ ननु हन्तिना धातुविशेषणात्कथं धातुमात्रात्प्रसङ्गोऽत आह—हन्तेरिति ॥ भाष्ये—यः स्वमर्थमिति। प्रत्यायकत्वं शब्दस्य स्वार्थविषयमेव गृह्यते, योग्यत्वादित्यर्थः। पूर्वोपात्तेति। यौगिकार्थस्य शब्दस्य

१ 'दिश्यन्ते' पा०। २ 'तस्मात्तत्र पञ्चमीनिर्देशात्सिद्धम् ॥ स तर्हि पञ्चमीनिर्देशः कर्तव्यः' इति तु गौडाः पठन्ति। ३ इदं क्वचित्।

४ 'हन्तिरेवाऽत्र' पा०। ५ 'सम्भन्त्स्यते' पा०। ६ 'हन्तेस्तो' पा०। ७ 'य स्वमर्थं' पा०। ८ 'प्रत्या- ययति' पा०। ९ 'तदा हि' पा०।

ततो न लघीयः ॥ कुत एतत्? ॥ लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम्-अन्वर्थसंज्ञा यथा विज्ञायेत-'प्रत्याययतीति प्रत्ययः'॥ यदि प्रत्याययतीति प्रत्ययोऽविकादीनां प्रत्ययसंज्ञा न प्राप्नोति, नहि ते किंचित्प्रत्याययन्ति ॥ एवं तर्हि प्रत्याय्यते इति प्रत्ययः ॥

[यदि प्रत्याय्यते इति प्रत्यय इति-] एवमपि सनादीनां न प्राप्नोति ॥ एवं तर्ह्युभयसाधनोऽयं, कर्तृसाधनः कर्मसाधनश्च ॥ एवमपि कुत एतत् समानेऽपूर्वोपदेशे प्रत्युत जात्वपरिमित्यथाऽकारस्तमयं सप्रत्याययति न पुनः षकार इति?॥

प्र ]य प्रत्याययः स प्रत्ययः। महत्त्वसूचितं प्रकारान्तरमपि यद्भवान् तत्सर्वादिसूत्रे व्याख्यातं तत एवावधारणीयम् ॥ नहि त इति। अन्वयव्यतिरेकाभ्यां षादीनां वाच्योऽर्थो नावधार्यते। तदभावेऽपि केवलाया एव प्रकृतेस्तदर्थाऽवगमात्। नाऽपि तस्यादिवत्तद्धिद्योत्योऽर्थ इति भावः। यदप्युच्यते-'अनिर्दिष्टाऽर्थाः प्रत्ययाः स्वार्थे भवन्तीति प्रकृत्यर्थ एव तेषामर्थ' इति। तदपि कल्पनामात्रम्। सत्यर्थवत्त्वे प्रत्ययसंज्ञया भाव्यमित्यभिहिते तदभावे स्वार्थाऽवगमादर्थवत्त्वं षादीनां नोपपद्यत इत्युक्तस्य दुरुत्तरत्वात्॥ प्रत्याय्यत इति। अभिधेयधर्मस्याऽभिधाने उपचारादेवमुक्तम्। अयमर्थः-यस्यार्थः प्रकृत्या प्रत्याय्यते स प्रत्याय्यमानार्थत्वात्प्रत्याय्यमानः स्वार्थिकः प्रत्ययसंज्ञो भवति ॥ एवमपीति। नहीच्छाद्यर्थे विधीयमानाः सनादयः प्रकृत्या प्रत्याय्यमानाऽर्था इति भावः। यो गुणादिमत् स प्रकृत्या प्रत्याय्यमानाऽर्थ इतीच्छा सनैवाभिधीयत इति ॥एवं तर्हीति। एक एव शब्दोऽनेकशक्तियोगादङ्गीकृतप्रवृत्तिनिमित्त द्वयोऽभिधीयते। तत्र यथासंभवं निमित्ताश्रयणेन सनादीनां षादीनां च प्रत्ययसंज्ञा प्रवर्तते। ण्यन्तस्य निपातनादचि णिलुक् ॥ एवमपीति। आगमस्याऽर्थवत्ता

उ ]सनादीनां विनियोगकाले शब्दस्यैव प्रवृत्तिनिमित्तत्वाऽङ्गीकारेण पूर्वोपात्तयौगिकार्थत्यागादित्यर्थः। 'इच्छायां' इति सूत्रस्य पूर्वोपात्तं च बोध्यम्। प्रकारान्तरम्-अन्यत्र शब्दस्य प्रवृत्तिनिमित्तत्वेऽपि महासंज्ञाविषये तादृशार्थवत्त्वस्यैव तत्त्वमित्यादि ॥ दुरुत्तरत्वादिति। अन्वयव्यतिरेकाभ्यां वाच्यद्योत्याऽर्थाऽभावनिश्चयेन तेषामर्थवत्त्वाऽभावे शङ्किते 'प्रकृत्यर्थ एवाऽस्याऽप्यर्थ' इत्यसदुत्तरमित्यर्थः। स्वार्थे इत्यस्य च-अर्थराहित्ये एव तात्पर्यमिति भावः ॥ षादीनां केनापि प्रत्याय्यमानत्वाभावात् कर्मव्युत्पत्तावपि कथं तेषां प्रत्ययत्वम्, अर्थस्यैव तु तत्प्राप्नोतीत्यत आह-अभिधेयेति। अभिधानं-शब्दः ॥ एकस्य शब्दस्य कथमुभयसाधनत्वमित्यत आह-एक एवेति। निपातनादिति। वस्तुतोऽन्तर्भावितण्यर्थात्प्रत्यय इति वक्तुमुचि-

१ 'प्रत्यय इति' पा०। २ इदं क्वचिन्न। ३ 'यदुच्यते' पा०। ४ 'प्यर्थावगमा' पा०। ५ 'प्रत्याय्यमान' पा०। ६ 'इत्यादि' पा०। ७ 'णिलुक्' पा०।

अन्तराऽप्यकारेण तस्याऽर्थस्य गमनान्मन्यामहे—अप्रत्ययस्तमर्थं गमयति न पुनः प्रत्यय इति ॥ क्वाऽन्यत्र ? ॥ 'बिल्वादिभ्योऽण्' बैल्व ॥ [प्रत्यय] ।

परश्च ॥ ३।१।२ ॥

किमर्थमिदमुच्यते ? ॥ परो यथा स्यात्पूर्वो मा भूदिति ॥ नैतदस्ति प्रयोजनम्, यमिच्छति पूर्वमाह तम्,— 'विभाषा सुपो बहुच्पुरस्तात्तु' इति ॥ मध्ये

प्र ] निरासर्तुमुपन्यासः ॥ अन्यत्रापीति । प्रत्ययस्यागममन्तरेणाऽपि प्रयोगदर्शनं साऽश्रयति । धातोस्तु प्रत्ययमन्तरेण प्रयोगाऽभावादन्वयव्यतिरेकाभ्यामर्थवत्त्वं नाऽवधार्यत इत्यर्थः । [ प्रत्यय ] ॥

परश्च । किमर्थमिति । पञ्चमीनिर्देशे परशब्दाध्याहारेण पञ्चमीविधानात् परत्वं सिद्धम् । षष्ठीनिर्देशेऽपि 'गापोष्टक्' इत्यादावानन्तर्यमात्रे षष्ठीविज्ञानादिति भावः ॥ पर इति । पूर्वशब्दाध्याहारेणाऽपि पञ्चमीविधानात् पूर्वत्वमपि स्यादिति नियमार्थं परवचनम् । तथाऽऽनन्तर्यस्य पूर्वत्वेऽपि भावात्षष्ठीनिर्देशेऽपि नियमार्थमित्यर्थः ॥ यमिच्छतीति । 'बहुच्च पुरस्ताद्भवति नाऽन्यः प्रत्ययः' इति बहुचि पूर्वदेशस्य नियतत्वादन्यः प्रत्ययः पर एव भविष्यतीत्यर्थः ॥ मध्ये तर्हीति । षष्ठी

उ ] तम् ॥ प्रत्ययस्येति । अन्वयव्यतिरेकाभ्यां प्रत्ययस्यैवाऽर्थवत्त्वं नाऽऽगमानामिति भावः । वस्तुतस्तु विकरणादेशानामपि न स्वीयाऽर्थप्रत्यायकता, किन्तु स्थान्यर्थप्रत्यायकत्वेन । अत एव कोशादौ तेषां पृथगर्थाऽनिर्देशः । अत एव च तव्यशब्दादपि नाभिहितकारकत्वसन्देहः 'नाभिहित' इति, न तु क्वाचिदपि 'नभहित' इति । येऽपि शास्त्राऽनभिज्ञास्तेऽपि वृद्धव्यवहारात्तमर्थं प्रतियन्ति । एतदर्थमेव भाष्ये 'स्वमर्थ'मित्यत्र 'स्व'मिति पदोपादानम् । स्थानिनो नष्टत्वादन्येन प्रत्याय्यमानार्थकत्वेऽपि नेति दिक् । [ प्रत्यय ] ॥

परश्च । पञ्चमीति । परशब्दाऽध्याहार एव व्याख्यास्यते न तु पूर्वशब्दाध्याहारः । 'गापोष्टक्' इत्यादावपि षष्ठ्या आनन्तर्यार्थत्वेन 'धातो'रिति पञ्चम्या पूर्ववदेव परशब्दाध्याहार इति भावः । परशब्दाध्याहारेणेति । तदर्थगतिनियतत्वाद्ऽस्यैकदेशस्य ग्रहणस्वीकारेणेत्यर्थः । एवं 'पूर्वशब्दाध्याहारेण'त्यपि व्याख्येयम् ॥ पूर्वशब्देति । व्याख्यानं दुर्ज्ञेयमिति भावः । आनन्तर्यस्येति । 'हलोऽनन्तराः' इत्यादौ तस्याऽव्यवहितपर्यायत्वादित्यर्थः ॥ प्रत्ययनियमेऽन्येषाम्परदेशनियमस्याऽलाभादभिमतदेशनियमं दर्शयति—बहुजेवेति ॥ पञ्चमीनिर्देशे मध्यशब्दाध्याहाराऽसम्भवादाह—षष्ठीति । 'व्रीहिशाल्योर्ढ'गित्यादौ ॥ 'अव्ययसर्वनाम्ना'मित्यादौ 'प्राक्टे'रित्युपादान

१ 'प्रत्यायनात्' पा० । २ 'तदर्थं' पा० । ३ 'प्रत्याय' पा० । ४ इदं क्वचिन्न । ५ 'परोऽयं' पा० । ६ 'तु' क्वचिन्न ।

तर्हि मा भूदिति ॥ मध्येऽपि यमिच्छत्याह तम्–'अव्ययसर्वनाम्नामकच्प्राक् टे'रिति। य इदानीमतोऽन्य प्रत्यय देश सोऽन्तरेण वचन पर एव भविष्यतीति नार्थ परवचनेन ॥ एवमपि येषामेते प्रत्ययाना देशो नियम्यते त एव नियतदेशा स्युर्ये इदानीमनियतदेशा स कदाचित्पूर्वं, कदा चित्पर, कदा चिन्मध्ये स्यात्। तद्यथा मातुर्वंस कदा चिदग्रत कदा चित्पृष्ठत कदा चित्पार्श्वतो भवति, पर एव यथा स्यादित्येवमर्थं परवचनम् ॥१॥ परवचननन

प्र ]निर्दिष्टेषु मध्यशब्दाध्याहारेणापि षष्ठीविधान स्यादिति भाव ॥मध्येऽपीति।'अव्ययसर्वनाम्ना'मिति मध्यशब्दाध्याहारेण षष्ठीविधानादस्य प्राक्टे सिद्ध एवेति 'प्राक्टे'रिति नियमार्थम्– अत एव प्रकृतिमध्ये भवति नाऽन्य' इति । मध्यमात्रपरिग्रहेण च नियमो विज्ञायेत न स्यदेव प्राक् टेरित्यव मध्यविशेषाश्रयण। अन्यथा मध्यान्तरे प्रत्ययान्तर स्यात्, मध्यविशेषे तु यन्मध्यसामान्यमस्ति तदाश्रयेण नियमे विज्ञायमाने नाऽस्तिदोष ॥ एवमपीति। बहुचक्चोर्विभाषया प्राधान्यात्तावेव दशाविशेषे नियम्येयाताम् –'पुरस्तादेव बहुच्' 'प्राक् टेरेवाऽक'नित्येवमिति भाव । देशो नियम्यत इति।प्रत्ययनियमेऽप्यनियतदेशप्रसङ्गे विशिष्टदशप्रतिपादनमेव'देशनियम' इत्यभिप्रायेणोक्तम् । मातुर्वंस इति । अनेन प्रकृते कार्यशब्ददर्शने मातृस्थानीयत्वमुच्यते॥ परवचनमिति । 'तस्मादित्युत्तरस्य'त्यनेनैव नियमस्य सिद्धत्वादिति

उ ]विना टे प्राग्विधेरसिद्धे कथ नियमोऽत आह—अव्ययेति। मध्यश्च तत्र निप्राप्त एव प्राप्तो, व्याख्यानादित्यभिमान । केचित्तु 'प्राक्टे'रित्यावर्त्यं नियमो व्याख्येय इत्याहु । 'प्राक्टे'रित्युपादानात्कथ मध्यमात्राऽपेक्षो नियमोऽत आह–मध्यमात्रेति । मध्यान्तरे इति । प्रोहिहारक्दे रेफैकारयोरीरारहकारयोर्मध्ये च स्यादिति भाव । सामान्यनियमाश्रयणे तदुपस्थितिबीजमाह–यन्मध्यसामान्यमिति ॥ नन्वत्र देशनियमे बहुजादीना नियतदेशत्व न स्यात्, किंच देशनियमाऽसम्भव, प्राधान्येन प्रत्ययनियमस्यैव युक्तत्वादित्यभिप्रेत्य भाष्ये–एवमपीति । तदाशयमाह–बहुजकचोरिति । न चैव 'देशो नियम्यते' इति भाष्यमनुपपन्नमत आह–प्रत्ययनियमेऽपीति । ननु देशनियमेऽप्रधानसङ्कोच, प्रत्ययनियमे प्रधानसङ्कोच तत्र प्रधानसङ्कोचाऽपेक्षयाऽप्रधानसङ्कोचस्य न्याय्यत्वेन देशनियम एवोचित इति चेत्र, 'आगन्तूनामन्ते निवेश' इति न्यायेन तदग्र एवैवमाननिवेशात्। 'कर्मणि द्वितीये'त्यादौ सूत्रकारस्य प्रधानसङ्कोचवत्प्रत्ययनियमे एव तात्पर्याच्च । किंच लोकेऽपि प्रधानस्य राजादेरेव स्थाननियमादिदृश्यते 'राजाऽत्रैव स्थेय'मित्यादिप्रयोगेणेति दिक्। भाष्ये—स कदाचित्पूर्वं कदाचित्पर इति । प्रतिलक्ष्य लक्षणभेदादि

१ दद क्वचिन्न। २ एव क्वचिन्न। ३ 'कदाचित्पर कदाचित्पूर्वं'। ४ 'मध्यश्च' पा०।

वा यदस्य परस्य सतः सञ्ज्ञा स्यात् ॥ यत्र तर्हि पञ्चमी नास्ति तदर्थमयं योगो वक्तव्यः ॥ क्व च पञ्चमी नास्ति ? ॥ यत्र विकारागमाः शिष्यन्ते ॥ क्व च विकारागमाः शिष्यन्ते ?॥ 'ह्रस्वस्य पः' 'श्रपुजतुनोः षुक्'इति ॥

*॥विकारागमेष्वपि चोक्तम् ॥*॥[विकारागमेष्वपि चोक्तम्]॥किमुक्तम्॥ प्रत्ययविधानानुपपत्तिस्तु तस्मात्तत्र पञ्चमीनिर्देशात्सिद्ध'मिति ॥

२॥अत्यन्ताऽपरदृष्टत्वाद्वा परभूतलोपार्थम्*॥अत्यन्तापरदृष्टत्वात्तर्हि परभूत

---

प्र.] प्रत्ययादिसञ्ज्ञासामर्थ्यात् विधीयते तस्याऽन्यदेशत्वम् । यथोर्देशस्य च शास्त्रीय कार्ये तद्देशस्यैव साधुत्वात् प्रयोगो भविष्यतीत्यर्थः ॥ विकारागमेष्विति । तदेवेहाऽप्यनुगन्तव्यमित्यर्थः । 'गायोष्ट'मित्यादौ 'धातो'रित्यधिकारश्चात् परत्वसम्भवात् गायोरनन्तर इति व्याख्येयम् । अत्यन्तापरदृष्टत्वाद्वेति । वाशब्दस्त्वर्थे । परेण—प्रधानेन प्रमाणेन प्रत्यक्षेण न क्व चिद्दृष्टा ये क्विबादयस्तेषां निमित्तदर्शने कार्यदर्शने वा सत्ताया अभावात्सत्यादिसुत्तरस्येत्यस्योपस्थानाऽभावादनिर्देशो लोपः स्यादिति परभूतलोपार्थमेतद्वचनम् । अस्मिन्हि सति क्विबादयः परभूता लुप्यन्त इति बुद्धिरुत्पाद्यते । तत्राऽग्निचिदित्यादौ प्रत्ययलक्षणेन परभूतप्रत्ययाश्रयास्तुगादयः सिध्यन्ति न तु पूर्वभूतत्वादित्येवेति भावः । ननु कार्यदर्शने उत्तरस्य भाव इत्येवं व्याख्यानात् परभूताः क्विबादयो भविष्यन्ति । नैतदस्ति । नहि तेषु भावबुद्धिरस्ति, लोपविधानेनाऽभावबुद्धेरुत्पादात् । स्वरूपलब्धौ हि भावः, नैते कदाचित्स्वरूपं लभन्ते, तदावस्था लुप्यत्वात् । अत एवाऽत्यन्ताऽपरदृष्टत्वा'दित्युक्तम् ।

---

उ.] सामर्थ्यादित्यस्य तदाऽध्याहारे आवश्यकेऽन्याध्याहारे मानाऽभावात्ताऽन्यदेशस्यस्य साधुत्वमिति भावः । अनियतदेशा भवत्विति अभ्युपगमवादेनोक्तम् । भवन्विलम्ब प्रसज्यतामिति शास्त्रं । परश्चेति सूत्राऽकरणपक्षाऽनुरोधात्—प्रत्ययतस्य सम्भवत्यप्येकवाक्यत्वे वाक्यभेदेन विधेयेति तात्पर्यम् । तदेवेति । धातोः प्रातिपदिकादित्याद्युक्तेस्तत्र पर एव भविष्यति । तत परस्यैव वा सञ्ज्ञेत्यादीत्यर्थः ॥

पूर्वप्रयोजनाऽनुवृत्तेर्वाशब्द भाष्यकृत्तदर्थे व्याचष्टे इत्याह—वेति । शास्त्रेण दृष्टत्वमेव लोपविधानात्कथमत्यन्ताऽपरदृष्टत्वेत्यत आह—परेणेति । ननु परत्वेनोत्पन्नस्यैव प्रत्ययत्वेनाऽपृक्तत्वप्रयुक्तलोप इति पूर्वभूतानां न लोपो नापि साधुत्वमत आह—तेषामिति । ततश्च परस्य सतः प्रत्ययसंज्ञेति नियमाऽभावात् पूर्वोपजातस्यापि लोपादि सिध्यतीत्यर्थः । अप्रवृत्तसंज्ञा कदाचित्प्रत्ययलक्षणोऽपीति भावः । ननु पूर्वभूतेति । तथा चाऽप्रिमी'त्यपि कदाचित्स्यादिति भावः । न हि तेष्विति । एवञ्चोत्तरस्येत्यनाऽसंबन्ध इति भावः । परश्चेत्यस्य करणे तु

---

१ अपि क्वचित् । २ इदं लुप्तं सम्प्रति । ३ 'अत्यन्ताऽपरिदृष्टत्वा' पा० ।

लोपार्थं परग्रहणं कर्तव्यम्। य एतेऽयन्ताऽपरदृष्टाः क्रियादयो लुप्यन्ते तेषां परभूतानां लोपो यथा स्यादपरभूतानां मा भूदिति ॥ किं पुनरयन्ताऽपरदृष्टानां परभूतलोपवचने प्रयोजनम्? ॥ क्विति णितीति कार्याणि यथा स्युरिति ॥ एतदपि नास्ति प्रयोजनम् आचार्यप्रवृत्तिर्ज्ञापयति—'अयन्ताऽपरदृष्टाः परभूता लुप्यन्त' इति,—यदयं तेषु कांश्चिदनुबन्धानासजति ॥ कथं कृत्वा ज्ञापकम्? ॥ अनुबन्धासञ्जन एतत्प्रयोजनम्—'क्विति णितीति कार्याणि यथा स्यु'रिति। यदि चात्राऽयन्ताऽपरदृष्टाः परभूता लुप्यन्ते ततोऽनुबन्धासञ्जनमनर्थकं स्यादिति ॥ ॥~॥ प्रयोगनियमार्थं वा ॥*॥ प्रयोगनियमार्थं तर्हि परग्रहणं कर्तव्यम्। परभूतानां प्रयोगो यथा स्यादपरभूतानां मा भूदिति ॥ अस्ति पुनः किंचिदनित्र दृश्यते

प्र ] केवलप्रत्ययप्रयोगवचनेन कार्यमात्र तथामप्यन्ताऽप्रत्ययस्य निर्धायत ॥ यदयमिति। यदि पूर्वभूता लुप्येरस्तदाऽनुबन्धासङ्गोऽनर्थकः स्यात्, सर्वस्यानुबन्धकार्यस्य परभूतप्रत्ययाश्रयत्वात्। नन्वनियतदेशत्वेऽपि यदा परभूतलोपस्तदानुबन्धासङ्गस्य चरितार्थत्वात्कथं लिङ्गत्वमिति के चिदाहुः। तद्युक्तम्। एवं पक्षेऽनुबन्धासङ्गस्यानर्थक्यमभ्युपगतं स्यात्। 'स्पृशोऽनुदके' इत्यादौ च सप्तम्यपञ्चमी श्रुता, सा किं पूर्वशब्दाध्याहारेण भवत्वथ परशब्दाध्याहारेणेति सन्देहे पूर्वशब्दाध्याहारेण पञ्चम्या सत्यामानर्थक्यमेवानुबन्धासङ्गस्येति कथं परभूतलोपेऽनुबन्धासङ्गो न लिङ्गं स्यादिति भाष्यविद आहुः। प्रयोगनियमार्थं वेति। पूर्वं प्रयोजनं चिन्तितमिति

उ ] तत्सामर्थ्यात्परत्वबुद्धिविशिष्टो योऽद्र क्रियत इत्यर्थ इति तात्पर्यम्। नन्वयन्ताऽप्रत्ययानामप्रतीतेर्लोपो वा क्रियत इति विवक्षितमित्यत आह—केवलमिति। अप्रयुक्ताऽदर्शनस्यैव लोपत्वेन प्रयुक्तत्वबुद्धौ उत्पत्तिबोधनमिति भावः ॥ णिच्छायं—एवं। परभूतेति। 'क्विति णिति' 'ञिति कृती'त्यादीना परप्रत्ययत्वादिति भावः। यदेति। यद्विषये इत्यर्थः। एकविषये आवृत्त्या नानादेशविधाने मानाऽभावात्। युगपत्तु द्विधा चरद्वयेनाऽन्वयाऽसम्भवः। 'एवं पक्षे' इत्यस्यापि विषयविशेष इत्यर्थः। अन्यथाऽसङ्गतिः स्यादेव। अत एव 'स्पृश' इत्यग्रिमग्रन्थसङ्गतिः। प्रकारान्तरेण व्याख्याने तदसङ्गतिः। विषयविशेषमेवाह—स्पृश इति। अनेकस्य स्पृश एव लक्ष्यत्वात् लक्ष्यभेदेनापि लक्षणावृत्तिः। एवञ्च विरुद्धसामर्थ्येनोत्तरस्य यो दोषो भावो भवतीत्यर्थो वक्तुराशयः परग्रहणाऽभावेऽपीत्याशयः ॥ भाष्ये—अपरभूतानामिति। न परभूता अपरभूता इति, न विद्यन्ते परभूता येषामिति चाऽर्थः। तेन केवलप्रत्ययानां केवलप्रकृतीनाञ्चेत्यर्थः। तदेतदुक्तम्—अप्रत्ययिकेत्यादिना भाष्ये। प्रकृतिरर्थाऽभिधाने कर्तव्येऽप्रत्ययिकाऽपि प्रयुज्यमाना दृश्यत इत्यर्थः। तथा च लोके दृश्यमाना

१ 'परभूता एव' पा०। २ 'चान्यन्ता' पा०। ३ 'अपरभूत' पा०।

स्तथा ॥*॥ धातुवचने चानुपपत्त्यर्थम् ॥२॥ धातुवचने चानुपपत्त्यर्थं परग्रहणं कर्तव्यम् । धातुवचनेनाऽनुपपत्तिरपि यथा स्यात् ॥ अथ क्रियमाणेऽपि वै परग्रहणे कथ-

---

प्र.] जाद्य इति । बहुव्रीहिणा चापि भ्रान्त्या केवला लोके प्रयुज्यमाना दृश्यन्त इत्यर्थः । यथा बहुरिति । ईषदसमाप्तौ यो बहुच्प्रत्ययस्तदन्तो बहुशब्दस्सङ्ख्यावैपुल्यवाची यथा लोके प्रयुज्यते तथा द्वयसजादयोऽपीति केचिद्व्याचक्षते । अन्ये त्वाहुः—केवला एवेषदसमाप्तौ ये बहुशब्दा लोके प्रयुज्यन्ते स दृष्टान्तोऽसाधुत्वे द्वयसजादीनामुपात्त ॥ धातुवचने चेति । 'तस्मादित्युत्तरस्य'त्येव प्रत्ययस्य सिद्धे परत्वे पुनः परवचनं धातुवचने प्रत्ययस्य पक्षेऽनुपपत्तिं प्रतिपादयति । 'धातोः परः सन् भवति'—परत्वोपलक्षितस्सन् पक्षे भवति । पक्षे तु नैवोत्पद्यत इत्यर्थः, न त्वत्र परत्वं विकल्प्यते

---

उच्चरितानाऽन्यार्थबोधकतया बहुरित्यस्य, प्रमाणमित्यर्थे द्वयसजादीनामसत्त्वेऽप्यर्थः । अथ भाव:—'समानेऽर्थेऽन्वाख्यानेऽनन्वाख्यानस्य निवर्तकं' इत्युक्तन्यायेन प्रत्ययान्तस्य साधुत्वकथनात् केवलप्रकृत्यादेरसाधुत्वमिति । 'स्नुषा सित्यादौ तु तदन्ये' इत्युक्तारोपेण रघुवंशेन रूपेण तेषां बोधकत्वात्साधुत्वम्, तत्सम्बन्ध्यपत्यमित्यर्थे हि अस्समासयोरेव साधुत्वमिति सूत्रार्थात् । बहुत्वस्य—गर्गादौ, इत्यस्को नडादिलकादिश्च । प्राग्दुक्तयुक्तिभिः परत्वे सिद्धे परश्चेत्येतत्प्रत्ययः परो भवत्येवेति नियमार्थत्वेन केवलप्रकृतेर्न प्रयोगो, नापि केवलप्रत्ययस्येति सिद्धम् ॥ भाष्ये अनागुनोपपादकस्परश्चेत्यस्योदाहरणबोधकस्य—अवृत्तिजा इति । 'एकार्थीभावस्य वृत्तिविषयाऽभावेऽपि जाता उच्चारिता वृत्तिजद्वयसादिमद्वा प्रमाणार्थका बहुच्प्रत्ययान्तादिशब्दानबहुशब्दद्वयसादयोऽपि साधवः स्युरिति तद्वारणार्थं—परश्चेती'ति भाष्यार्थः । बहुजन्तेऽन्यथासिद्धार्थत्वादस्तु बहुशब्दस्य साधुत्वम्, एषां त्वर्थान्तरवृत्तित्वाऽभावादसाधुत्वमेवेति भावमुदाह—अवृत्तिजा अपि श्राव्येति । तत्सङ्ग्रहानुपूर्वीकत्वात्तदर्थत्वभ्रान्त्येत्यर्थः । 'प्रत्ययः परः एवे'ति नियमेऽर्थेन शब्दतश्च यः प्रत्ययत्वानीयः स परः एवैत्यर्थेनास्याऽसाधुत्वबोध्यम् । अन्यथाऽस्य प्रत्ययत्वाऽभावेन कथं नियमेनाऽसाधुत्वबोध्येत । एतेन प्रकृत्युद्देश्येनैव प्रत्ययानां विधानात्केवलप्रत्ययस्याऽसाधुत्वे सिद्धे कथमिदं परश्चेत्यस्य प्रयोजनमित्यपास्तम् । अस्ये त्विति । अत्र पक्षे बहोरपि द्वयसादि तुल्यत्वेन दृष्टान्ततयाऽनुपपत्तिरित्यरुचि ॥ धातोरिच्छायां वा सन् प्रत्ययसंज्ञो भवतीत्यर्थे प्रधानतयास्याऽन्याय्यत्वेनाऽप्रधाने संज्ञायां एव विकल्पः स्यात्, न च स इष्ट । परग्रहणे तु तत्सामर्थ्यात्प्रधानन्यायाऽभावेन सन एव विकल्प इति धातुवचने चेत्यादिभाष्यस्य तात्पर्यार्थ । तदुपपादयति—तस्मादि त्युत्तरेति । 'परश्चे'त्यस्य मतेऽप्यप्रधानत्वात्परत्वस्यैव विकल्पः स्यादिति दूषयति—न त्वत्रेति । नियतत्वा-

---

१ धातुवचने चानुवृत्ति' पा० । २ 'धातुवचनेन' पा० ।

मिव वावचनेनाऽनुत्पत्तिर्लभ्या ?॥ क्रियमाणे परग्रहणे वावचने 'वा परः' इत्येतदभिसंबध्यते । अक्रियमाणे पुनः परग्रहणे वावचनेन किमन्यच्छक्यमभिसंबन्द्धुमन्यदतः संज्ञायाः। न च संज्ञाया भावाऽभावाविष्येते॥ ॥*॥ वावचने चोक्तम्॥*॥वावचने चोक्तम्॥ किमुक्तम् ? ॥ 'वावचनानर्थक्यं च तत्र नित्यत्वात्सतः' इति॥ प्रयोगनियमार्थमेव तर्हि परग्रहणं कर्तव्यम्॥ अथैतस्मिन्प्रयोगनियमार्थे सति किमयं प्रत्ययनियमः 'प्रकृतिपर एव प्रत्ययः प्रयोक्तव्योऽप्रकृतिपरो ने'ति, आहो स्वित्प्रकृतिनियमः 'प्रत्ययपरैव प्रकृतिः प्रयोक्तव्याऽप्रत्ययपरा ने'ति ॥ कश्चात्र विशेषः ? ॥*॥ तत्र प्रत्ययनियमे प्रकृतिनियमाऽभावः ॥*॥तत्र प्रत्ययनियमे सति प्रकृतेर्नियमो न प्राप्नोति । अप्रत्ययिकायाः प्रकृतेः प्रयोगः प्राप्नोति । च [illegible] देवदत्त क स यज्ञदत्तो बभ्रुर्मण्डुर्लमक इति॥ अस्तु तर्हि प्रकृतिनियमः ॥*॥ प्रकृतिनियमे प्रत्ययाऽनियमः ॥*॥ प्रकृतिनियमे सति प्रत्ययस्य नियमो न प्राप्नोति, किमस्य द्वयम किमस्य मात्रं कार्षं तिर्यांति,—अप्रकृतिकस्य प्रत्ययस्य प्रयोगः प्राप्नोति ॥*॥ सिद्धं तूभयनियमात् ॥*॥ सिद्धमेतत् ॥ कथम् ? ॥ 'उभयनियमात्' । उभयनियमोऽयं—'प्रकृतिपर एव प्रत्ययः प्रयो-

प्र.] 'पक्षे पूर्वो भवती'ति । परत्वस्य प्रयोगे नियतत्वात्तस्मादिति वचनाद्वा नियतत्वात् ॥ अक्रियमाण इति । प्रतियोगं प्रत्ययसंज्ञोपस्थानात्तस्या एव विकल्पः स्यात् । कृते त्वस्मिन् पराधिकारे प्रतियोगमुपस्थिते 'परो वा भवति'—परत्वोपलक्षितः पक्षे भवति, पक्षे नैव भवतीत्यर्थः संपद्यते ॥ नित्यत्वात्सत इति । वृत्तिपक्षे नित्य एव संज्ञिष्यते, कर्तुमिच्छतीत्यवृत्तिपक्षे नैव सन उत्पत्तिः प्राप्नोतीति प्रत्या-

उ.]दिति । तथा च तद्विकल्पो नेष्ट इति भावः । तस्मादिति वचनाद्वेति । तेन सूत्रेणोत्तरस्येत्यस्याप्युपस्थितावेकार्थकशब्दद्वयेन नित्यं परत्वस्य बोधनेन पश्चात्तद्विकल्पो विकल्पस्तस्य बोधयितुमशक्य इत्यर्थः ॥ भाष्ये—वा पर इत्येतदभिसंबध्यत इति । यः परः स वा भवतीत्यर्थः । संज्ञाया एवेति । प्रधानत्वेन प्रत्ययविकल्पस्याऽन्याय्यत्वादिति भावः ॥ प्रत्याख्यात इति । सत्त्वेऽपि न संज्ञाया विशेषणं, तद्विकल्पाऽनिष्टे, 'परश्चे'ति सत्त्वेऽपि परत्वविकल्पाऽभाववत् । तत्र सामर्थ्याद्दूरस्थान्वयबाधभ्रमनिवृत्त्यर्थं सन एव विशेषणं वाग्रहणम् । ध्वनितं चेदं 'सनाद्यन्ताः धातवः' इति सूत्रे भाष्य इत्यपि बोध्यम् । प्रयोगार्थमिदमिति । प्रयोगनियमार्थमेवेदमित्यर्थः । क्वचित्तथैव पाठः ॥ भाष्ये—प्रत्ययपरैवेति । सामर्थ्यात्प्रत्ययो नित्यं सदा परः प्रयोक्तव्य इत्यर्थेनैतन्नियमसिद्धिरित्यर्थः । ननु 'पर एव स्या'दिति नियमे बभ्रुरित्यादेरपि

१ 'वचनेन' । २ 'पुनः' इति क्वचिन्न । ३ 'परवचने' पा० । ४ इदं क्वचिन्न । ५ 'प्रकृतेर्नियमः' । ६ 'प्रत्ययनियमः' । ७ 'कस्य निर्वा' पा० ।

त्यय ' 'प्रत्ययपरैव च प्रकृति'रिति ॥ किं वक्तव्यमेतत् ? ॥ न हि ॥ कथमनुच्यमानं गंस्यते ? ॥ परग्रहणसामर्थ्यादन्तरेणाऽपि परग्रहणं स्यादेव परः । पर एव यथा स्यादित्येवमर्थं परग्रहणम् । [ परश्च ] ॥

आद्युदात्तश्च ॥ ३।१।३ ॥ अनुदात्तौ सुप्पितौ । ३।१।४।

किमर्थमिदमुच्यते ? ॥ आद्युदात्तो यथा स्यादन्तोदात्तो मा भूदिति ॥ नैतदस्ति प्रयोजनम् यमिच्छत्यन्तोदात्तं, करोति तत्र चकारमनुबन्धम्, आह च 'चितोऽन्तोदात्त' इति ॥ मध्योदात्तस्तर्हि मा भूदिति ॥ मध्योदात्तमपि यमिच्छति तत्र रेफमनुबन्धं करोति, आह च—'उपोत्तमं रिती'ति ॥ अनुदात्तस्तर्हि मा भूदिति ॥ अनुदात्तमपि यमिच्छति तत्र पकारमनुबन्धं करोति, आह च—'अनुदात्तौ सुप्पिता'विति ॥ स्वरितस्तर्हि मा भूदिति ॥ स्वरितमपि यमिच्छति करोति तत्र तकारमनुबन्धम्, आह च—'तित्स्वरित'मिति । य इदानीमतोऽन्यः प्रत्ययः शेषः सोऽन्तरेणाऽपि वचनमाद्युदात्त एव भविष्यतीति नार्थ आद्युदात्तवचनेन ॥ एवमपि येषामेव प्रत्ययानां स्वरो नियम्यते त एव

---

प्र ] ख्याते वाचनिके प्रयोगनियमार्थमिदम् ॥ सिद्धे तस्मादिति वचनात्परत्वे 'नित्यं परः प्रत्ययो यथा स्यात्मा कदाचित्परो न प्रयोजी'त्येव सामर्थ्यादुभयनियमलाभः ॥

आद्युदात्तश्च । अस्वरकस्याऽच उच्चारणाऽभावात्स्वरान्तरस्य प्रत्ययान्तरेषु नियतत्वात्पारिशेष्यादाद्युदात्त एव प्रत्ययो भविष्यतीति मत्वा प्रश्नः—किमर्थमिति ॥ येषामेवेति । चिदादीनामनियतस्वरप्राप्तावन्तोदात्त एव चिदित्येव नियमात्तेषामेव

---

उ ]मात्वं स्यादिति चेन्न, 'परः स्यादेवे'त्यर्थात्। तदनुवदन्व्याचष्टे—नित्यं पर इति। मा कदाचिदपरो न प्रयोजीति । तेनोभयनियमफललाभ इति भावः । [ परश्च ] ॥

आद्युदात्तश्च । एते त्रयोऽप्यधिकाराः । यत्तु परश्चाद्युदात्तश्चेत्यनयोः परिभाषात्वमुक्तं, तन्न, लिङ्गाऽभावात् । न च प्रत्ययमात्रैव लिङ्गम्, एकवाक्यतया त्रयाणामपि विधानेनान्यतरस्याऽन्यतरस्मिन्नतात्पर्याऽयोगात्। सहविधानमत एव सूत्रे भाष्येऽग्रे स्फुटतरम्॥भाष्ये—अन्तोदात्तो मा भूदिति। अस्वरकस्याऽच उच्चारणाऽभावेऽपि आद्युदात्तत्वनियमो न स्यादित्यर्थः ॥ नैतदिति । अस्वरकोच्चारणाऽभावादनियतान्तोदात्तत्वादौ प्राप्ते 'चित' इत्यादि 'चित एवे'त्यादिनियमार्थमित्यर्थः । प्रत्ययविषयनियमैरन्येषु स्वरेषु प्रतिबद्धेषु अस्वरकोच्चारणाऽसम्भवादाद्युदात्त एव भविष्यतीति किमनेन सूत्रेणेति भावः । ननु लोके त्रैस्वर्यनियमाऽभावेनाऽस्वरकस्याऽप्यच उच्चारणमस्त्येव, उदात्तादीनामभावस्यैकश्रुतित्वात् । एकश्रुतेरतिरिक्तत्वे ॥ भाष्ये स्यादिति कथमाद्युदात्तत्वसिद्धि ?[1] । न च दृष्टान्तमनुसृत्य साऽपि नियता, त्रिमात्रच्छन्दसीत्यादेर्वैय

---

१ 'यथे'ति क्वचित् ।

नियतस्वरा स्युर्य इदानीमनियतस्वरः स कदा चिदाद्युदात्तः कदा चिदन्तोदात्तः कदा चिन्मध्योदात्तः कदा चिदनुदात्तः कदा चित्स्वरितः स्यात्, आद्युदात्त एव यथा स्यादित्येवमर्थमिदमुच्यते ॥

अथ किमर्थं प्रत्ययसञ्ज्ञासंनियोगेनाद्युदात्तत्वमुच्यतेऽनुदात्तत्वञ्च, न यत्रै वाऽन्यः स्वरस्तत्रैवाऽयमप्युच्येत- ञ्नित्यादिर्नित्यम्'। 'प्रत्ययस्य च'। 'अनुदात्तौ सुप्पितौ' इति। 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तम्'। 'सुप्पितौ च' इति ?। तत्रायमप्यर्थो द्विराद्युदात्तग्रहणं द्विश्चाऽनुदात्तग्रहणं न कर्तव्यं भवति। प्रकृतमनुवर्तते ॥

अत उत्तरं पठति॥*॥आद्युदात्तत्वस्य प्रत्ययसञ्ज्ञासंनियोगे प्रयोजनं यस्य सञ्ज्ञाकरणं तस्याद्युदात्तार्थम् ॥*॥आद्युदात्तत्वस्य प्रत्ययसञ्ज्ञासंनियोगकरणे एतत्प्रयोजनं यस्य सञ्ज्ञा क्रियते तस्याद्युदात्तत्वं यथा स्यात्॥*॥असंनियोगे हि यस्मात्स विहितस्तदादेराद्युदात्तत्वं तदन्तस्य चानुदात्तत्वम् ॥*॥ अक्रियमाणे हि प्रत्ययसञ्ज्ञासंनियोगेनाद्युदात्तत्वे 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणं भवती'ति तदादेरेवाद्युदात्तत्वं प्रसज्येत तदन्तस्य चानुदात्तत्वम् ॥

अथ क्रियमाणेऽपि प्रत्ययसञ्ज्ञासंनियोगेनाद्युदात्तत्वेऽनुदात्तत्वे च कस्मादेव तदादेराद्युदात्तत्वं न भवति तदन्तस्य चाऽनुदात्तत्वम्?॥उत्पन्नः प्रत्ययः प्रत्ययाश्रयाणां कार्याणां निमित्तं भवति नोत्पद्यमानः। तद्यथा कृतो घटो घट-

प्र ]नियतस्वरत्वं स्यात्, अन्येषां त्वनियतस्वरत्वम् इत्यर्थः ॥प्रत्ययाश्रयाणामिति। तदन्तग्रहणादीनामित्यर्थः। 'आद्युदात्तश्च'त्यस्य तु प्रतियोगमुपस्थाने सति-उत्पद्यमान एव तव्यादिराद्युदात्तो भवत्येव तिबादिरनुदात्त इति दोषाऽभावः।घटाश्रयाणामिति।

उ ]र्व्यापत्ते।तेनाऽन्नापि पाक्षिक्यास्तस्या दुर्वारत्वमिति चेन्न, लोके नैस्वर्यपक्षे, वेदे चाद्युदात्तार्थमिदं सूत्रं नियमे सिद्धत्वाद्व्यर्थमिति भाष्याशयात्। पक्षे लोके एकश्रुतिरिष्टैवेत्याहु ॥अनियतस्वरेति। पूर्वनियमे तु चितोऽन्यस्वराऽव्यावृत्त्या नियतशास्त्रार्थोऽन्यथा इष्टाऽनुरोधाद्वाऽऽत्योभयविधनियमे मानाऽभावाच्चाऽन्तोदात्त एव चिदित्येव नियमः स्यादित्यन्यत्राऽनियमः स्यादित्यर्थः ॥ भाष्ये-सञ्ज्ञासंनियोगेनेति। अत्र करणे त्रयाणामप्यधिकारत्वादेकवाक्यतया नितयविशिष्टत्वादेर्विधानात्। अन्यत्र करणे तु प्रत्ययाऽनुवादेन विधानात्र संनियोग इति भावः।

भाष्ये-द्विराद्युदात्तग्रहणमिति।'प्रत्ययस्य चे'ति करणेऽपि तस्याद्युदात्तग्रहणाद्गुरुत्वमिति भावेनेदम्॥तदादेराद्युदात्तमिति। तदादेरिति तत्पुरुषः। तदन्तस्येति बहुव्रीहिः। उत्पन्नः प्रत्यय इति। 'प्रत्ययग्रहणे यस्मा'दिति परिभाषाया अनु-

१ 'दात्तत्वमनुदात्तत्वं चोच्यते' पा०। २ अपि क्वचिन्न। ३ 'आद्युदात्तस्य' पा०। ४ 'विहित' इति क्वचिन्न। ५ 'तदन्तस्ये'ति क्वचिन्न। ६ 'चानुदा' पा०।

श्रयाणां कार्याणां निमित्तं भवति न क्रियमाणः ॥ ॥*॥ न वा प्रकृतेरनुदात्तवचनं ज्ञापकं तदादेरग्रहणस्य ॥*॥ न वैष दोषः ॥ किं कारणम् ? ॥ यदयं ञ्नित्यादिर्नित्यमिति प्रकृतेराद्युदात्तत्वं शास्ति तज्ज्ञापयत्याचार्यो 'न तदादेराद्युदात्तत्वं भवती'ति ॥ तदन्तस्य तर्ह्यनुदात्तत्वं प्राप्नोति ॥ ॥*॥ प्रकृतिस्वरस्य च विधानसामर्थ्यात्प्रत्ययस्वराऽभावः ॥*॥ यदयं 'धातोरन्तः' 'प्रातिपदिकस्य चाऽन्तः' इति प्रकृतेरन्तोदात्तत्वं शास्ति तज्ज्ञापयत्याचार्यो 'न तदन्तस्याऽनुदात्तत्वं भवती'ति ॥ कथं कृत्वा ज्ञापकम् ? ॥ यत्र ह्यनुदात्तः प्रत्ययः प्रकृतिस्वरस्तत्र प्रयोजयति ॥ ॥*॥ आगमानुदात्तार्थं वा ॥*॥ आगमानुदात्तार्थं तर्हि प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वमुच्यते—'प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वे कृते आगमा अनुदात्ता यथा स्यु'रिति ॥*॥ न वाऽऽगमानुदात्तवचनात् ॥*॥ न वैतदपि प्रयोजनमस्ति ॥ किं कारणम् ? ॥ 'आगमानुदात्तवचनात्' । 'आगमा

प्र ] उदाहरणानामित्यर्थः ॥ यदयमिति । प्रत्ययस्य चेत्यनेनाद्युदात्तत्वे सिद्धे 'ञ्नित्यादिर्नित्य'मित्यनारम्भणीयं स्याद्यदि तदादेर्ग्रहणं स्यादित्यर्थः ॥ यत्र हीति । यातीत्यादौ पिति प्रत्यये धातोरुदात्तत्वं भवति । यातो यान्तीत्यादौ तु प्रत्ययाद्युदात्तत्वेन सति शिष्टत्वाद्बाध्यते । कृष्णतर इत्यादौ च प्रातिपदिकान्तोदात्तत्वं श्रूयते । यदि च प्रत्ययान्तस्याद्युदात्तत्वं स्यान्निर्विषयं धातुप्रातिपदिकान्तोदात्तत्वं स्यादित्यर्थः ।'आस्ते' 'शेते' इत्यादौ त्वासेर्धातोरनुदात्तत्वे सति धातुस्वरस्य सविषयत्वादज्ञापकत्वमिति चेत्, तत्रापि तदन्तविधिप्रसङ्गाज्ज्ञापकत्वमेव ॥ आगमानुदात्तार्थं वेति । आद्यन्तार्थं । लवितव्यमित्यादौ तव्यस्योत्पत्तिकाल एवाद्युदात्तत्वे कृते पश्चादिडागमः क्रियमाणः शेषनिघातेनाऽनुदात्तो भवति । अन्यथा परत्वादिडागमे कृते तस्य तद्भक्तत्वात्प्रत्ययग्रहणेन ग्रहणादाद्युदात्तत्वं क्रियमाणमिट एव प्रसज्येते-

उ.] याद्यविषयत्वादिति भावः । तद्ध्वनयन् व्याचष्टे—उत्पद्यमान एवेति । तथा चेह करणे प्रत्ययस्याद्युदात्तत्वाऽभावात् परिभाषोपस्थितिरिति भावः । ञ्नित्यादिरिति ञ्निदन्तस्य ञ्निति परे पूर्वस्य वाद्युदात्तत्वविधायकम् । ननु प्रत्ययस्येत्यनेन सिद्धे 'ञ्नित्यादि'रिति सूत्रं स्वस्मिन्नेव तदादितदन्तग्रहणाऽभावस्य ज्ञापकं किन्न स्यादिति चेन्न ; प्रथमे 'ञ्नित्यादि'रिति सूत्रे विरोधोपस्थित्यभावेनोत्तरकालिकप्रत्ययस्येत्यस्य बोध एव तदुपस्थित्या तत्रैव तदभावस्यानेनाश्रयात् ॥ प्रातिपदिकान्तोदात्तत्वमिति । 'स्वरविधौ सद्वान कार्यी'त्यर्थस्य षष्ठे वक्ष्यमाणत्वादनुदात्तत्वं सर्वस्येति तात्पर्यम् ॥ पूर्वप्रयोजनस्य ज्ञापकेन खण्डनादाह—तर्ह्यर्थे इति । अन्यथेति । षष्ठे सूत्रकरण इत्यर्थः । तस्मादागमाऽनुदात्तत्वसिद्धये इह वचनमिति भावः । एतदु-

१ 'स्वरविधौ' पाठः क्वचित् । २ 'गमस्याद्युदात्त' पा० । ३ 'प्रत्ययस्ये' पा० ।

मनुदात्ता भवन्ती'ति वक्ष्यामि ॥ के पुनरागमा अनुदात्तत्वं प्रयोजयन्ति ?॥ इट् लविता ॥ इट्लावच्च प्रयोजयति ॥ इदमिह संप्रधार्यम्–इट् क्रियता-माद्युदात्तत्वमिति, किमत्र कर्तव्यम् ? ॥ परत्वादिडागमः ॥ नित्यमाद्यु-दात्तत्वम् । कृतेऽपीटि प्राप्नोत्यकृतेऽपि प्राप्नोति ॥ इडपि नित्यः । कृते-प्याद्युदात्तत्वे प्राप्नोत्यकृतेपि प्राप्नोति ॥ अनित्य इट् । अन्यथा स्वरस्य कृते आद्युदात्तत्वे प्राप्नोत्यन्यथा स्वरस्याऽकृते प्राप्नोति । स्वरभिन्नस्य[1] चाऽप्राप्नुवन्विधिरनित्यो भवति ॥ आद्युदात्तत्वमप्यनित्यम् । अन्यस्य कृते इटि प्राप्नोत्यन्यस्याऽकृते । शब्दान्तरस्य च[2] प्राप्नुवन्विधिरनित्यो भवति । उभयोरनित्ययोः परत्वादिडागमः ॥ अन्तरङ्गं तर्ह्याद्युदात्तत्वम् ॥ काऽन्तर-ङ्गता ? ॥ उत्पत्तिसन्नियोगेनाद्युदात्तत्वमुच्यते उत्पन्ने प्रत्यये प्रकृतिप्रत्ययाश्र-यित्वाद्गस्येडागमः ॥ आद्युदात्तत्वमपि नाऽन्तरङ्गं यावता प्रत्यय आश्रीयमाणे

प्र.]त्यर्थं ॥ के पुनरिति। अन्योऽत्र प्रष्टव्यः, न तु येन 'न वे'त्युक्तः स एव पृच्छति, विरोधात्॥ लवितेति। छट्, तिप्, डा, तासि, इट्। अत्र यदीटोऽनुदात्तत्वं न स्या-त्तदा तासिमन्नादिरुदात्तः स्यात्। शेषनिघातेन च तास्याकारोऽनुदात्त इत्युदात्तत्वेऽप्य-भावादुदात्तनिवृत्तिस्वर आकारस्य न स्यात्। इटस्त्वनुदात्तत्वे सति तास्याकार एवोदात्त इत्युदात्तनिवृत्तिस्वरः सिध्यति । स्वरभिन्नस्येति ॥ एवं स्वरोऽपि श्रुतिभेदहेतु-

उ.]त्वं भाष्यमेकदेश्युक्तिः ॥ भाष्ये–वक्ष्यामीति। व्याख्यास्यामि ज्ञापकादित्यर्थः ॥ अन्योऽत्रेति–शेषनिघातेनागमाऽनुदात्तत्ववादी । के पुनरित्यस्य शेषनिघातेन यत्र न सिध्यति ते के इत्यर्थः ॥ तृन्तृजन्तत्वे 'ञ्नित्यादि'नि 'चित' इति चोदात्तत्वे शेषनि-घातेन सिद्धेराह–लुडिति । षष्ठाऽध्याये 'अन्तस्य चे'ति सूत्रकरणवादी दर्शयति भाष्ये–इट्लवितेति । तद्भजन्याचष्टे–तासिमन्नादिरुदात्त इति । एवञ्च लवितेत्यादावुदात्तनिवृत्तिस्वरेणाऽन्तोदात्तत्वसिद्धिरागमानुदात्तत्ववचनस्य षाष्ठसूत्र-वादिमते फलमित्यर्थः ॥ अपर–फलं नास्तीत्याह–भाष्ये–इट्लावच्च प्रयोजय-तीति । षष्ठतृतीययोरन्यतरत्र पाठेऽपि अन्तरङ्गत्वात्पूर्वमेवाद्युदात्तत्वप्रवृत्त्या तत-शेषनिघातेनेटोऽनुदात्तत्वे उदात्तनिवृत्तिस्वरसिद्धेरित्यर्थः ॥ परोऽन्तरङ्गत्व-मपश्यन् स्वमते परत्वेन पूर्वमिडागमं स्थापयितुमाह—इदमिहेत्यादिना-परत्वादिडागम इत्यन्तेन ॥ अपरः स्वाशयमप्रकटयति–अन्तरङ्गन्तर्हीति । षष्ठे सूत्रकरणेऽपि ज्ञापकात्तदादिविध्यभावेनाऽन्तरङ्गत्वात्पूर्वं स्वरे पश्चादिटि उदात्त-निवृत्तिस्वरे शेषनिघातसिद्धेरागमाऽनुदात्तत्वं निष्फलमिति भावः । उत्पत्ति-सन्नियोगेनेति । उत्पत्तिमात्रनिमित्तत्वेनेत्यर्थः । नेदम्भाष्यं तृतीये सूत्रमिति

१ 'दिट्'। २ इद क्वचित्र। ३'च' क्वचित्र पा०। ४ 'आश्रिते' पा०। ५ 'तासि'।

दात्तो ङित्स्वे'त्याह ॥ नैतदस्ति ज्ञापकम् । वक्ष्यत्येतत् "यासुटो ङिद्वचनं पिदर्थमुदात्तवचनं चे"ति ॥ शक्यमनेनैवं वक्तुं-'यासुट्परस्मैपदेषु भवत्यपित् ङिद्भवती'ति । सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यं 'आगमा अनुदात्ता भवन्ती'ति ॥ शक्यं-मेवं लब्धुम् ॥ यद्यप्येव वचनाद्वापि ज्ञापकाद्वागमा अनुदात्ता भवन्ति, आगमैस्तु व्यवहितत्वादाद्युदात्तत्वं न प्राप्नोति ॥ 'आगमा अविद्यमानवद्भवन्ती'ति वक्ष्यामि । 'यद्यागमा अविद्यमानवद्भवन्ती'त्युच्यते-लविता-अत्रादेशो न

प्र.] त्सीयुटोऽनुदात्तत्वे सति 'इटोऽ'दित्यकारस्योदात्तत्वं सिध्यतीत्यर्थः ॥ पिदर्थमिति। 'चिनुया'दित्यादौ पित्त्वाद्यासुटोऽनुदात्तत्वप्रसङ्गे उदात्तवचनमित्यज्ञापकमित्यर्थः ॥ आगमैरिति। विच्छिन्नत्वादाद्युदात्तत्वस्य 'लविषीयें'त्यादौ प्रत्ययस्याद्युदात्तत्वं न प्राप्नोती-त्यर्थः । आरब्धे तु सूत्रे प्रत्ययसंज्ञासन्नियोगेन कृते आद्युदात्तत्वे भवन्त्यागमा इति

उ.] एव पृथक्प्रत्ययत्वे सीयुडन्तस्याङ्गत्वं स्यात् । तथा च तदन्तस्यापि लविषीढ्व-मित्यादौ गुणः स्यात् । इटोऽदित्यकारस्येति । अत्र स्वरितत्वं नाशङ्क्यम्, औपदे-शिकप्रत्ययत्वाऽभावात्, ङित्त्वाच्च ॥ भाष्ये-यद्ययं यासुडिति । न च परस्मैपद-निमित्तत्वादस्यादेशोत्तरम्प्रवृत्त्या पूर्वमेवाऽन्तरङ्गत्वात्परत्वाद्वा प्रत्ययाद्युदात्तत्वे ततो यासुडस्वरको वा स्यात्, शेषनिघातेनाऽनुदात्तो वेति चरितार्थमुदात्तग्रहणं कथं ज्ञापकमिति वाच्यम्, 'परस्मैपदेष्वि'त्यस्य विषयसप्तमीत्वमाश्रित्य लाऽवस्थायामेव यासुटि ततो लादेशे तन्निमित्तत्वाऽऽद्युदात्तत्वे यासुट सिद्धे उदात्तग्रहणं ज्ञापकमि-त्याशयात् ॥ भाष्ये-शक्यमेवं लब्धुमिति । एव रीत्येद लब्धु शक्यं, न त्वपूर्व वचनमेवेत्यर्थः ॥ यद्येव वचनादिति। 'तस्मि'न्निति परिभाषाबलेन विषयसप्तम्यनु-चितेति भावः । अथापीति । उक्त आशय । 'आगमैस्त्वि'त्यत्र दोष पाष्ट-वादिमत इत्याह-आरब्धे त्विति। तृतीये आरब्धे त्वित्यर्थः । प्रत्ययसंज्ञेति । लावस्थायां सीयुडादावप्याद्युदात्तत्वे क्षेत्रलस्थैवेति पूर्वं जाता अपि शेषनिघातेनाऽ-नुदात्ता भवन्तीत्यर्थः । एवञ्च तस्याऽनुदात्तत्वादाऽऽगमाऽनुदात्तत्ववचनमनावश्यक-मिति तात्पर्यम्। अङ्गसंज्ञा तु न, तस्या 'यदागमा' इति न्यायेन विशिष्टस्यैव प्रत्यय-ग्रहणेन ग्रहणात् । एवञ्च यासुटोऽपि शेषनिघातेनाऽनुदात्तत्वे प्राप्ते उदात्तग्रहणस्य चारितार्थ्येन ज्ञापकाऽसम्भवोऽपि ध्वनित । एवञ्च 'लविषीये'त्युदाहरणविषया 'क्रियमाणेऽपि प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वे'इत्यादिरेकदेश्युक्तेरसङ्गतेति बोध्यम् । ननु तृतीये सूत्रमतेऽपि 'अनुदात्तं पद'मित्यस्य परिभाषात्वात्तेनैव वाक्यतात्पर्यानाद्युदा-त्तत्वविधिकाले सन्निहितानामेव तेन निघातविधानात्पश्चात्सन्निहितस्येटो निघाताऽ-

१ 'मनेन वक्तु' पा० । २ 'मेवेद' पा० । ३ 'भवन्तीति' पा० ।

प्राप्नोति ॥ 'स्वरविधा'विति वक्ष्यामि॥एवमपि लविता—'उदात्तादनुदात्तस्य स्वरित' इति स्वरितत्वं न प्राप्नोति ॥ पाष्ठिके 'स्वर' इति वक्ष्यामि । एवमपि शिक्षिते²,—'निष्ठा च द्व्यजना'दित्येष स्वरः प्राप्नोति ॥ 'प्रत्ययस्वरविधा'विति वक्ष्यामि ॥ तत्तर्हि वक्तव्यम्—'आगमा अविद्यमानवद्भवन्ती'ति³?॥ न वक्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति—'आगमा अविद्यमानवद्भवन्ती'ति, यदयं 'यासुट्परस्मैपदेषूदात्तो ङिच्चे'त्याह ॥ नैतदस्ति ज्ञापकम् । वक्ष्यत्येतत्—"यासुटो ङिद्वचनं पिदर्थमुदात्तवचनं चे"ति । शक्यमनेन वक्तुं 'यासुट्परस्मैपदेषु भवति ङिच्च भवती'ति । सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यः 'आगमा अविद्यमानवद्भवन्ती'ति ॥*॥ आद्युदात्तस्य वा लोपार्थम्॥*॥ आद्युदात्तस्य तर्हि लोपार्थं प्रत्ययसञ्ज्ञासन्नियोगेनाद्युदात्तत्वमुच्यते ॥ प्रत्ययसञ्ज्ञासन्नियोगेनाद्युदात्तत्वे कृते

प्र ]न दोष ॥एवमपि लविते ति।तृजन्त वाद्युदात्तत्वेनेत्॥सदृशमिति।यदि प्रत्ययाद्युदात्तत्वे कर्तव्ये आदिस्थागमा चिह्नत्युक्ता 'चिनुयाता'मित्यादि यासुट प्रत्ययादित्वात्सिद्धमुदात्तत्वमिति तत्र कुर्वन्त् । इतन्तु प्रत्ययाद्युदात्तत्वे कर्तव्ये आगमाना

उ.]मागेरागमाऽनुदात्तत्ववचनमावश्यकमिति चेन्न , 'चिनुत' इत्यादौ धोरनुदात्तत्वसिद्धेऽस्मिन्निहितस्याऽपि तेन निघाताऽवश्यम्भावेन,'पदग्रहणं परिमाणार्थ'मिति वक्ष्यमाणया रीत्या न्यायसिद्धत्वेन च तन्मते वचनस्याऽनावश्यकत्वात् । न चैकपदे विशेषविधिं विना द्वयोरुदात्तयोरभावादुदात्तस्वरितयोरभावाच्च अस्वरकस्याऽच उच्चारणाऽभावादनुदात्तत्वमेवेति वाच्यम्, एकश्रुतिविषये उक्तस्वररहितस्याऽप्युच्चारणसत्त्वात् । एकश्रुतिशास्त्रस्य विषयत्वे सम्भवति निरवकाशत्वाऽसम्भवाच्च । अत एवा'नुदात्तपद'मित्यस्य चरितार्थम् । 'चिनु' इत्यत्र शेषनिघाताऽप्रवृत्तिस्तु हेरपित्त्वस्य 'अङ्गुदी'त्यादौ चरितार्थत्वेन प्रकृतेऽन्तरङ्गत्वात्परीति न्यायेन स्वरात्पूर्वं लुक प्रवृत्ता स्वीकृतास्यताऽऽगमस्या'नुदात्तपद'मित्यस्याऽऽगमेतरेति बोध्यम् ॥

'आगमा अनुदात्ता' इति न कर्तव्यं, किन्तु तेऽविद्यमानवदित्येव कार्यमित्याह पाठवादी भाष्ये—आगमा इति॥ 'लविते'त्यस्य लुडन्तत्वे तृजन्तत्वे वाऽन्तोदात्तत्वेन स्वरितप्राप्त्यभावादाह—तृजन्तं वाविति॥ कृतं त्विति । सत्यविद्यमानवत्त्वे तद्रहितप्रत्ययस्यैवाद्युदात्तत्वे शेषनिघातेनाऽऽगमानामनुदात्तत्वं सिद्धमिति भावः । शेषनिघातप्रवृत्ताऽनुदात्तत्वाज्ञाने उदात्तग्रहणं चरितार्थमिति दिक्॥एवञ्चागमाऽनुदात्तत्वं न तार्तीयसूत्रकृत्यम्, पाठेऽपि ज्ञापकेन सिद्धत्वादित्यभिमानेनैकदेशी उत्तरवार्तिकस्य 'वा'शब्दतदर्थं व्याचष्टे(भाष्ये)—आद्युदात्तस्य तर्हीति।प्रागुक्ते तत्स्वातिरीत्या ज्ञापकाऽ-

१ 'स्वरितो' पा० । २ 'चिन्वित' पा० । ३ 'भवन्तीति वक्तव्यम्' पा० ।

लोपे उदात्तनिवृत्तिस्वरः सिद्धो भवति,–सौप्नी माधुरीति । अत्र हि परत्वाल्लोपः स्वरं बाधेत ॥ ॥-॥न वा बहिरङ्गलक्षणत्वात् ॥४॥न वैतदपि प्रयोजनमस्ति ॥ किं कारणं ? ॥ 'बहिरङ्गलक्षणत्वात्' । बहिरङ्गलक्षणो लोपोऽन्तरङ्गः स्वरः । 'असिद्धं बहिरङ्गमन्तरङ्गे' ॥ अवश्यं चैषा परिभाषाऽऽश्रयितव्या ॥८॥ अवचने हि ञ्नितिकित्स्वरप्रसङ्गः ॥८॥ अक्रियमाणायां ह्यस्यां परिभाषायां क्रियमाणेऽपि प्रत्ययसंज्ञासनियोगेनाद्युदात्तत्वे ञ्नितिकित्स्वरप्रसङ्गः स्यात्–औत्सी कसिकी आग्नेयीति । अत्र हि परत्वाल्लोपो ञ्नितिकित्स्वरान् बाधेत॥ नैष दोषः , ञ्नितिकित्स्वराः प्रत्ययस्वरापवादाः । न चाऽपवादविषये उत्सर्गोऽभिनिविशते । ३ पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः ३ । १प्रकल्प्य वापवादविषयं तत उत्सर्गोऽभिनिविशते१।न तावदत्र कदा चित्प्रत्ययस्वरो भवति,अपवादान् ञ्नितिकित्स्वरान् प्रतीक्षते॥ कसिक्यां भूयान् परिहारः,अन्य-

प्र ]मविद्यमानत्व ज्ञापयतीत्यर्थः ॥ सौप्नीति। विभज्याऽन्वाख्यानपक्षे सौप्न अ ई इति स्थिते 'प्रत्ययस्य च'इत्याद्युदात्तत्वा परत्वाद्यस्येति लोपे कृते उदात्तनिवृत्त्यभावादुदात्तनिवृत्तिस्वर ईकारस्य न स्यात्। प्रत्ययसंज्ञासंनियोगेन त्वाद्युदात्तविधाने न दोष ॥ बहिरङ्गलक्षण इति । स्वार्थादीनां क्रमेण प्रतीतिरिति स्त्रीत्वनिमित्त ईकारो बहिरङ्ग इति तन्निमित्तो लोपो बहिरङ्गः । अथ वाऽङ्गस्य भस्येत्याद्यपेक्षणाल्लोपो बहिरङ्गः । औत्सीति। उत्से जाता॥ 'उत्सादिभ्योऽञ्' ङीप्। यद्यत्र परत्वाल्लोप आद्युदात्तत्वं निञ्त्स्वरं बाधेत तदा प्रत्ययस्योदात्तत्वादुदात्तनिवृत्तिस्वर ईकारस्य स्यादेव । कसिकीति । कसेन क्रीता । 'कसाट्ठिन्'निति ठिठनि ङीपि च ठकारस्याऽदृन इकादेशे उदात्त'व मन्यते । आग्नेयीति । अग्नेरपत्यं स्त्री । 'इतश्चानिञ' इति ढक् । 'आयन्नादिषु उपदेशिवद्वचनं स्वरसिद्ध्यर्थ' मिति पूर्वमेयादेशः , ङीप्। अत्रोदात्तनिवृत्तिस्वरो न स्यात्। अन्तरङ्गत्वे तु स्वरस्याश्रीयमाणे दोषाऽभाव ॥ कसिक्यामिति । ठस्थित्कारणात्पूर्वमिकादेशः, ततः प्रत्ययाद्युदात्तत्व-

उ.]सम्भवे तु आगमानुदात्तत्वरूपं प्रयोजनं स्थितमेव।ननु ङीबुत्पत्तेः प्रागेवाऽण आद्युदात्तत्वे कृते उदात्तनिवृत्तिस्वरः सिद्धस्तत्राह–विभज्येति॥ बहिरङ्ग इति । तेन विभज्यान्वाख्यानेऽपि न दोष इति भावः ।अथ वाङ्गस्येत्यादि चिन्त्यं,मङ्गाङ्गनबहिरङ्गत्वस्य शास्त्रेऽनाश्रयणादित्युक्तं। पूर्वमेयादेशो ङीबिति।योपधत्वाच्च ङीपिति भावः ।

भाष्ये–न चापवादेति । नित्स्वरमिव प्रत्ययस्वरमपि बाधित्वा परत्वादस्वरकस्यैव लोपे औत्सी कसिकीत्यत्रोदात्तनिवृत्तिस्वरो न प्राप्नोतीति भावः । प्रतीक्षत इति । लोपोत्तरमपि प्रत्ययलक्षणेन तत्प्रवृत्तेरिति भावः । ठच इति ।

१ 'माधुरी' पा०। २'स्वरस्याप' पा० ।३'स्थाने सौ'पा०। ४ 'प्रत्ययस्याद्युदात्त' ।

तिषेधेन । पित्स्वरस्यावकाशः—पचति पठति । तिन्स्वरस्यावकाशः—कार्यं हार्यम् । इहोभयं प्राप्नोति—कार्या हार्या । तित्स्वरो भवति विप्रतिषेधेन ॥*॥ चित्स्वरश्चापि पित्स्वरात् ॥*॥ *पित्स्वराच्चित्स्वरश्चापि भवति विप्रतिषेधेन* ॥ चित्स्वरस्यावकाशः—चलनः, कम्पनः । पित्स्वरस्य स एव । इहोभयं प्राप्नोति—*आम्बष्ठ्या सौवीर्या* । *चित्स्वरो भवति विप्रतिषेधेन* । ॥*॥ न वाद्युदात्तत्वस्य प्रत्ययसंज्ञासन्नियोगात् ॥*॥ न वाऽर्थो विप्रतिषेधेन ॥ किं कारणम् ? ॥ 'आद्युदात्तत्वस्य प्रत्ययसंज्ञासन्नियोगात्' । प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वं कृते सतिशिष्टत्वादाद्युस्वरो भविष्यति ॥ अयं चाऽप्ययुक्तो विप्रतिषेधः—पित्स्वरस्य तित्स्वरस्य च ॥ किं कारणम् ? ॥ ॥*॥ टापि स्वरितेनैकादेशः ॥*॥ टापि स्वरितेनैकादेशो भविष्यति ॥ इदमिह सम्प्रधार्यं,—स्वरितत्वं क्रियतामेकादेश इति, किमत्र कर्तव्यम् ? ॥ परत्वात्स्वरितत्वं॥ नित्य एकादेशः । कृते स्वरितत्वे प्राप्नोत्यकृतेऽपि ॥ स्वरितत्वमपि नित्यं, कृतेऽप्येकादेशे प्राप्नोत्यकृतेऽपि ॥

अनित्यं स्वरितत्वम्, अन्यस्य कृते एकादेशे प्राप्नोत्यन्यस्याऽकृते। शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ॥ एकादेशोऽप्यनित्यः । अन्यथास्वरस्य कृते स्वरितत्वे प्राप्नोत्यन्यथास्वरस्याऽकृते [स्वरितत्वे] । स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति ॥ [उभयोरनित्ययोः परत्वात्स्वरितत्वम्] ॥ अन्तरङ्गस्त्वेकादेशः ॥ काऽन्तरङ्गता ? ॥ वर्णावाधिश्चैकादेशः पदस्य स्वरितत्वम् ॥ स्वरित-

प्र.] पित्स्वरादिति।एतदनाऽनुदात्तत्वविधाने सिद्ध्यति नाऽन्यत्रेति भावः।कार्येति। स्वरितत्वात्प्रागेकादेशं मन्यते । तत्रैकादेशस्य पूर्वं प्रत्यन्तवद्भावात्तित्स्वरः प्राप्नोति । परं प्रत्यादिवद्भावात्तु पित्स्वरप्रसङ्गः ॥ नवेति । प्रत्ययसंज्ञासन्नियुक्तस्वरस्याऽन्तरङ्गत्वान्नास्ति विप्रतिषेध इति भावः ॥ परत्वात्स्वरितत्वमिति। अन्तरङ्गत्वं स्वरितत्वस्याऽनपेक्ष्यैवेदमुक्तम् । स्त्रीत्वापेक्षटाबिमित्तो ह्येकादेशो बहि-

उ.] 'धातोरि'त्यस्याप्यपवादः स्यादिति शङ्कावारणाय तदुक्तेः ॥ नाऽन्यत्रेति। तथा च तित्स्वरात्पित्स्वर एव परः स्यादिति भावः । 'कार्ये'त्यत्रोभयप्राप्तिं दर्शयति—तत्रैकादेशस्येति ॥ प्रत्ययसंज्ञासन्नियुक्तेति । ननु धात्वन्तरमेऽपि आरे कृते धातुसंज्ञानं परत्वात्पूर्वं, विषयभेदात्तत्समकालमेव वा प्रत्ययस्वरप्रवृत्तौ पश्चात्प्रवर्तमानस्य धातुस्वरस्य सतिशिष्टत्वमस्त्येवेति चेत्, सत्यं, संज्ञास्वरयोर्विषयभेदेन विरोधाऽभावात् परत्वाऽप्रवृत्तेः । यौगपद्यमपि न, ज्ञानयौगपद्याऽसम्भवात् ॥ स्त्रीत्वापेक्षेति । वस्तुतः शब्दशास्त्रलादर्शाविश्याऽपेक्षाकृतं बहिरङ्गत्वमप्रयोजकमिति भाष्याशयः । 'कार्ये'त्यस्य विभज्यान्वाख्याने इदम् । भाष्ये—पदस्य स्वरितत्वमिति । 'अनुदात्तपद'मित्यनेनैकवाक्यत्वादिति भावः । एवं च वर्णसमूहरूपपद-

स्वमप्यन्तरङ्गम् ॥ कथम् ? ॥ वक्ष्यत्येतत्-"पदग्रहणं परिमाणार्थ"मिति । उभयोरन्तरङ्गयोः परत्वात्स्वरितत्वं, स्वरितत्वे कृते आन्तर्यतः स्वरितानुदात्तयोरेकादेशः स्वरितो भविष्यति ॥ अयं चाप्ययुक्तो विप्रतिषेधः-चित्स्वरस्य चित्स्वरस्य च ॥ किं कारणम् ॥*॥ चापि चित्करणात् ॥-॥ चापि चित्करणसामर्थ्यादन्तोदात्तत्वं भविष्यति ॥ [ आद्युदात्तश्च । अनुदात्तौ सुप्पितौ ] ॥

गुप्तिज्किद्भ्यः सन् ॥ ३।१।५ ॥

[गुप्तिज्किद्भ्यो मानादिभ्यः अनुदात्तेत । ] । गुपादिष्वनुबन्धकरणं किमर्थम् ? ॥ ॥*॥ गुपादिष्वनुबन्धकरणमात्मनेपदार्थम् ॥*॥ गुपादिष्वनुबन्धाः क्रियन्ते ।

---

प्र ]ङ्ग । आन्तर्यत इति । स्वरितस्तनुदात्तोऽपि निघात इति स्वरितोऽनुदात्तयोः स्वरितोऽन्तरतम ॥ चापीति । यदि सामान्यग्रहणाऽविघातार्थत्वमेव चकारस्य भविष्यत्प्रत्ययप्रकरण एव यस्क्ताप्ययुक्तस्यनेति भाव । [आद्युदात्तश्च । अनु ।]॥

गुप्तिज्कि । गुपिति । अनुबन्धग्रहणाय तिजि पठितो न त्वयमनुदात्तत् । गुपादिष्विति । नित्यसन्विषयत्वात्केवलेभ्यो ल्यायनुपपत्तिप्रश्न ॥ आत्मनेपदा-

---

उ ]साऽपैक्षत्वात्स्वरितत्वं बहिरङ्गमित्यभिमान ।परिमाणार्थमिति।'पदस्य यावद्भवति यावतश्च भवति तावतस्तावति च सन्निहितस्यैकार्थे सर्वमनुदात्तम्भवती'त्यर्थ इति भाव । तेन पदसमुदायस्य न स्वरप्रसक्तिरसन्निहितस्य च सिद्ध्यतीति बोध्यम् । अतएव धातोरित्यादिनाऽस्यैकवाक्यतेति दिक् ॥ सामान्यग्रहणेति । अनुबन्धकत्वसम्पादनद्वारेति भाव । एव शेषनिघातद्वाराऽऽगमाऽनुदात्तत्वसिद्धये एतावान्स्य सूत्रस्य पाठ । 'आगमाऽनुदात्तार्थं चे'त्यत्रोपसमोपा सिद्धान्तयुक्ति । वचनान्तरकरणे गौरवम् । तापकन्तु नास्तीति पूर्वमेव निरूपितम् ॥ [ आद्युदात्तश्च ]

गुप्तिज् । 'परत्रैव चितिरस्य' इति व्याप्तिप्रतीकारादेव व्यवहारात्जुगुप्सादेर्निन्दादावेव व्यवहारात्, 'गुप गोपने' 'तिज निशाने' इति प्रयोगाच्च, 'विचिकित्सा तु संशयः' इत्यादिकोशबलाचाऽर्थविशेषावहितेभ्य एव सन्निति बोध्यम् ॥ वेदे 'विचिकित्सती'ति परस्मैपदप्रयोगदर्शनादाह-अनुबन्धेति । धात्वाऽग्रहणे सूत्रे एव तदभाव आगद्व्येनेति तन्निवारणायेत्यर्थ । भाष्येऽनुदात्तेत्करणं किमर्थमिति वक्तव्येऽनुबन्धकरणमित्युक्तिर्दानशानोर्ज्ञोः स्वरितेत्त्वनोधनाय। यत्तु वृत्त्यादौ वधेरप्युदात्तेत्त्वमुक्तं तत्र मानं चिन्त्यम्, भाष्यविरोधश्च । एवं कित परस्मैपदित्वेऽपि भाष्याऽनुग्रहश्चिन्त्य । वैदिकपरस्मैपदप्रयोगास्तु छान्दसत्वादपि सुगमाः । लोके त्वात्मनेपदमेवाचितम् । एतच्च वधेरपि स्वरितत्वं परस्मैपदित्वमेव बोधितमिति वदन्ति । केवलेभ्य इति । सनन्ते प्रतीयमानार्थप्रतीत्य इत्यर्थ । तदर्थवृत्तीनामेवाऽनुदात्तेत्त्वादिति भाव । अत एवाऽर्थान्तरेऽननुबन्धकत्वमिति वृत्त्यादावुक्तम् ॥

[ किं प्रयोजनम् ? ॥ 'आत्मनेपदार्थम्' ] ॥ आत्मनेपदं यथा स्यात् ॥ अथ क्रियमाणेष्वप्यनुबन्धेषु आत्मनेपदं न प्राप्नोति ॥ किं कारणम् ?॥ सना व्यवहितत्वात् ॥ 'पूर्ववत् सनः' इत्येव भविष्यति ॥ 'पूर्ववत् सनः' इत्युच्यते न चैतेभ्यः प्राक् सन आत्मनेपदं, नापि परस्मैपदं पश्यामः ॥

एवं तर्ह्यनुबन्धकरणसामर्थ्याद्भविष्यति॥ अथ वा अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भविष्यति । तद्यथा—गोः सक्थनि कर्णे वा कृतं लिङ्गं गोर्विशेषकं भवति ॥ यद्यवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति तर्हि जुगुप्सति मीमांसयतीत्यत्रापि प्राप्नोति ॥ अवयवे कृतं लिङ्गं तस्य समुदायस्य विशेषकं भवति यं समुदायं योऽवयवो न व्यभिचरतीत्यनङ्गं ने व्यभिचरति णिच् पुनर्व्यभिचरति । तद्यथा—गोः सक्थनि कर्णे वा कृतं लिङ्गं गोरेव विशेषकं भवति न गोमण्डलस्य ॥ [ गुप्तिज्किद्भ्यः सन् ] ॥

मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥ ७।१।६ ॥

॥ ॥ अभ्यासदीर्घत्वेऽवर्णस्य दीर्घप्रसङ्गः ॥२॥ अभ्यासस्य दीर्घत्वेऽवर्णस्य दीर्घत्वं प्राप्नोति—मीमांसते ॥ ननु च ह्रस्वे कृते दीर्घत्वं भविष्यति ॥ कथं पुनरुत्पत्तिसन्नियोगेन दीर्घत्वमुच्यमानमिव प्रतीक्षते ॥ अथ कथमभ्यासं प्रतीक्षते ?॥ वचनादभ्यासं प्रतीक्षते । [ अभ्यासस्य दीर्घत्वविधानात् ] । ह्रस्वं पुनर्न

प्र ] र्थमिति । सन्नन्तेभ्य इति भावः ॥ पूर्ववदिति । लिङ्गानिर्देशादिति भावः ॥ न चैतेभ्य इति । कार्यानिर्देशोऽस्मिन् । लिङ्गानिर्देशे तु अनुबिद्धोपेतीत्यादावप्यात्मनेपदप्रसङ्ग इति भावः ॥ एवं तर्हीति । सना व्यवधानेऽपीति भावः । अथ वेति । सनोऽवयवे लिङ्गाऽऽसङ्गस्य प्रयोजनं नास्ति तत समुदायार्थं एवाऽऽस्थावितीति भावः । शिष्टं भाष्य 'पूर्ववत्सनः' इत्यत्र विस्तरेण व्याख्यानं तत एवावधार्यम् ।[गुप्तिज्]॥

मान्बध । सामान्यविधेर्विशेषविधिर्बाधक इत्याह—अभ्यासदीर्घ इति ॥ अथ

उ ] भाष्ये न चैतेभ्य इति । सनन्तो प्रतीयमानार्थवृत्तिभ्य इत्यर्थः । नाऽपि परस्मैपदमिति । वधदानशानभिप्रायेणेदम् ॥ यत्राऽवयवे इति । भाष्ये—अवयवे कृतमित्यस्य 'निष्फलत्वे'दिति शेषो बोध्य ॥ [ गुप्तिज्किद्भ्यः सन् ] ॥

मान्बध । ननु परत्वाद्दित्वे दीर्घप्राप्ते कथमवर्णस्य दीर्घोऽत आह—सामान्येति ॥ भाष्ये—उत्पत्तिसन्नियोगेनेति । ननु धातुमात्रोद्देशेन सन, सन्निमित्तकाभ्यासोद्देशनश्च दीर्घ इति कथं तयो सन्नियोग इति चेन्न,बोधसन्नियोगेन तदुत्पत्तिसन्नियोगोऽपीत्यभिमानात् ॥ वचनादभ्यासमिति । एवञ्च सन्नियोग एवाऽसिद्ध

१ इदं क्वचिदपि नास्ति । २ इदं क्वाचित्कम् । ३ 'भवति' पा० । ४ इदं क्वचिन्न । ५ 'सन्नन्तमेव च' पा० । ६ 'सिनन्त' पा० । ७ 'दाभ्यासदीर्घ' । ८ इदं न सर्वत्र ।

प्रतीक्षते॥ ॥*॥ न वाऽभ्यासविकारेष्वपवादस्योत्सर्गाऽबाधकत्वात् ॥*॥ न वैष दोषः ॥ किं कारणम् ? ॥ 'अभ्यासविकारेष्वपवादस्योत्सर्गाऽबाधकत्वात्' । 'अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्त'इत्येष दीर्घत्वमुच्यमानमित्त्वं न बाधिष्यते॥अथ वा 'मान्बधदान्शान्भ्य ई चाऽभ्यासस्ये'ति वक्ष्यामि॥एवमपि हलादिशेषापवाद ईकारः प्राप्नोति॥'ई चाऽच' इति वक्ष्यामि॥'अथ वा'मान्बधदान्शान्भ्यो दीर्घश्चेतोऽभ्यासस्ये'ति वक्ष्यामि॥सिध्यति॥ सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवाऽस्तु॥ननु चोक्तम्—'अभ्यासदीर्घे तेऽत्वेणस्य दीर्घत्वप्रसङ्ग'इति॥ परिहृतमेतत् 'न वाऽभ्यासविकारेषु अपवादस्योत्सर्गाबाधकत्वा'दिति । अथ वा

प्र ]कथमिति।यथाऽभ्यासस्यानि वचनादीर्घत्वमभ्यासस्य तत्र तथा वचनान्तरविहित मित्त्वमपीति भावः ॥ अभ्यासविकारेष्विति । एतच्च 'दीर्घोऽकित'इत्यनाकित्त्वप्रहणेन ज्ञापयिष्यते ॥ ई चाऽच इति । अचन्तस्यार्थं । न चाऽकृते हलादिशेषे ऽचन्तत्वं भवति ॥ अभ्यासविकार इति । न चैत्वमेव । तथा हि लोपस्य तावदादेशो निमित्तमप्यस्य , तस्याऽभावरूपत्वात्। यदि च ह्रस्वस्य दीर्घत्वं स्यात्तर्हि निर्देशोऽनर्थकः स्यात् । दीर्घश्रुत्याऽपरिभाषायाऽस्थानादनन्तस्य दीर्घविधानादी र्घस्य ह्रस्वस्य वा दीर्घविधाने विशेषाऽभावात्। तस्मादित्त्वमेव तद्विधेन प्रत्याख्यते। अथ वाऽऽह्वेत सति यो निर्दिष्टो विकार 'मस्यत' इति, तस्यैव ग्रहणं विज्ञायते । ह्रस्वश्च मानादीनामिव वधेरपि पर्यन्यत्वग्रहणप्रवृत्त्या भवति ॥ [मान्बधदान् ]॥

उ ]इति भावः।तत्र पूर्वं विशेषविहितत्वेनैव बाधकत्वमुक्तं कैयटेनातः केचित्।परे तु तद्बाधधर्मविरोधेनाऽनैमित्तिकत्वरूपमन्तरङ्गत्वं बोध्यत इति वदन्ति । न प्रतीक्षत इति । किन्तु विशेषविहितत्वादन्तरङ्गत्वाद्वा बाधत एवेति भावः ॥ न वाऽभ्यासवि कारेष्वपवादेति । अपवादपदं बाधकोपलक्षणम् । एतेन यत्राऽन्यतरप्रत्ययुत्तर- मन्यतरस्य प्रत्ययोग्यताऽभावस्तत्रैवेदमिति परास्तम् । एतच्चेति । यचन्यत इत्यादौ लुकि अनन्तत्वाऽभावाद्दीर्घाऽप्राप्तौ 'चरिकर्ती'त्यादीरिको दीर्घविधिसामर्थ्येन तत्प्राप्तौ। व्यर्थमकित इति ग्रहणार्थज्ञापकमित्यर्थः । तेन यथायोगं पूर्वं तुमर्गप्रवृत्तावपवादप्रवृत्ति , अपवादप्रवृत्तावपि वा पुनरुत्सर्गप्रवृत्तिरिति बोध्यम् ॥

यद्यपि 'ई चाऽच' इत्यनाऽच इत्यस्य वैयधिकरण्येनाऽन्वयेऽपि न क्षतिस्तथापि सामानाधिकरण्यस्य न्याय्यत्वादाह—अजन्तस्येति ॥ 'ई चाऽचोऽभ्यासस्य', 'दीर्घश्चेतोऽभ्यासस्ये'ति पक्षद्वयेऽपि सूत्रभेदो दूषणम्॥ ननु तद्विधेन ह्रस्वग्रहणे वधे र्व्यावर्त्यं ,तत्र फलाऽभावेन ह्रस्वाऽभावादत आह—ह्रस्वश्चेति।अत्र 'न वाऽभ्यासवि कारे'ष्वित्येव समाधानं युक्तम् ॥ [ मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ] ॥

१ 'हलादि' शे' पा० । २ विशेषेण इत्यर्थ ।

नैवं विज्ञायते 'दीर्घश्चाऽभ्यासस्ये'ति ॥ कथं तर्हि ? ॥ 'दीर्घश्च आभ्यासस्ये'ति ॥ किमिदमाभ्यासस्येति ? ॥ अभ्यासस्य विकार आभ्यासः, तस्येति ॥

**धातो' कर्मणः समानकर्तृकादिच्छायां वा ॥ ३।१।७ ॥**

धातोरिति किमर्थम् ? ॥ प्रकर्तुमैच्छत् प्राचिकीर्षत्। सोपसर्गादुत्पत्तिर्मा भूदिति ॥*॥ कर्मग्रहणात्सन्विधौ धातुग्रहणमनर्थकम् ॥*॥ कर्मग्रहणात्सन्विधौ धातुग्रहणमनर्थकम्। 'कर्मणः समानकर्तृकादिच्छायां वा सन् भवती'त्येव धातोरुत्पत्तिर्भविष्यति ॥*॥ सोपसर्गं वै कर्म ॥*॥ सोपसर्गकमिह वै कर्म, तत उत्पत्तिः प्राप्नोति ॥*॥ सोपसर्गं कर्मेति चेत् कर्मविशेषकत्वा-

प्र.] धातो कर्मण । धातोरर्थद्वारके कर्मत्व-समानकर्तृकत्वे। ते चेच्छाया प्रत्ययार्थत्वेऽपि सन्निधानात्तदपेक्षे एव गृह्येते। एवं च प्रकृत्यर्थोपसर्जन प्रत्ययार्थो भवति, अन्यथा प्रकृतिप्रत्ययार्थयोरसंबन्ध स्यात्। वार्तिकाऽवतारणाय प्रश्नं करोति—धातोरिति किमर्थमिति। अयं भाव —धातुरेव क्रियावाची, उपसर्गस्तु विशेषक। ततश्चाऽर्थद्वारके कर्मत्वसमानकर्तृकत्वे धातोरेव संभवत इति ॥ सोपसर्गादिति। सङ्घातेन विशिष्टा क्रिया प्रतिपाद्यत इति तत एव सनुत्पत्तिप्रसङ्ग'। ततश्च सङ्घातादेरेव द्विर्वचनादिप्रसङ्ग इति भाव ॥ कर्मग्रहणादिति। एतदुपलक्षणम्, तेन 'समानकर्तृकग्रहणा'दित्यपि बोद्धव्यम् ॥ सोपसर्गमिति। सङ्घातस्य क्रियाविशेषाऽभिधायित्वादिति भाव ॥ कर्मविशेषक इति। अत एव वचनात्

उ.] धातो कर्मणः। शब्दस्य धातो कर्मत्वसमानकर्तृकत्वाऽसम्भवात्सूत्रे सामानाधिकरण्याऽनुपपत्ति। ताभ्यां वार्तिकोक्तधातुग्रहणप्रत्याख्यानाऽनुपपत्तिश्चेत्यत आह—अर्थद्वारके इति। नन्विच्छायामिति सप्तम्यन्तत्वात्कर्मण इत्यादिनाऽन्वयाऽयोग्यमितीच्छारूपेऽर्थे धात्वन्तरार्थकर्मणस्तेन समानकर्तृकादपि सन्स्यादत आह—ते चेति। सन्निधानाद्विभक्तिविपरिणामेन तयोरपि सा विशेषणमिति भाव.।

न केवलं सन्निधानादेव तयोरिच्छाऽपेक्षत्व किन्तु प्रकृतिप्रत्ययार्थयो सामर्थ्याऽनुपपत्त्याऽपीत्याह—एवंहीति। वार्तिकावतारणायेति। धातुपदस्य प्रयोजने दर्शिते तत्सिद्धिस्तदन्तरेणाऽपि भवतीति वार्तिकेन दर्शयितु शक्यत इति भाव। सोपसर्गव्यावृत्तिर्न फलमित्याह—धातुरेवेति। प्रकृष्टस्येच्छाविषयत्वप्रतीतिर्विषयसामानाधिकरण्यात्कटसामानाधिकरण्याद्वोपपादे कर्मत्वमेवेति भाव ॥ भाष्ये—प्राचिकीर्षदिति। यद्यपि स्त्र्यपि द्विर्वचने दोषस्तथाप्यट्कृतमधिकं दोष वक्तुं ल्ङुदाहृत। सङ्घातेनेति। धातुपदाऽभावे विशिष्टस्यैवेच्छाविषयत्वेन कर्मत्वात्तदाचकादेव सन्प्रसङ्ग इति भाव ॥ सुबन्तार्थस्याऽपि कर्मत्वात्तत सन्स्यादत आह—एतदिति।

१ इदं क्वाचित्कम्। ३ इह प्रायो टुप्तम्।

॥*॥सुबन्ताद्वाऽप्रसङ्गः क्यजादीनामपवादत्वात्॥*॥ सुबन्ताद्य सनोऽप्रसङ्गः ॥ किं कारणम् ?॥ 'क्यजादीनामपवादत्वात्'। सुबन्तात्क्यजादयो विधीयन्ते तेऽपवादत्वाद्बाधका भविष्यन्ति।

॥*॥अनभिधानाद्वा॥*॥अथ वाऽनभिधानात्सुबन्तादुत्पत्तिर्न भविष्यति। नहि सुबन्तादुत्पद्यमानेन सना इच्छाया अभिधानं स्यात्। अनभिधानान्नात्र उत्पत्तिर्न भविष्यति ॥ इयं तावदगतिकगति 'र्यदुच्यते–'अनभिधाना'-दिति। यदप्युच्यते—'सुबन्ताद्वाऽप्रसङ्गः क्यजादीनामपवादत्वा'दिति। भवेद्यस्मादिदमप्रसङ्गः स्यादात्मेच्छायाम्। परेच्छायां तु प्राप्नोति–'राज्ञः पुत्रमिच्छती'ति ॥ एवं तर्हीदमिह व्यपदेश्यं सदाचार्यो न व्यपदिशति ॥ किम् ?॥ समानकर्तृकादित्युच्यते न च सुबन्तस्य समानः कर्ताऽस्ति।

---

प्र ]तिपदिता'दिति तु नोक्तम्। 'कर्मण' इति वचनात्, कर्मत्वे च सति सुबन्ततायाः अवश्यं भावात्। क्यजादीनामिति। कर्मनामसन्निधौ, कर्मविशेषात्सुबन्तात्क्यजादय इति भावः। यत्र चोत्सर्गापवादौ विभाषा तत्राऽपवादेन मुक्त उत्सर्गो न भवति, अपि तु वाक्यमेव। इयं तावदिति। लक्षणाश्रया लक्ष्यस्य व्यवस्था न्याय्या, लक्ष्यद्वारेण तु लक्षणव्यवस्थापनं गत्यन्तराऽभावादिति भावः। व्यपदेश्यं सदिति। सच्छोभनं व्यपदेशार्हं तत्र व्यपदिशति। न च सुबन्तस्येति। पुना-दे' सत्त्वभूतार्थाभिधायित्वादाख्यातस्यैव साधनसम्बन्धयोग्यत्वादिति भावः। 'कट करोती'त्यत्रापि सुबन्तेन सिद्धरूपोऽर्थोऽभिधीयते। शब्दान्तरसन्निधानात्तु साध्यता प्रतीयते। यथोक्तं हरिणा–'निर्वर्त्यो वा विकार्यो वा प्राप्यो वा साधनाश्रयः। क्रियाणामेव साध्यत्वात्सिद्धरूपोऽभिधीयते' ॥ इति। आसितुमिच्छतीति। तुमुन्नन्तस्य साध्यरूपाऽभिधायित्वादस्ति कर्ता योग इति भावः। 'क्वचि

---

उ.]नैनाऽऽचार्येण तयोः पृथक्त्वेन कल्पनात् क्रियावाचिनो च धातुत्वादुपसर्गरहित एव क्रियावाचीति निर्णय इत्यर्थः। पार्थक्यकल्पनाफलम्–आऽऽदिव्यवस्था। 'समानकर्तृ-का'दित्यनेन क्रियावाचकादेव सनो विधानमिति न तद्विरोधस्सानिति भावः। कर्मत्वे च सतीति। कर्मत्वादियोगित्वाद्विभक्तेरिति भावः। कर्मविशेषादिति। क्यजा-दीनामप्येकार्थीभाव एव प्रवृत्ते सनभावे तदभावात्तु क्यजादीनां सावकाशतेति भावः। एतेन क्यजाद्यभावे सन्स्यादित्यपास्तम्। तद्ध्वनयन्नाह—यत्र चेति। लक्षणाश्रयेति। बोद्धृणां लक्षणैकचक्षुष्कत्वादिति भावः। भाष्ये–आत्मेच्छाया-मिति। 'कर्मभूता'दिति शेषः। साध्यस्यैवेति। साध्यत्वेन प्रतीयमानस्यैवेत्यर्थः। साध्यता प्रतीयत इति। सा च न कारकाऽवच्छेदिकेति भावः। साधनाश्रय

---

१ 'इच्छाभिधानमस्ति'। २ 'दित्यात्मेच्छाया'। ३ 'दिच्छायां चेदुच्यते' पा०।

नियमार्थेऽपि हि तस्य धातुग्रहणं इह प्रसज्येत—'यज्ञदत्तमिच्छति देवदत्तो[2] यज्ञदत्तेने'ति॥*॥ कर्मसमानकर्तृकग्रहणानर्थक्यं चेच्छाभिधाने प्रत्ययविधानात्॥*॥ कर्मसमानकर्तृकग्रहणं चानर्थकं॥ किं कारणम्?॥ 'इच्छाभिधाने प्रत्यय-विधानात्'[1]। इच्छायामभिधेयायां सन्विधीयते। ॥*॥ अकर्मको ह्यसमान-कर्तृकोऽनभिधानम् ॥*॥ इच्छायामभिधेयायां सन्विधीयते। न चाऽकर्म्म-णोऽसमानकर्तृकाद्वोत्पद्यमानेन सनेच्छाया अभिधानं स्यात्। अनभिधानात्ततः[4] उत्पत्तिर्न भविष्यति। ॥*॥ अङ्गपरिमाणार्थं तु ॥*॥ अङ्गपरिमाणार्थं तर्ह्य-न्यतरत्कर्तव्यं कर्मग्रहणं धातुग्रहणं वा,—'अङ्गपरिमाणं ज्ञास्यामी'ति॥

किं पुनरत्र ज्यायः?॥ धातुग्रहणमेव ज्यायः। अङ्गपरिमाणं चैव विज्ञातं

प्र.]चितुं शक्नोतीति भावः। यज्ञदत्तमिच्छतीति। केवलस्य धातोः प्रयोगाऽभावात्प्र-त्ययोपादानं, धातोरेव तु सन्प्रसङ्ग इत्युच्यते। अत्र च क्रियात्मकर्तृकं सन्तमि-च्छत्यथ परकर्तृकमिति सन्देहाद्यदा समानकर्तृकत्वं नाऽवधार्यते तदा न भाव्यम्। यदा तु समानकर्तृकत्वं प्रतिपिपादयिषितं तदा भवितव्यमेव सना,—'साजिगमिषते वत्सो माते'ति। कर्मणेति। इच्छया कर्म ग्रहत्वं भाव्यतेति प्रत्यासत्त्या प्रकृत्यर्थ एव कर्मत्वेनाश्रयिष्यते न तु तद्व्यतिरिक्तमिति 'गमनेनेच्छती'ति सन्न भविष्यति। प्रत्यासत्त्यैव च समानकर्तृकत्वमाश्रयिष्यत इति 'देवदत्तस्य भोजनमिच्छती'-त्यत्रापि न भविष्यतीत्येतदकारणमूलमनभिधानम्। इह नित्यानां शब्दानां सद्भिः प्रयोगदर्शने सति साध्वसाधुविभागाय शास्त्रारम्भः। न च गमनेनेच्छति देवदत्तस्य भोजनमिच्छतीत्यत्राऽर्थे जिगमिषति बुभुक्षत इत्यादिप्रयोगोऽस्तीति किं तन्निवृत्त्य-र्थेन विशेषणोपादानेनेत्यर्थः। अङ्गपरिमाणार्थं त्विति। 'इच्छायां वे'त्येतावन्युच्यमाने यद्यपि प्रत्ययपरत्वेन पूर्वा प्रकृतिराक्षिप्यते तथापि 'प्राऽचिकीर्ष'दित्यादौ सोपसर्गस्या-

उ.]दत्त' इत्यादौ निष्ठान्तात्स्वार्थादिति तु नाऽऽपाद्यं, कर्तृमात्रबोधकत्वाऽभावात्, सति-रिक्तस्य कर्त्रादेरपि भानादित्याहुः। सनाऽन्तात्प्रत्ययोऽविशेषं इत्याह—केवलस्येति। यदा त्विति। सदन्तमिच्छतीति विग्रहवाक्यस्य सन्प्रकृतिधातुगर्भस्य सम्भवादिति भावः। नन्वनभिधानादिति भाष्यमनुपपन्नं, समानकर्तृत्वादेर्योग्यताशरीरेण तदभावे तस्य बोधत्वे प्रमाणाऽभावात्, तस्याऽगतिकगतित्वाच्चेत्यत आह—इच्छाया इति। सविषयत्वादित्यर्थः। वरणयाच्ञा तु न निरुक्तेति भावः। स्वाति-न्याश्रयणेऽपि समाधत्ते—इह नित्यानामिति। तत्र समानकर्तृकत्वादिप्रकारक-बोधो लोकव्युत्पत्तेरेव, न हि सर्वत्र व्याकरणमेव शक्तिग्राहकमस्तीति भावः। ननु प्रत्यासत्त्या कर्मबोधकप्रत्ययेऽङ्गपरिमाणं लभ्यतेवेत्यत आह—इच्छायां वेति।

१ इदं क्वचित्। २ 'यज्ञदत्तो देव' पा०। ३ 'कर्तृकाद्वा' पा०। ४ 'तत्र' पा०।

सत्यपि च 'धातोर्विहितः प्रत्ययः शेष आर्द्धधातुकसंज्ञो भवती'ति सन आर्द्धधातुकसंज्ञा[1] सिद्धा भवति । यदप्येतदुक्त—"कर्मग्रहणात्सन्विधौ धातुग्रहणानर्थक्यं, सोपसर्गं कर्मेति चेत्कर्मविशेषकत्वादुपसर्गस्याऽनुपसर्गं कर्म, सोपसर्गस्य हि कर्मत्वे धात्वधिकारेऽपि सनाऽविधानमकर्मत्वा' दिति,—स्वपक्षोऽनेन वर्णितः । युक्तमिह द्रष्टव्य—किं न्याय्यं कर्मेति ? ॥ एतदत्राऽत्र युक्तं यदनुपसर्गं कर्म स्यात् ॥ ननु चोक्त—"सोपसर्गस्य हि कर्मत्वे धात्वधिकारेऽपि सनोऽविधानमकर्मत्वा[3]"दिति ॥ नैष दोषः । 'कर्मणः' इति नैषा धातुसमानाधिकरणा पञ्चमी—'कर्मणो धातो'रिति ॥

प्र ] स्तत्र स्यात् । यदा तु साक्षात्प्रकृतिर्विशिष्य निर्दिश्यते तदाऽनुपादाने ज्ञायते । अन्यतरदिति । ननु प्रत्याख्यानेऽप्यनभिनिवक्ष्ये गमनकर्तृग्रहणं न कर्तव्यमेव गौरवप्रसङ्गादिति मत्वाऽन्यतर दित्युक्तम् । धातुग्रहणमेवेति । कार्यान्तरस्यापि प्रसादनादित्यर्थः । धातुशब्दोच्चारणेन धातोर्विहितस्यार्द्धधातुकसंज्ञोक्ता । तथा च पूर्वसूत्रद्वयविहितस्य सनस्तद्भावाद्गुप्सन इत्यादाविड्भावः । एतत्सूत्रविहितस्य तु सन आर्द्धधातुकत्वाच्चिकीर्षितेन इत्यादाविड्गुणौ भवतः । ननु किमो ज्ञापितं कि-स्त्वनार्द्धधातुकत्वनिमित्तगुणनिषेधार्थं सन आर्द्धधातुकसंज्ञाया ज्ञापकं भविष्यति । नैत-दस्ति । सामान्येन ज्ञापके व्याख्यायमाने सर्वत्र सन प्रसङ्गः । विशेषविषये त्विगन्त-प्रकृतेरेव स्यादिति धातुग्रहणं कर्तव्यम् । स्वपक्ष इति । यद्यपि सर्व एव स्व-पक्षं वर्णयन्ति तथापि परपक्षदूषणाऽभिनिवेशाद्युक्तोऽपि स्वपक्षो वर्णित इत्युक्तं भवति । युक्तमिति । यदेव न्याय्यं तदेव ग्राह्यं न तु दुरभिनिवेशः कार्य इत्यर्थः । यदनुपसर्गमिति । धातूपसर्गसङ्घातेन हि क्रियाविशेषस्य प्रकाशनादर्थद्वारकं तस्यैव कर्मत्वमित्यर्थः । विशिष्टैव च क्रिया साधनेन निरूप्यते ॥ सूत्पन्ना सती विशेषणे-नाऽन्यत उत्पन्नेनाऽभिसम्बध्यते । तत्र यद्यपि धातुर्वाचक उपसर्गस्तु द्योतकस्तथा-प्यसति धातुग्रहणे वाचकद्योतकविभागस्य शब्देनाऽनङ्गीकृतत्वात्सङ्घातादेवोत्पत्ति

उ ] न कर्तव्यमेवेति । उत्तरसूत्रकर्तव्यता सत इत्यनेन कार्यम् । तत्रेच्छायामपि सन इष्यस्य कर्तृत्वेनाऽन्वयस्य क्रुधनादन्तरङ्ग बाध धातावपि तेनैव सम्बन्धेनाऽन्वयः । एतच्च प्रत्यासत्त्योभयकर्तृत्वैक्य एव प्रवृत्तिरिति भावः । 'धातुशब्दोच्चारणेने' त्यस्य फलमाह—तथा चेति । क्रियाविशेषस्य—विशिष्टक्रियायाः ॥ प्रकाशनात्—बोधनात् ॥ विशिष्टैवेति । उपसर्गद्योत्यार्थविशिष्टैवेत्यर्थः ॥ साधनेन—तत्तत्प्रयुक्तकारकेण । निरू-प्यते—उपपन्नबोधविषयीक्रियते ॥ उत्पन्ना—उत्पन्नबोधा ॥ अन्यत उत्पन्नेन,—अन्यत उत्पन्नबोधेन ॥ तथाप्यसतीति । 'कर्मणः' इत्यस्य कर्मबोधकादित्यर्थे स्यादिति

१ 'स ज्ञापि' पा० । २ इदं क्वचिन्न । ३ 'अकर्मकत्वा' पा० ।

किं तर्हि?॥अवयवयोगे एषा षष्ठी 'कर्मणो यो धातुरवयव' इति ॥ यद्यवयव योगेषा षष्ठी—'केवलादुत्पत्तिर्न प्राप्नोति,-चिकीर्षति जिहीर्षतीति ॥ एषोऽपि व्यपदेशिवद्भावेन कर्मणो धातुरवयवो भवति ॥ काम तर्ह्यनेनैव हेतुना क्यजपि कर्तव्यो–'महान्त पुत्रमिच्छती ति,-कर्मणो य सुबन्तमवयव इति ॥ न कर्तव्य । असामर्थ्यान्न भविष्यति ॥ कथमसामर्थ्यम् ? ॥ 'सापेक्षमसमर्थ

प्र ] स्यादिति भाव । 'उपपदमति'न्त्यत्र च 'साधन हि क्रिया निर्वर्तयति ता मुपसर्गो विशिनष्टि' इत्युत्पत्तिविशिष्टाया एव क्रियाया आश्रितोक्तमित्यविरोध । अथ वा सत्यपि धातौ पूर्वं साधनयोगे इपिरर्भत्वमिह विशिष्टाया एव क्रियाया प्रतिपाद्यमिति पूर्वमुपसर्गेण सम्बन्धो धातुग्रहणेऽसति सोपसर्गात्सन उत्पत्तिप्रसङ्ग एव। किं तर्हीति। व्याप्तिग्रहणाय षष्ठीपक्ष आश्रीयते, पञ्चम्या हि सत्यामनुपसर्गा देवोत्पत्ति स्यान्न तु सोपसर्गात् । षष्ठीपक्षे तु सोपसर्गादपि सिध्यति। एषो पीति। प्रयोगभेदाभावाद्रूपस्य कर्माभिधायिनोऽवयव मन्वक्तृतित्वेनाश्रीयमाणो धातुरित्यर्थ । काममिति । इच्छयेत्यर्थ । इच्छाया व्याघाताऽभावादित्यर्थ । असामर्थ्यादिति । सुबन्तान्क्यविधानात्पदविधित्वात्समर्थपरिभाषोपस्थानादिति भाव । सन्विधौ तु तदनुपस्थानात्सापेक्षादपि सन उत्पत्ति । अथ ■ धातुरेव

उ ]भाव ॥उत्पत्तिविशिष्टाया एव क्रियाया इति। विशिष्टाया एव क्रियाया धातु मात्राद्बोधोत्पत्तिमाभिप्रेत्येत्यर्थ ॥ एव च पक्षान्तरत्वादविरोध इति भाव ॥ अथ वेति । साधनसम्बन्धोत्तरमप्युपसर्गसम्बन्धे इच्छत्यर्थकसन्सम्बन्धापेक्षयाऽन्तरङ्ग त्वात्पूर्वमुपसर्गसम्बन्ध । अतएव न विशेष्याऽऽशाभेनेच्छाया निवृत्तिरित्यभिमान । व्याप्तिग्रहणायेति । व्याप्तिलाभायेत्यर्थ । बहुल्यसम्बन्धलाभायेति यावत् ।

परे तु गतिर्गताविति सूत्रे वक्ष्यमाणभाष्यकैयटरीत्योपपदमतिङिति सूत्रोक्तरीत्या च 'निपठिषती'ति सिद्धान्तरमुपसर्गयोगेन सर्वसिद्धेर्धातुग्रहणाऽनर्थक्यमेव । 'युक्त यत्सोपसर्गं कर्मे'त्यैव सिद्धा त्युक्ति । तस्य चोपसर्गार्थविशिष्टधात्वर्थ कर्मेत्यर्थ । 'समानकर्तृका' दित्युक्त्या सनन्तावारकेणाऽस्य संबन्धे साकाङ्क्षत्वप्रतीतावुपसर्गसम्बन्धात्। अतएव न विशेष्याऽऽशाभेनेच्छानिवृत्ति । इतर इदमवुध्वा यद्भिनवाल्–सोपस र्गस्य कर्मत्वे इत्यादि। तत्रैकदेशिन –कर्मण इत्यवयवषष्ठीत्युत्तरम् । यदि कैयट रीत्या सनुपत्ते पूर्वमुपसर्गसम्बन्ध स्यात्तदाऽत्रैव धातूपसर्गयो समासो दुर्वार इत्युपपदमतिङिति सूत्रस्थभाष्यविरोध इत्याह् । व्याघाताभावादिति । व्याघात – प्रतिबन्ध । सन्विधावपि वाचनाऽनर्थक्यमन्वेत्यनेन तदुपस्थितेर्वक्ष्यमाणत्वादाह– अथवा धातुरेवेति । पृथगुपस्थितस्य यत्नेतराऽपेक्ष स सापेक्ष इति भाव । एव-

१ 'एषे'ति क्वचित् ।

भवतीति । ॥*॥ वावचनानर्थक्यं च तत्र नित्यत्वात्सनः ॥*॥ वावचनं चाऽनर्थकम् ॥ किं कारणम् ? ॥ 'तत्र नित्यत्वात्सनः' । इह द्वौ पक्षौ वृत्तिपक्षश्चाऽवृत्तिपक्षश्च । स्वभावतश्चैतद्भवति—वाक्यं च प्रत्ययश्च । तत्र स्वाभाविके वृत्तिविषये नित्ये प्रत्यये प्राप्ते वावचनेन किमन्यच्छक्यमभिसम्बन्द्धुमन्यदतः संज्ञायाः । न च संज्ञायाः भावाऽभावाविष्येते । तस्माद्वाऽर्थो वावचनेन । ॥*॥ तुमुनन्ताद्वा, तस्य च लुग्वचनम् ॥*॥ तुमुनन्ताद्वा सन् वक्तव्यस्तस्य च तुमुनो लुग्वक्तव्यः । कर्तुमिच्छति चिकीर्षति[1] । ॥*॥ लिङुत्तमाद्वा ॥*॥ लिङुत्तमाद्वा सन्वक्तव्यस्तस्य च लिङो लुग्वक्तव्यः । कुर्यामितीच्छति चिकीर्षति ॥*॥ आशङ्कायामचेतनेषूपसङ्ख्यानम् ॥*॥ आशङ्कायामचे-

प्र ] विशिष्य क्रियामाह, उपसर्गस्तु द्योतक इति भावः । वावचनानर्थक्यं चेति । इतरेतरकार्यभावविषयत्वाद्वाक्यस्य भिन्नार्थत्वाद्वाक्यबाधकाभावाऽप्रसङ्गादिति भावः । न च संज्ञाया इति । अनर्थं प्रयुक्तं शास्त्रग्रहणाद्भवति, प्रत्ययसंज्ञया निरूप्ये सति तन्निबन्धनकार्यविरहप्रसङ्गात् । तुमुनन्ताद्वेति । लुक्त्वेन लक्षणं भवतीति भावः । वचनसामर्थ्याच्चोपपदश्रवणं बाधित्वा पक्षे तदीयेऽर्थे सन्प्रत्ययो भवति । इच्छाग्रहणं प्रत्ययाऽर्थनिर्देशायावश्यं कर्तव्यम् । अत्र चोदयन्ति—तुमुनन्तस्य पदत्वात्तुमुनो लुकि कृते 'चिकीर्षती'त्यादौ नलोपादीनि प्राप्नुवन्तीति । नैष दोषः । तुमुनो लुको बहिरङ्गत्वादसिद्धत्वान्नलोपादीनि न भविष्यन्तीति । एतस्मिंस्तु सूत्रन्यासे धातोरिति सनो विधानाऽभावादार्धधातुकसंज्ञा न प्राप्नोतीति इतो ह्रस्विति कित्त्वविधानं ज्ञापकमाश्रयणीयमिष्टसिद्धये । आशङ्कायामिति । आशङ्का-

उ ] श्चाऽनुपसर्गत्वाऽर्थं समित्यत्यन्तमसङ्गतमिति भावः । वृत्तेरिति । नन्वस्य पदविधित्वाऽभावात्समर्थपरिभाषाऽनुपस्थितौ कथमस्यैकार्थीभावविषयत्वमिति चेत्, भाष्यप्रामाण्यादस्याप्येकार्थीभाव एव प्रवृत्तेरिति भावात् । प्रत्ययसंज्ञाया इति । परत्वस्यापीदमुपलक्षणम् । 'धातुदात्मश्चे'त्यस्य तु एतद्विषये न सम्बन्धो, नित्यत्वादिति बोध्यम् । अत्राऽपि समर्थपरिभाषोपस्थित्यर्थं वार्त्तिकसम्मतिं दर्शयन् तान्युदाहरति भाष्ये—तुमुनन्ताद्वेति । वचनसामर्थ्याच्चेति । अतएव चोपपदाऽभावेऽपि तुमुन् वृत्तिविषये इति बोध्यम् । बहिरङ्गत्वादिति । सन्सन्नियोगेन विधानाद्बहिरङ्गत्वं लुक इति भावः । वस्तुतस्तु सुप्तुमुनोर्लुकि पदत्वे नैकदेशविकृतन्यायावतारः, तदन्तप्रत्यभिज्ञाऽभावात् । अतएवाऽस्मरत् । नापि स्थानिवद्भावः, तुमुनन्तस्य षष्ठीनिर्दिष्टत्वाऽभावात् । इष्टसिद्धय इति । अनेन सर्वे शङ्काभागा निरस्ता इत्याहुः । आशङ्केति । सा च प्रयोक्तृधर्मं, शङ्के कूलं पतिष्यतीत्यर्थो

१ 'चिकीर्षतीति' पा० । २ 'स्य कर्मत्व' पा० । ३ इद क्वचिन्न ।

तनेषूपसङ्ख्यानं कर्तव्यम्—अश्मा लुलुठिषते, कूलं पिपतिषतीति ॥ किं पुनः कारणं न सिध्यति? ॥ एवं मन्यते—चेतनावत एतद्भवति—'इच्छे'ति, कूलं चाऽचेतनम् ॥ अचेतनग्रहणेन नार्थः। 'आशङ्काया'मित्येव। इदमपि सिद्धं भवति—श्वा मुमूर्षतीति ॥३॥ न वा तुल्यकारणत्वादिच्छाया हि प्रवृत्तित उपलब्धेः ॥४॥ न वा वक्तव्यम् ॥ किं कारणम्? ॥ 'तुल्यकारणत्वात्'। तुल्यं हि कारणं चेतनावति देवदत्ते, कूले चाऽचेतने ॥ किं कारणम्? ॥ 'इच्छाया हि प्रवृत्तित उपलब्धिः'। इच्छया हि प्रवृत्तित उपलब्धिर्भवति। योऽप्यसौ कटं चिकीर्षुर्भवति नाऽसावाख्यापयति—'कटं करिष्यामी'ति ॥ किं तर्हि? ॥ सबद्धं रज्जुकीलकपूलपाणिं दृष्ट्वा तत इच्छा गम्यते। कूलस्याऽपि पिपतिषतो लोष्टाः शीर्यन्ते, भिदोत्पद्यते, देशाद्देशान्तरमुपसङ्क्रामति। श्वा खल्वपि मुमूर्षुरेकान्तशीलः शूनाक्षश्च भवन्ति ॥४॥ उपमानाद्वा सिद्धम् ॥५॥ उपमानाद्वा सिद्धमेतत् ॥ कथं? ॥ लुलुठिषत इव लुलुठिषते। पिपतिषतीव पिपतिषति ॥ न वै तिङन्तेनो-

प्र.] संभावनायां तद्विशिष्टस्यार्थाभिधायिनो धातोः स्वार्थे प्रत्ययः। लुलुठिषत इति। 'लुठ लुठ प्रतीघाते' इति भ्वादिषु पठ्यते। 'वर्तमानसामीप्ये' इति लट्। श्वा मुमूर्षतीति। शुनश्चैतन्येऽपि जीवितस्य प्रियत्वान्मरणाभिलाषाभावेऽपि तिर्यक्त्वान्मुमूर्षेच्छा नास्ति। न वेति। कार्येणेच्छाऽनुमीयत इतीच्छाऽनुमानकारणं कार्यं लिङ्गं। तुल्यमिति। वास्तवसदसत्त्वाऽनपेक्षलौकिकव्यवहाराश्रयकार्यानुमेयेच्छाश्रयेण सन् प्रयुज्यते इत्यर्थः। उपमानाद्वेति। यदिच्छानिमित्तं कार्यं तदचेतनेषु नास्ति, यत्त्वस्ति,

उ.] ऽवगमात्। तद्विशिष्टेति। तद्विषयत्वविशिष्टेत्यर्थः। आत्मनेपदप्रयोगे बीजमाह—लुठादिष्विति। 'रलो व्युपधा'दिति विकल्पाद्गुणाऽभावः।

सम्भावनविषयलोठने भविष्यत्त्वप्रतीतेराह—वर्तमानसामीप्य इति। भाष्ये एवं मन्यते चेतनावत इति। वक्ष्यमाणाभिप्रायेण 'मन्यते' इत्युक्तं। कार्येणेति। इच्छानुमितिजनकं कार्यरूपं लिङ्गं तुल्यमित्यर्थः। नन्विच्छाया अचेतने बाधात्कथं बाधितविषयाऽनुमितिरत आह—वास्तवेति। वास्तवं सत्त्वम्, वास्तवमसत्त्वं च। तदनपेक्ष्य व्यवहारमात्रेण सत इच्छात्वेनाऽसत्या अपि तेन सत्यकार्येणाऽनुमानमिति भावः। बालादेरुक्तकूलगतारोपं कुर्वतो 'कर्तुमिच्छत्ययं' इति व्यवहरति लोक इति तात्पर्यम्। भाष्ये—शूनाक्ष इति। स्फीताक्ष इत्यर्थः। शून्याक्ष इति पाठे विषयाऽग्राहिचक्षुरित्यर्थः। यदिच्छानिमित्तकमिति। बुद्धिपूर्वक-

१ इति क्वचित्। २ 'कर्तव्य' पा०। ३ 'कीलपूल' पा०। ४ 'भिदा जायते' पा०।
५ 'उच्छूनाक्ष' इति, 'शून्याक्ष' पा०। ६ 'न तिङ' पा०। ७ 'व्याप्यभि' पा०।

पमानमस्ति ॥ एवं तर्हीच्छेवेच्छा । ॥*॥ सर्वस्य वा चेतनावत्त्वात् ॥*॥ अथ वा सर्वं चेतनावत् । एवं ह्याह–'कस्यका सर्पन्ति, शिरीषोऽयं स्वपिति' 'सुवर्चला आदित्यमनुपर्येति' । 'आस्कन्द कपिलकेत्युक्ते तृणमास्कन्दति' ।

प्र ] न तदिच्छाया वार्यमिति मत्वा परिहारान्तरोपन्यास । न वै तिङन्तेनेति । तिङन्तार्थेनेत्यर्थः । क्रियायाः साध्यत्वस्वभावत्वादनिष्पन्नस्य वादिद तदिति परामर्शविषयत्वस्तुणो रर वाडुपमानोपमेयभावस्येदन्तदिति परामर्शाभावादिति भाव । इवशब्दप्रयोगे तु सत्यारोपस्तु विद्यते,—'रोदितीव गायति' 'नृत्यतीव गच्छति देवदत्त' इति । परिपूर्णेन च न्यूनस्योपमान भवति । क्रिया च सर्वा स्वाश्रये समाप्तेति न्यूनत्वाऽसम्भवान्नस्याम् । तदुक्तं–'येनैव हेतुना ह्यम पततीत्यभिधीयते । आनौ तस्य समाप्तत्वादुपमार्थो न विद्यते॥' इति । भिन्न जातीयाना च क्रियाणां साम्यं नास्ति 'भुङ्क्त इव गच्छती'ति । एवं तर्हीति । इच्छाशब्दस्य सत्त्वभूतार्थाभिधायित्वादस्ति तदर्थस्योपमानत्व, तत्रश्चेच्छायन्तो- ऽपि व्यापारे सत् भवति । गौणमुख्यन्यायस्य क्वचिदश्याऽऽश्रयणा नाऽऽश्रीयते ।

उ ] श्रवरयादिकमित्यर्थ । तिङन्तार्थेनेति । क्रियेनेत्यर्थ । साध्यस्योपमानशब्दस्य सान्स्यमित्यर्थ इति भाव । केचित्तु तिङन्तेनोपमानबोधो नास्तीति भाष्यार्थ- माहु । तदुपपादयति—क्रियाया इति । सिद्धरूपतया प्रतीयमानस्य वस्तुन 'इदन्त'दिति परामर्शविषयत्वादुपमान त्वम्भवति नाऽन्यस्यत्यर्थ । इदन्तदिति परा- मर्शाभावादित्यस्य–'उपमानत्वाऽभाव' इति शेषेण सम्बन्ध । तथा परामर्शाऽ- भावे हेतुमाह—साध्यत्वेत्यादिना । तथापरामर्शाऽभावेऽपि कुतो न स इत्यत आह–इदन्तदिति । अत्र शब्दशक्तिस्वभावो वस्तुशक्तिस्वभाव एव वा बीजम् । अतोपमानोपमेयभावस्येत्युपमेयग्रहणञ्चिन्त्यं, 'क्षत्रियवदधीते' इत्यादौ क्रियाया उपमेयत्वस्येष्टत्वादिति बोध्यम् । कथ तर्हि 'रोदितीव गायता'त्यादिप्रयोगो- ऽत आह–इवशब्देति । अत्र भाष्ये तुशब्दद्वयफल चिन्त्यम् । अध्यारोप – उत्प्रेक्षा । निन्त्यार्थस्योपमानत्वाऽभावे युक्त्यन्तरमप्याह—परिपूर्णेनेति । समाप्तत्वादिति । पातस्य सम्पूर्णत्वादित्यर्थ । आत्तौ –पक्षिविशेष । एवञ्चैकस्या क्रियाया भेदाऽसम्भवान्नोपमानोपमेयभाव । भिन्नजातीयासु तु साधारणधर्मस्य- साम्यस्याऽसम्भवान्नोपमानत्व, तदाह–भिन्नेति । समानजातीयास्वपि यथा न तथै- षम् । 'यथा वै श्येनो निपत्यादत्ते एवमय भ्रातृव्यं निपत्यादत्ते' इत्यादौ यद्यपि च श्येनकर्तृकमादानं तद्धर्मवदेतत्कर्तृकमादानमिति वाक्यार्थेऽवगते यत्तद्धर्मस्य- मानत्व तं धर्मं निमित्तीकृत्य श्येनयागयो पश्चात्प्रोद्भवोत्र इति न तत्र क्रिययोरुप- मानोपमेयभाव इति बोध्यम् । इच्छासदृशोऽपीति । पूर्वं व्यवहारादिच्छा तत्राप्य-

'अयस्कान्तमयः सङ्क्रामति'। 'ऋषिः पठति'। 'शृणोत ग्रावाणः'॥

इमे इषयो बहवः पठ्यन्ते तत्र न ज्ञायते कस्याऽयमर्थे सन्निवेशो यत इति? ॥*॥ इषेश्छत्वभाविन ॥*॥ यद्येव,—कर्तुमन्विच्छति-कर्तुमन्वेषणा, अत्रापि प्राप्नोति ॥ एवं तर्हि यस्य स्त्रियामिच्छेत्येतद्रूपं निपात्यते ॥ कस्य चैतन्निपात्यते ? ॥-॥कान्तिकर्मण ॥-॥ अथेह ग्रामं गन्तुमिच्छतीति,—कस्य किं कर्म ? ॥ इषरुभे कर्मणी ॥ यद्येवं ग्रामं गन्तुमिच्छति ग्रामाय गन्तुमिच्छतीति,—गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ न प्राप्नुतः॥एवं तर्हि गमेर्ग्रामः कर्म,

प्र ]सर्वस्य वेति। आ माऽद्वैतदर्शनेनेति भाव। ऋषिरिति। वेद सर्वभावानां चैतन्यं प्रतिपादयतीत्यर्थ । वैचित्र्येण च पदार्थानामुपलम्भात्सर्वचेतनधर्मप्रसङ्गः सर्वत्र नोद्भावनीय। इम इति। शाश्यन्विकरणात्रय इत्यर्थ। तत्रेति। इच्छेति निपातनं त्रयाणामपि सम्भवतीति मन्यते। छत्वभाविन इति। 'इच्छे'ति शप्रत्ययो यग्भावश्च निपात्यते। छत्वं तु लक्षणेनैव सिद्धं तच्च शविकरणस्यैव विहितमित्यर्थ । यद्येवमिति। अन्विच्छनी'ति तौदादिकस्यैव रूपमिति भाव। एवं तर्हीति। अर्थविशेषे निपातनमाश्रितमिति भाव।कान्तिकर्मण इति। कान्तिः—कामना।अभिलाषः सक्रियस्येत्यर्थ। 'अन्विच्छनी'त्यस्य गवेषयतीत्यर्थो न तु कामयत इति सत्र भवति। अथेहेति। क्रियाद्वयसन्निधानाच्चङ्क्रमणादिकामस्य गमनमात्रेऽप्यासम्भवादन्यस्य चोभयेप्सासम्भवात् प्रश्न। इषरुभे इति। यो हि ग्रामगमनमिच्छति तस्येप्सितक्रियोभयमीप्सितं न केवले ग्रामो नाऽपि केवलं गमनमित्यर्थ । यद्येवमिति। इषिकर्मत्वे ग्रामस्य गतिकर्मत्वाऽभावादिति भाव। परसाधन इति। परस्यपे साधन

उ ]क्रीकृत्य कृत प्रत्यय इत्युक्तम्।इदानीन्त्विच्छासदृशेऽर्थे प्रत्यय इति भेद।इषिर्ये-णेति। चेतनेषु मनुष्येष्वपि नानानानीयव्यवहारदर्शनादिति भाव। सर्वत्र परिणामदर्शनेन चेतनाऽधिष्ठानं विना च तदसम्भवात्सर्वस्य तदधिष्ठितत्वं ज्ञायते इति तात्पर्यम्। मन्यत इति। छत्वमपि निपातनादिति तद्भाव। यग्भावश्चेति। भावे शस्य सार्वधातुकत्वप्राप्तेरिति भाव। शविकरणस्यैवेति। गमियमिसाहचर्याण्णाऽकारविकरणस्यैवग्रहणादिति भाव।तौदादिकस्यैव स्त्रियामिच्छति निपातनात्कथं 'यस्ये'त्यादिना समाधानमत आह-अर्थविशेष इति। कस्येति भाष्यस्य-यदर्थकस्येत्यर्थ। लोके कान्तिशब्दस्य शोभायामप्रसिद्धत्वादाह-कान्तिः कामनेति। ग्रामस्य गतिकर्मत्वं गमेरिपिकर्मत्वञ्च स्पष्टमेवेति कथं सन्देहमत आह-क्रियाद्वयेति। चङ्क्रमणादिकामस्य-अनुद्देश्यकगमनादिकामस्य। अन्यस्य-ग्रामप्राप्तिकामस्य। इषिकर्मत्व इति। उभयोरिषिकर्मत्वे ग्रामस्य गतिकर्मत्वाऽभाव मन्यमानस्य चोद्यमिति

१ इदं भाष्यमित्यन्ये। वार्तिकमित्यपरे।

इषेर्गमि कर्म ॥ एवमपीष्यते ग्रामो गन्तुमिति, परमाधन उत्पद्यमानेन तेन ग्रामस्याऽभिधानं न प्राप्नोति ॥ एवं तर्हि गमेर्ग्राम कर्म, इषेस्तु कर्मणी ॥

अथ सन्नन्तानां भवितव्यम्,– चिकीर्षितुमिच्छति जिहीर्षितुमिच्छतीति ॥ न भवितव्यम् ॥ किं कारणम् ? ॥८॥ अर्थगत्यर्थः शब्दप्रयोगः ॥९॥ अर्थं सम्प्रत्याययिष्यामीति शब्दः प्रयुज्यते । तत्रैकेनोक्तत्वात्तस्यार्थस्याऽपरस्य प्रयोगेण न भवितव्यम्,–'उक्तार्थानामप्रयोग' इति॥ न तर्हीदानीमिदं भवति

प्र ]यत्कर्म तत्र लकार उत्पद्यते । तच्च गमनमेव न तु ग्राम इत्यर्थः । एवं तर्हीति । 'इष्यते ग्रामो गन्तु'मित्यत्र गमनस्य प्राधान्याद्ग्रामस्यान्यादृशस्यैषा कर्मणापेक्षा नेन शब्देनाऽभिहितत्वाऽभावात्, प्रथमैव कार्या । तस्य तदुभयमर्ग्याऽभिधाने स्वकारण भवति । इषिक्रियापेक्षयाऽप्राधान्यात्तत्र्याच्यत्वात् प्राधान्यमिति प्रधानक्रियायास्तत्र्यभिधाने गुणक्रियाक्रियाकरभिहितत्वाच्च प्रथमाऽभिक्रियायां द्वितीयाचतुर्थ्यौ न भवतः ।

अर्थेति । प्रयोगाऽदर्शनाच्छब्दसद्भावाच्च पृच्छति । न भवितव्यमिति । एक स्यादिच्छाया , तस्याश्च पूर्वोपक्षेनाऽभिहितत्वादपरः सन् भवतीत्यर्थः । न तर्हीति ।

उ ]भाव ।परस्येति।गम्यपेक्षयेत्यर्थः । यदर्थक्रियानिमित्तं यत्कर्म तस्मिन्नेव कर्मणि ततो धातोर्लकारोत्पत्तिर्न्याय्येत्यर्थः । नन्वेवमुभयकर्मत्वे कदाचिद्गमनरूपे कर्मणि प्रत्यये 'इष्यते ग्राम गन्तु'मित्यपि स्यादत आह–इष्यते ग्राम इति । ग्रामार्थत्वादिति । ग्रामप्राप्त्युद्देश्यकत्वादित्यर्थः । अत एव गमनस्य स्वतोऽनुद्देश्यत्वादप्राधान्यमत आह अप्राधान्यादिति । एतेन युगपदुभयोरभिधानं स्यादिति परास्तम् । भिन्नकक्षयोरिति । प्रधानाऽप्रधानयोरित्यर्थः । नन्वेवं कदाचिदप्रधान एव स्यादत आह— प्रधान इति । नन्वेवमपि गमिनिरूपितकर्मत्वस्याऽनभिधानात्ततो द्वितीया स्यादेवेति पूर्वोक्तप्रयोगापत्तिर्दुर्वारेत्यत आह–इषिक्रियाया इति । एतेन युगपदुभयत ग्रामस्य शाब्दाऽन्वयाऽसम्भवात्कदाचिदिषौ कदाचिद्गमौ शाब्दोऽन्वयः तत्र यदा यत्र शाब्दोऽन्वयस्तदा तत्र तद्विभक्तिरिति 'इष्यते ग्रामो गन्तु' मिष्यते ग्राम गन्तु'मिति प्रयोगद्वयमपि परास्तम् । एवं तर्हि 'गमेर्ग्राम कर्म इषेरुभे कर्मणी' इति भाष्यविरोधात्, तस्य किं कथमन्यथा पुनरस्य भाष्यपर्यालोचनयाऽस्यापि भाष्यस्यैकप्रयोग उभयत्र ग्रामस्याऽऽदरया शाब्दाऽन्वयपरत्वाभावात् । तथा सति कदाचिद्गमेर्ग्राम कर्म कदाचिदुभावित्यपरित्येन स्वरसत्याग वदेदिति दिक् । नन्वेवमस्या इच्छाया उपात्तत्वेनाऽस्याऽभिधानाय द्वितीयः सन् भविष्यतीत्यत आह—इच्छाया एकत्वादिति । तत्र तात्पर्यविषयेच्छायाः अनेकत्वादिति भावः । इच्छाविषयेच्छानात्तु न प्रत्ययः, इच्छाविषयेच्छाऽभावादित्यभिमानः । नन्विच्छाविषयेच्छाऽभावात्कथमत्र सन्नित्यत आह

१ केचित्त्विदं भाष्यमिति मन्यन्ते । २ 'प्रत्यये' पा० । ३ 'कस्य' पा० ।

एषितुमिच्छति—एषिषिषतीति [1] ॥ अन्यत्र विशेष । एकस्याऽत्रेषेरिषि साधन वर्तमानकालश्च प्रत्यय । अपरस्य बाह्य साधन सर्वकालश्च प्रत्यय ।

इहाऽपि तर्ह्येकस्यैषे करोतिविशिष्ट इषि साधन वर्तमानकालश्च प्रत्यय । अपरस्य बाह्य साधन सर्वकालश्च प्रत्यय ॥ येनैव खल्वपि हेतुना एतद्वाक्य भवति—चिकीर्षितुमिच्छतीति, तेनैव हेतुना वृत्तिरपि प्राप्नोति । तस्मात्सन्नन्तात्सने प्रतिषेधो वक्तव्य । स चापि ब्रुवता 'इषि सने' इति वक्तव्यम् । भवति हि जुगुप्सिषते मीमांसिषते इति ॥

दैपिकान्मतुबर्थीयाच्छैषिको मतुबर्थिक ।
सरूप प्रत्ययो नेष्ट सन्नन्तान्न सनिष्यते ॥१॥[ इति ] ॥

॥०॥ इति श्रीमद्भगवत्पतञ्जलिमुनिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥०॥

---

प्र ]इषिणैव धातुनेच्छाया अभिधानात्सन् प्राप्नोतीति भाव । एकस्येति । इच्छतीत्यत्र य इषिस्तस्यैषितुमित्येतत्पदवाच्य इषि कर्मेत्यर्थ । तथा हि कश्चिदालस्यादुपहतोऽध्ययनादिविषयामिच्छामेवेच्छति । सर्वकाल इति । 'समानकर्तृकेषु तुमुन्'नित्यनेन तुमुन कालसामान्ये विधानात् । दैपिकादिति । सन्प्रसङ्गेनाऽन्याऽप्यनिष्टप्रत्ययो निवार्यते । प्रतिव्यक्ति लक्षणप्रवृत्तौ वाचनिको निषेध, आकृतिपक्षे तु सकृल्लक्षण प्रवृत्तौ तत्प्रवृत्ते प्रागर्थस्याऽऽप्रकृत्यन्तमसत्त्वात्तदन्तात् प्रत्ययोत्पत्तिर्न भवतीति न्यायानुवादोऽयं सम्पद्यते । तत्र दैपिकाच्छैषिक सरूपो न भवति । शालाया भव शालीयो घट । तत्र भवमुदकमिति पुनश्छो न भवति । विरूपस्तु भवति,—अहिच्छत्रे भव आहिच्छत्र, तत्र भव आहिच्छत्रीय । तथा दण्डोऽस्यास्तीति दण्डिक, सोऽस्यास्तीति पुनष्ठन्न भवति । विरूपस्तु भवति—दण्डिकवती सेनेति । सन्नन्ताच्च सनिष्यत इति । 'सरूप' इत्यपेक्ष्यते । सारूप्येण चात्र मात्रस्य लक्ष्यते, तथार्थद्वारक-

---

उ ]कश्चिदालस्यादीति । तुमुन्ण्वुलाविति तुमुनो भविष्यति विधानात्कथ सर्वकालप्रत्ययस्तत्राह—समानेति । त प्रवृत्ते —तत्तल्लक्षणप्रवृत्ते । तदन्तस्यान्तेति । सनादिप्रत्ययान्तेत्यर्थ । न्यायानुवादोऽयमिति । अनुवादफलञ्चाऽन्यत्र व्यक्तिपक्षाश्रयणेन त्वादिसिद्ध घत्वत्वमित्यादौ । अनुवादेनाऽत्रैव तदाश्रयणबोधनादित्याहु । परे तु 'आर्धधातुक' इति सूत्रभाष्योक्तरीत्या तासौ परत्वा(श्रयेत्वा)मावत्तदवधित्वाभावाद्वृद्ध्यादित्यादि जातिपक्षे आश्रितु न शक्यते इति वचनमेवेदम् । अत एव त्वान्तात् त्वसिद्धिरित्याहु । शब्दकृतसादृश्यग्रहणे व्याकरणोऽसम्भवादाह—तथार्थेति ।

---

१ अत्र॥*॥सनन्तात्सन प्रतिषेध ॥*॥ इतिवार्त्तिकमित्यन्ये । २ ॥*॥ इषि सन ॥*॥इति वार्त्तिक भवेत् । ३ इद क्वाचित्कम् । ४ 'सन्न' । ५ 'लक्षणप्रवृत्ते' पा० ।

## सुप आत्मनः क्यच् ॥ ३।१।८ ॥

किमर्थश्चकारः[1] ॥*॥[चकारः] स्वरार्थः ॥*॥ चितोऽन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात् ॥ नैतदस्ति प्रयोजनम्, एकाच्कः, तत्र नार्थः स्वरार्थेन चकारेणानुबन्धेन । प्रत्ययस्वरेणैव सिद्धम् ॥ विशेषणार्थस्तर्हि ॥ क्व विशेषणार्थेनार्थः । अस्य च्वौ क्यचि चेति । '[3]क्ये चे'ति ह्युच्यमाने 'अपि काकः श्येनायते',—अत्रापि प्रसज्येत ॥ नैतदस्ति । 'तदनुबन्धकग्रहणेऽतदनुबन्धकस्य ग्रहणं ने'त्येवमेतस्य न भविष्यति ॥ सामान्यग्रहणाविघातार्थस्तर्हि ॥

क्व च सामान्यग्रहणाविघातार्थेनार्थः ? ॥ न क्ये इति ॥

अथाऽऽत्मग्रहणं किमर्थम्?॥ आत्मेच्छायां यथा स्यात् परेच्छायां मा भूत्,— राज्ञः पुत्रमिच्छतीति ॥ क्रियमाणेऽपि वै आत्मग्रहणे परेच्छायां प्राप्नोति ॥ किं कारणम् ?॥ 'आत्मन' इतीयं कर्तरि षष्ठी । 'इच्छे'त्यकारो भावे । स यथे-

प्र ]ति इच्छासमानकर्तृकादित्यर्थो लभ्यते॥इति भाष्यप्रदीपे तृतीयस्य प्रथमे प्रथमाह्निकम्॥

सुप आत्मन । किमर्थमिति । वक्ष्यमाणोऽभिप्राय । शिष्यबुद्धिपरीक्षार्थं परिहाराऽऽभासमाह—चित इति । प्रत्ययस्वरेणेति । यद्यप्यत्र धातुस्वरेण भाव्यं तथापि पूर्वं प्रत्ययस्वरो भवति, पश्चात्सतिशिष्टो धातुस्वर इति क्रम । तदनुबन्धकेति । स एव यस्याऽनुबन्धस्तस्य ग्रहणं । यस्य तु स चाऽन्यश्च तस्य न ग्रहणमित्येतमेतद्वचनसामर्थ्यादाश्रीयते । आत्मेच्छायामिति । आत्मन इच्छेति षष्ठ्या समासो न तु कर्तृषष्ठ्या । सुबन्तद्वारकश्चात्मन इच्छया सम्बन्धो न तु साक्षात् । तेनाऽयमर्थः—'आत्मन सुबन्तार्थं यदेच्छति तदा यथा स्या'दिति । एवं 'परेच्छाया'मिति व्याख्येयम् । आत्मन इतीयमिति । क्रियाकारकसम्बन्ध

उ ]इति नागोजीभट्टकृते भाष्यप्रदीपोद्योते तृतीयस्य प्रथमे प्रथमाह्निकम् ॥१॥

सुप आ । वक्ष्यमाण इति । केषाञ्चित्प्रयोजनानामन्यथासिद्धिरूप इत्यर्थः । पश्चादिति । एवञ्चाऽन्तरङ्गत्वात्प्रत्ययस्वरकृतैवाऽन्यथासिद्धिरुक्तेत्यर्थः । ननु यत्किञ्चिदनुबन्धयुक्तस्य ग्रहणे तद्विरहितस्य ग्रहणाऽभावो वचनमन्तराऽपि सिध्यतीत्यत आह—स एवेति । उच्चारित एवेत्यर्थः । वचनसामर्थ्यात्सावधारणो बहुव्रीहिराश्रीयते । 'अत'दित्यादावपि तद्घटितत्व स आश्रीयत इति भाव । क्यचो ह्यनुबन्धत्वात् 'क्य'ग्रहणेन ग्रहणमिति तात्पर्यम् । अथात्मग्रहणं किमिति । इच्छापेक्षया कर्तरि षष्ठीति प्रश्न । ननु कर्त्रीति । तथा सति राज्ञ पुत्रमिच्छतीत्यादावपि प्रसङ्ग इति भाव । शेषषष्ठ्यामपि साक्षात्सम्बन्धेनाऽन्वये दोषस्तदवस्थ इत्यत आह—सुबन्तेति । आत्मशब्द स्वपर्यायोऽयं नृपर । 'आत्मन पुत्र परस्य राज्ञ'मिच्छतीत्या-

१ इदं वार्त्तिकमिति कैयटः । २ इदं सूत्रम् । ३ 'क्ये इति' पा० ।

वात्मन इच्छायामपि परस्य, आत्मन एवेच्छाऽसौ भवति ॥ नैष दोषः । नात्मग्रहणेनेच्छाऽभिसम्बध्यते ॥ किं तर्हि ? ॥ सुबन्तमभिसम्बध्यते 'आत्मनो यत्सुबन्त'मिति ॥ यद्यात्मग्रहणं क्रियते छन्दसि परेच्छायां न प्राप्नोति– 'मा त्वा वृका अघायवो विदन्' । तस्माच्चार्थं आत्मग्रहणेन॥ कस्मान्न भवति 'राज्ञः पुत्रमिच्छती'ति ॥ असामर्थ्यात् ॥ कथमसामर्थ्यम् ? ॥ 'सापेक्षमसमर्थं भवती'ति॥छन्दस्यपि तर्हि न प्राप्नोति–'मा त्वा वृका अघायवो विदन्'। अस्त्यत्र विशेषः । अन्तरेणाप्यत्र तृतीयस्य पदस्य प्रयोगं परेच्छा गम्यते ॥

कथं पुनरन्तरेणाप्यत्र तृतीयस्य पदस्य प्रयोगं परेच्छा गम्यते ? ॥ ते चैव हि वृका एवमात्मका हिंस्राः । कश्चात्मनोऽघमेषितुमर्हति। अतोऽन्तरेणाप्यत्र तृतीयस्य पदस्य प्रयोगं परेच्छा गम्यते । यद्येवं तर्हि छन्दस्यघशब्दात्परेच्छायां क्यज्भवत्येवं भाषायामपि प्राप्नोति–'अघमिच्छती'ति । तस्मादात्मग्रहणं कर्तव्यम् ॥ छन्दसि कथम् ? ॥ आचार्यप्रवृत्तिर्ज्ञापयति 'भवत्यघशब्दाच्छन्दसि परेच्छायां क्यजि'ति यदयम्–'अश्वाघस्या'दिति क्यचि प्रकृते ईत्वबाधनार्थमाकारं शास्ति ॥

अथ सुब्ग्रहणं किमर्थम् ?॥ सुबन्तादुत्पत्तिर्यथा स्यात्प्रातिपदिकान्मा

प्र ]स्यादन्तरङ्गत्वादिति भावः ।नात्मग्रहणेनेति। आत्मग्रहणोपादानसामर्थ्यात् । नन्वे- षितारमन्तरेणेच्छा भवतीति व्यभिचाराऽभावादिच्छाया विशेषणस्य निष्फलत्वात् ।

कश्चात्मन इति। अघं–व्यसनं, दुःखमुच्यते।तच्चात्मनो न कश्चिदिच्छतीत्यर्थः । यदयमिति । न च तदाचारक्यजर्थम्, छन्दस्यघशब्दादाचारे क्यच प्रयोगाऽ-

उ.]दर्शनात्तु न दोषः, इष्यमाणस्य परस्यासम्बन्धित्वाऽभावात् ।परेच्छेति । परसम्बन्धि- सुबन्तार्थेच्छायामित्यर्थः । कर्तरीयं षष्ठीति । अनेनैव सम्बन्धेनेच्छाया तदन्वयात् । परम्परासम्बन्धस्तु न पर्यवस्यतीत्याह–क्रियाकारकसंबन्धस्येति । अन्तरङ्गत्वं–आश्रयत्वम् । अत एव सुबन्तविशेषणत्वेन परिहारः । एषितारमिति । स एव- स्तपदार्थ इति भावः । भाष्ये–एवमात्मका हिंस्रा इति । एवंस्वभावा हि परस्यै दुःखमिच्छन्तीत्यर्थः । दुःखमिति । पापवाचिनाऽघशब्देन तत्फलं दुःखं लक्ष्यत इति भावः । 'दुःखीयति सुखहेतो'रित्यादिप्रयोगास्तु वास्तवदुःखस्य सुखत्वभ्रमेणेच्छाया बोध्याः । भाष्ये–विप्रत्ययं भविष्यतीति । ननु सुब्विषयस्याऽभावे प्रातिपदिकात्सु- बन्ताच्चोत्पत्तव्यमविशेषात् । तत्र 'न क्ये' इत्यस्य नियमार्थत्वे नान्तेभ्यः प्राति- पदिकादुत्पत्तौ नलोपो न स्यात् । विध्यर्थत्वे तु 'वाच्यती'त्यादौ सुबन्तादुत्पत्तिपक्षे जश्त्वादि पदकार्यं स्यादिति चेन्न, 'धातोः कर्मणः' इत्यतः 'कर्म'ग्रहणमनुवर्तते । तत्र च धातुरूपं कर्म परिनिष्ठितत्वप्रयोजकप्रत्ययान्तत्वाऽनाक्षेपकमतस्तस्मादद्वयो-

भूदिति ॥ नैतदस्ति प्रयोजनम्, नाऽस्त्यत्र विशेषः सुबन्तादुत्पत्तौ सत्यां प्रातिपदिकाद्वा ॥ अयमस्ति विशेषः—सुबन्तादुत्पत्तौ सत्यां पदसंज्ञा सिद्धा भवति, प्रातिपदिकादुत्पत्तौ सत्यां पदसंज्ञा न प्राप्नोति । कथम् ?॥ आरभ्यते 'न क्ये' इति ॥ तच्चावश्यं वक्तव्यं सुबन्तादुत्पत्तौ सत्यां नियमार्थं, तदेव प्रातिपदिकादुत्पत्तौ सत्यां विध्यर्थं भविष्यति ॥

इदं तर्हि प्रयोजनं 'सुबन्तादुत्पत्तिर्यथा स्याद्धातोर्मा भू'दिति ॥ एतदपि नास्ति प्रयोजनम्, धातोः सन्निर्यश्चिते स बाधको भविष्यति ॥ अनवकाशा हि विधयो बाधका भवन्ति [न चाऽनवकाशाः,] सावकाशाश्च सन्‌॥ कोऽवकाशः ?॥ परेच्छा ॥ न परेच्छायां सता भवितव्यम् ॥ किं कारणम् ?॥ 'समानकर्तृका'दित्युच्यते, धात्वेहाग्रहणं तावत् [च] तत्र समानकर्तृकग्रहणम् ॥

इदं तर्हि प्रयोजनम्—'सुबन्तादुत्पत्तिर्यथा स्याद्वाक्यान्मा भू'दिति, महान्तं पुत्रमिच्छतीति ॥ न वा भवति महापुत्रीयतीति ? ॥ भवति यदैतद्वाक्यं भवति—महान् पुत्रो महापुत्रः, महापुत्रमिच्छति महापुत्रीयतीति । यदा त्वेतद्वाक्यं भवति—महान्तं पुत्रमिच्छतीति, तदा न भवितव्यं, तदा च प्राप्नोति, तदा मा भूदिति ॥ अथ क्रियमाणेऽपि सुब्ग्रहणे कस्मादेवाऽत्र न भवति ?, सुबन्तं ह्येतद् [भवति] वाक्यम् ॥ नैतत् सुबन्तम्॥ कथम् ?॥ 'प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवती'ति ॥ अथ यदत्र सुबन्तं तस्मादुत्पत्तिः कस्मान्न भवति ?॥ ॥ * ॥ समानाधिकरणानां सर्वत्राऽऽप्तनिर्देशात्केन ॥ * ॥ समानाधि

प्र ]भावादिति भावः । महान्तं पुत्रमिति । यद्यत्र सुबन्तसमुदायात्परः क्यच्प्रत्ययः स्यात्तदा प्रत्ययार्थाभिधाने पदद्वयस्य प्रवर्तनात्परस्परस्य समासाऽभावादुत्तरपदनिवर्त्यनमात्रं न स्यात् । समानाधिकरणानामिति । समानाधिकरणानां

उ ]तान्तरान्यैव कर्मणो ग्रहणात्सुबन्तप्राप्तिरिति भाष्याशयात् । भाष्ये—धातोर्मा भूदिति। निष्ठान्तु न सद्भिः, तस्य कर्ममात्रप्रतिपादकत्वाऽभावात् । ननु महान्तं पुत्रमिति विग्रहेऽपि क्यचि 'सन्महदि'ति समासे जाते च 'महापुत्रीयती'त्येव साध्यमिति 'तदा न भवितव्य'मिति कथमत आह—यदात्रेति । परस्परस्येति । अन्यतरैकार्थीभावमापन्नयोर्निराकृत्य परस्परेण सामर्थ्याऽभावादिति भावः । वस्तुतस्तु निमित्तैकार्थीभावाऽभावेऽप्येकार्थीभावमात्रेण समासस्य समर्थसूत्रादिस्थभाष्यसम्मतत्वादाऽऽत्र भवत्येव। स्वरे तु भेदः, सति शिष्टत्वा समासस्वरेण पुत्रीशब्दकारोदात्तत्वरूप इति भाष्याशयः । तदा न भवितव्यमिति—भाष्ये। 'क्यचे'ति शेषः । तथा च स्वरेऽनिष्टमिति भावः । तदा च प्राप्नोतीति। 'क्य'चिति शेषः । नैतत्सुबन्तमिति। समुदायकर्मेति भावः । प्रत्येकं कर्मत्वे कर्मसमुदायस्याऽकर्मत्वादेवाऽप्रसङ्ग इति बोध्यम् ।

अथाऽस्य क्यजन्तस्य कानि साधनानि भवन्ति ? ॥ भावः कर्ता च ॥ अथ कर्म ? ॥ नास्ति कर्म ॥ ननु चाऽयमपि सकर्मको यस्याऽयमर्थे क्यजु विधीयते? ॥ अभिहितं तत्कर्माऽन्तर्भूतं धात्वर्थे सम्पन्नो, न चेदानीमन्यत्कर्माऽस्ति येन सकर्मकः स्यात् ॥ कथं तर्ह्ययं सकर्मको भवति–'अपुत्रं पुत्रमिवाचरति पुत्रीयति माणवक मिति' ? ॥ अस्त्यत्र विशेषो–द्वे ह्यत्र कर्मणी उपमानकर्मोपमेयकर्म च । उपमानकर्माऽन्तर्भूतम् । उपमेयेन कर्मणा सकर्मको भवति । तद्यथा–अपि काकः श्येनायते इति । अत्र द्वौ कर्तारौ—उपमानकर्ता उपमेयकर्ता च । उपमानकर्ताऽन्तर्भूतः, उपमेयकर्त्रा सकर्तृको भवति ॥

अथ तर्हि कथं सकर्मको भवति–'मुण्डयति माणवक मिति' ? ॥ अत्रापि द्वे कर्मणी,–सामान्यकर्म विशेषकर्म च । सामान्यकर्माऽन्तर्भूतं, विशेषकर्मणा

प्र ]शब्दव्यपदेशस्याऽपि न भाजनमित्यर्थः । भावः कर्ता चेति । कर्माऽभावप्रतिपादनपरमेतत् । अधिकरणादौ हि ल्युडादयो भवन्त्येव । भावस्य च लकारोपपत्तिनिमित्ततया साधनव्यपदेशः । अभिहितमिति । तस्य जानातीत्यादिवदिच्छाक्यजन्तस्याऽकर्मकत्वात्कर्मणि लकाराभावः । न चेदानीमिति । नियतविषयाया इच्छाया क्यजन्तेन प्रतिपादनात्तस्याश्च वस्त्वन्तरविषयीकरणाऽभावादिति भावः । कथं तर्हीति । अत्राऽपि पुत्रादिकर्मणोऽस्त्यन्तर्भाव इति प्रश्नः । द्वे इति । वाक्य एव कर्मद्वयमवच्छिन्नमित्यर्थः । मुण्डयतीति । मुण्डगुणविशिष्टद्रव्यरूपकर्मणो धात्वर्थेऽन्तर्भावादिति भावः । अत्रापीति । ण्यन्तो धातुर्द्रव्यमात्रमन्तर्भावयितुं शक्नोति

उ ]भाष्ये–पत्र च गमकमिति । मुण्डयतीति प्रयोगे मौण्ड्यस्य विकारत्वेन कारकतो नित्यसापेक्षतया गमकत्वमिति भावः । कर्माऽभावेति । इच्छाया भेदेनैव प्रश्नादिति भावः । नन्वेवं 'कानि साधनानी'ति प्रश्ने 'भाव' इत्युत्तरमयुक्तं, तस्य क्रियारूपस्य साध्यत्वेन साधनत्वाऽभावादत आह–भावस्य चेति । लकारनिमित्तमेव साधनशब्देनोच्यत इति भावः । नियतविषयाया इति । कर्मविशेषेणैवाऽर्थाभावादित्यर्थः । अत एव कर्माऽन्तरेणाऽनन्वयो राजपुरुषो भार्याया इतिवदिति भावः । वाक्य एवेति । क्यजर्थोऽऽचारस्य भिन्नेनोपमानविषयत्वेऽप्युपमानस्योपमेयसमारोपेक्षत्वात् कर्मद्वयसद्भाव इति भावः । तत्र मुख्यं कर्मोपमेयमेव । उपमाने तु उपमेयसमानधर्मकतया कर्मत्वव्यवहार इति तस्याऽन्तर्भूतत्वेऽपि न क्षतिरिति तात्पर्यम् । उपमानपुत्रकर्मकः उपमेयमाणवककर्मक इति बोधः । ननु मुण्डयत्यत्रापि द्वयोः कर्मत्वं 'मुण्डं करोति माणवक'मिति विग्रहे दर्शनादिति कथमत्र प्रश्न इत्यत आह–मुण्डगुणेति । मौण्ड्यस्य कर्मत्वे सति तस्याऽऽश्रयसापेक्षत्वेनाऽसामर्थ्यप्रसङ्गान्मुण्डगुणविशिष्टद्रव्यस्यैव कर्मत्वमभ्युपेयम्, तस्य च धात्वर्थेऽन्तर्भाव इति भावः ।

मुण्डं चैनं करोतीति ॥ कामं तर्ह्यनेनैव हेतुना क्यजपि कर्तव्यो 'माणवक मुण्डमिच्छती'ति, नोभावपि युक्ताविति ॥ न कर्तव्यः, उभावत्रापि युक्तौ मुण्डो माणवकश्च ॥ कथम् ? ॥ न ह्यसौ मौण्ड्यमात्रेण सन्तोषं करोति माणवकस्थमसौ मौण्ड्यमिच्छति ॥ इहापि तर्हि न प्राप्नोति—'मुण्डयति माणवक'मिति । अत्रापि ह्युभौ करोतियुक्तौ मुण्डो माणवकश्च । न ह्यसौ मौण्ड्यमात्रेण सन्तोषं करोति ॥ किं तर्हि ? ॥ माणवकस्थमसौ मौण्ड्यं निर्वर्तयति ॥

एवं तर्हि मुण्डादयो गुणवचनाः । गुणवचनाश्च सापेक्षाः । तत्र वचनात्सापे-

---

प्र.] न च मुण्डं करोतीति युगपदुभयोः करोतिकर्मत्वे विवक्षिते 'मुण्डयति बलीवर्द'मिति प्रयोगो न भवतीत्यर्थः । कामन्तर्हीति । अत्रापि मौण्ड्यमेवेष्यते, माणवकस्तु तदाधारविशेषप्रतिपादनायोपात्त इति भावः । उभावत्रेति । माणवकस्य मौण्ड्यकरणेन संस्कार्यत्वादुभयोः कर्मत्वे सापेक्षत्वादेकतरस्मात्प्रत्ययोत्पत्तिर्न भवतीत्यर्थः । गुणवचनाश्चेति । वचनसामर्थ्यात्सापेक्षेभ्योऽपि मुण्डादिभ्यः प्रत्ययो भवति, क्यच्प्रत्ययस्तु निरपेक्षेभ्यः पुत्रादिभ्यः सावकाश इति 'माणवकं मुण्डमिच्छती'त्यादौ सापेक्षेभ्यो न भवति । नन्वयमपि णिज्गुणमात्रविवक्षया सावकाशो 'मुण्डयत्ययं नापित'। प्रवीणो मौण्ड्यकरणे इत्यर्थावगमात्, ततश्च द्रव्यविशेषापेक्षायां प्रत्ययो न प्राप्नोति । नैष दोषः । 'तत्करोती'ति सिद्धे णिचि पुनर्विधानमिदं सापेक्षेभ्योऽपि

---

उ.] भवतीति । 'राजपुरुषो देवदत्तस्ये'त्यादाविवाऽसामर्थ्यादिति भावः । उभयोः कर्मत्वे इति । 'इषिनिरूपिते' इति शेषः । सापेक्षत्वादिति । मुण्डस्य माणवकः समानाधिकरणं विशेषणमिति सापेक्षत्वमिति भावः । एतावता ण्यन्ते गमकत्वं क्यजन्ये गमकत्वमिति दर्शितम् ॥ भाष्ये—माणवकस्थमसाविति । एवञ्च तदा माणवकस्येच्छाविषयत्ववत्करोत्यर्थविषयत्वमपीत्यभिमानः । यद्यपि इषिकर्मत्वमेवान्यस्य वक्तुं युक्तं न । करोतिफलाश्रयत्वाभावात्तस्येत्युभयोः करोतियुक्तत्वाऽभावस्तथापि निशिष्य वेषेण तस्यापि तदाश्रयत्वमित्यभिमानेनैकदेशिन शङ्केयम् । एवञ्च मुण्डपदार्थस्य विशेष्यसापेक्षत्वेनाऽसामर्थ्यं । वस्तुतस्तूभयथाऽपि मुण्डशब्दो धर्मिपर इति तद्भावः । तमन्यथा परिहरति—एवन्तर्हीति । गुणवचना इत्यस्य गुणप्रवृत्तिनिमित्तका इत्यर्थः । सापेक्षा इत्यस्य—धर्मिरूपविशेष्यसापेक्षा इत्यर्थः । ननु मुण्डो नित्यसापेक्षोऽन्यथा वा ? । नाऽऽद्यः, राजपुरुषादौ सम्बन्धिसापेक्षस्यापि गमकस्य गुरुकुलादौ प्रवृत्तिदर्शनादपि चरितार्थत्वात् । नाऽन्त्यः णिचोऽप्यकारणं, अस्मादेव चरितार्थ्यादिति शङ्कते—नन्विति । नैष दोष इति । 'वचना'दिति भाष्यस्य तत्करोतीति सिद्धे वचनसामर्थ्यादित्यर्थ इति भावः । न च तत्करोतीत्यनेन प्रातिपदिकादुक्तत्वे सुबन्तादुत्पत्त्यर्थं विधानमस्त्विति, निर्दोषत्वात्,

धात्वर्थः केन चिदेव शब्देन निर्दिश्यत इति ॥ इह भवन्तस्त्वाहुः 'न भवितव्य'मिति ॥ किं कारणम् ? ॥ इह समानार्थेन वाक्येन भवितव्यं प्रत्ययान्तेन च । यथेहार्थो वाक्येन गम्यते—इष्टः पुत्रः इष्यते पुत्र इति, नाऽसौ जातुचित्प्रत्ययान्तेन गम्यते ॥

॥*॥ क्यचि मान्ताव्ययप्रतिषेधः ॥*॥ क्यचि मान्ताव्ययानां प्रतिषेधो वक्तव्यः । इह मा भूत्—इदमिच्छति किमिच्छति । उच्चैरिच्छति नीचैरिच्छति ॥*॥ गोसमानाक्षरनान्तादिति वक्तव्यम् ॥*॥ [गोसमानाक्षरनान्तादित्येकं वक्तव्यमिप्र ]यदा क्रियाफलस्य कर्मणः प्राधान्यं प्रतिपिपादयिषितं तदा वाक्यमेव प्रयुज्यते पुत्र इष्ट इत्यादि, न तु क्यजन्तं, तस्याऽकर्मकत्वात् कर्मणि प्रत्ययानुत्पादात् ।

स च धात्वर्थ इति । इदञ्च प्रत्ययार्थस्य दर्शितेषु वाक्येषु बोध्यम् । तत्र वाक्ये कर्तृप्रत्ययः प्रयुज्यते कर्मप्रत्ययो वा । प्रत्यये तु तस्याऽकर्मकत्वात्कर्मप्रत्ययो न भवति । नाऽसौ जातु चिदिति । प्रत्ययान्तस्याऽकर्मकत्वात् कर्मणि प्रत्ययोत्पत्त्यसम्भवादित्यर्थः । गोसमानाक्षरेति । अकारादयो दश समानाः । तत्र लृवर्णान्तस्य प्रातिपदिकस्याऽसम्भवात् ककारान्तस्य च, सतस्तत्र ग्रहणम् । अस्मिंस्तु न्यासेऽप्यपि , धात्वनीत्यादिसिद्धिप्रसङ्गात् । भाष्यकारेण तु मतभेदप्रदर्शनायोपन्यासः कृत ।

उ ]यदा क्रियाफलस्येति । तथा च विग्रहे फलस्य विशेष्यतया पुत्रोऽइष्ट इत्यादौ व्यापारस्य विशेषणतया भिन्नार्थत्वान्न तदर्थेऽस्य क्यच् , किन्तु पुत्रमिच्छतीत्यत्राऽर्थ एव । कर्मणि च फलस्य विशेष्यत्वम्—इष्टः पुत्र इत्यादौ सामानाधिकरण्यादनुभवेनाऽवस्य सिद्धमिति भावः । कर्मण इति । कर्मसंज्ञाप्रयोजकस्येत्यर्थः । वस्तुत इत्यव्याख्या 'इह भवन्त' इति मते उचिता । कर्मण इत्यस्य कर्मत्वविशिष्टो यस्तस्येत्यर्थ इत्येवं व्याख्योचिता । अस्मिन्नपक्षे तु वस्तुतः कर्मत्वविशिष्टो यस्तद्वाचकादिति सूत्रार्थ इत्याशयः ॥ [भाष्ये] इह भवन्त इति । सर्वं तद्धितान्तमयो समानार्थत्वमेव । चित्रगुरित्यादेर्विग्रहेऽपि विशेष्यविशेषणभावव्यत्यासात्समानार्थत्वमिति तदाशयः ॥ भाष्ये—मान्ताऽव्ययानामिति । मान्तस्य न सुबन्तविशेषणम्, पुत्रमितीत्यादेरसङ्ग्रहापत्तेः । किन्तु मान्तग्रहणेनैवार्थकम् । तेन कमिच्छतीत्यादावपि नेति बोध्यम् ॥ तत्र लृवर्णेति । यद्यप्यनुकरणे लृकारान्तं लृकारान्तं ऋकारान्तं च सम्भवति तथापि तत्र क्यच प्रयोगदर्शनाऽभाव इत्यर्थः । ककारान्तस्य चेति । 'असम्भवा'दित्यपकर्षः । वस्तुतस्तस्याऽनुकरणस्यैव लोके प्रयुज्यमानत्वाऽभाव इति तात्पर्यम् । मतभेदेति । तथा चेदमनन्तरचितप्रन्थसिद्धमिति भावः । अन्ये तु

१ 'स्त्वावदाहुः' पा० । २ 'इष्टे'ति क्वचित् । ३ 'रिच्छतीति' पा० । ४ इष्ट इत्यादिति केचित् । ५ 'योगान्यामि' पा० ।

कुटीयति प्रासादे । प्रासादीयति कुट्याम् ॥ [ अधिकरणाच्च ] ॥

कर्तुः क्यङ् सलोपश्च ॥ ३।१।११ ॥

सलोपसन्नियोगेनायं क्यङ्विधीयते तेन यत्रैव सलोपस्तत्रैव क्यङ् स्यात् । पयायते । इह न स्यात्–अपि काक श्येनायते । नैतदस्ति । प्रधानशिष्टः क्यङ्, अन्वाचयशिष्टः सलोपो, यत्र च सकारः पश्यामीति । तद्यथा कश्चित्कञ्चित्–ग्रामे भिक्षां चर देवदत्तं चानय। स ग्रामे भिक्षां चरति यदि च देवदत्तं पश्यति तमप्यानयति ॥१॥ सलोपो वा ॥ ॥ सलोपो वेति वक्तव्यम् । पयायते पयस्यते ॥ ॥ओजसोऽप्सरसो नित्यम् ॥२॥ ओजसोऽप्सरसो नित्यं सलोपो वक्तव्यः । ओजायमानं यो अहिं जघान । अप्सरायते। अपर आह–सलोपोऽप्सरस एव, पयस्यत इत्येव भवितव्यम् ॥ कथमोजायमानं यो अहिं जघानेति ? ॥ छान्दसः प्रयोगः, छन्दसि च दृष्टमनुविधीयते ॥३॥ आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा ॥४॥ आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः । अवगल्भते । अवगल्भायते । गल्भ ॥ क्लीबं–विक्लीबते । विक्लीबायते । क्लीबे ॥ होडं–विहोडते । विहोडायते ॥ [ होडृ ] ॥

प्र ]इह 'वाक्काम्यती'ति सम्प्रसारणं किन्नास्मिन्नित्यस्मात् पूर्वं परिहार आश्रयणीय वानो स्वरूपग्रहणं तत्प्रत्यये कार्यविधानम्' । [ काम्यच्च ] ।

उपमानात् । कुट्यामिति । उपमेये सप्तमीश्रवणादुपमानमपि सप्तम्यन्तमिति कर्मविवक्षायामेन प्रयोगाऽसम्भवादार्तिकारम्भः । [ उपमानादाचारे ] ॥

कर्तुः क्यङ् । सलोपविधौ 'कर्तु'रिति स्थानषष्ठी सकारेण कर्तुर्विशेषणात्तदन्तविधिसिद्धावाद्धमायत इत्यादौ सलोपाऽभावः । सलोपसन्नियोगेनेति । एकवाक्यतासन्नियोगार्थं च चशब्दं मत्वा चोद्यते । वाक्यभेदमन्वाचये च चशब्दमाश्रित्य

उ ]नियमार्थतयाऽऽदिपालस्य सम्प्रसारणमित्यर्थः ।वाक्काम्यतीति । 'क्विब्वचिप्रच्छी'ति वार्तिकेन क्विब्दीर्घाऽसम्प्रसारणानि । अस्य प्रयोगस्य सत्त्वे दृष्टमानं चिन्त्यम् । पूर्वपरिहार इति । यजादिभ्यो विहितं इत्यर्थः । वाच् अम् इत्यवस्थायां अस्य स्वप्रत्ययनांऽयं वच्यादिभ्यो विहितः । 'काम्यचश्चितकरणाऽऽनर्थक्य'मिति वार्तिकविरोधेन 'पुत्रकाम्यती'त्यादौ 'सति शिष्टस्य स्वरः' बलीयस्त्वात् किं स्वरः एवं यथा स्यादिति चित्त्व'मिति हरदत्ताद्यभ्युपगतम् । [ काम्यच्च ] ॥

कर्तुः क्यङ् । एकवाक्यतोपपादक–सन्नियोगार्थत्वेत्यादि । एतावतैवैक

१ 'प्रासादीयति कुट्यां, कुटीयति प्रासादे इत्यत्रापि यथा स्यात्' पा० । २ 'तत्रैव स्यात्' पा० । ३ 'भैन' पा० । ४ 'ऽहिं' पा० । ५ 'ओजस्यत' पा० । ६ 'छान्दसत्वात्सिद्धम्' पा० । ७ 'विक्लीब' पा० । ८ 'विहोड' पा० ।

## भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥ ३।१।१२ ॥

हलो लोपसन्नियोगेनाऽत्र क्यङ्विधीयते। तेन यत्रैव हलो लोपस्तत्रैव प्राप्नोति॥ नैष दोषः—प्रधानशिष्टः क्यङ्, अन्वाचयशिष्टो हलो लोपः, यत्र च हल पश्यामीति ॥*॥ भृशादिष्वभूततद्भावग्रहणम् ॥*॥ भृशादिष्वभूततद्भावग्रहणं कर्तव्यम्। इह मा भूत्—क्व दिवा भृशा भवन्तीति॥*॥ च्व्यन्तप्रतिषेधानर्थक्यं च भवत्यर्थे क्यङ्वचनात् ॥ ॥ च्विप्रतिषेधश्चाऽनर्थकः ॥ किं कारणम्? ॥ 'भवत्यर्थे क्यङ्वचनात्'। भवत्यर्थे हि क्यङ्विधीयते ॥*॥ भवतियोगे च्विविधानम् ॥*॥ भवतिना योगे च्विर्विधीयते। तत्र च्व्यन्तात् सामान्याऽर्थस्य क्यङ् भविष्यति॥ डाजन्तादपि तर्हि न प्राप्नोति—पटपटायते। पटपटायति। डाजपि हि भवतिना योगे विधीयते, भवत्यर्थे क्यङ ॥*॥ डाचि वचनप्रामाण्यात् ॥*॥ डाचि वचनप्रामाण्याद्भविष्यति ॥ किं वचनप्रामाण्यम्? ॥ 'लोहितादिडाज्भ्यः क्यष्'इति ॥ इह किं च्विः क्रियमाणो बाध्यते किं च्विः क्रिय

प्र ]भृशादिभ्यो। हल इति। हलः भृशादयो विशेष्यन्ते तेन हलन्तानामेव क्यङ्लोपाभ्यां भवितव्यमित्यर्थः। प्रधानशिष्ट इति। वाक्यभेदेन सर्वेभ्यो भृशादिभ्यः क्यङं विधाय हलन्तानां लोपो विधीयत इत्यर्थः। अन्यथाऽनर्थकः पाठः स्यादहलन्तानाम्। क्व दिवा भृशा भवन्तीति। रात्रौ भृशाऽऽलोका नक्तन्दिवमे क्व प्रदेशे भवन्तीत्यर्थः। अत्राऽभूततद्भावाऽभावः। च्व्यन्तत्वाविति। च्विसहचारितेन भवतिनेत्यर्थः। डाचि वचनप्रामाण्यादिति। अप्रयुक्त एव भवतौ भवत्यर्थविवक्षायां वचनप्रामाण्याड्डाचं विधाय भवत्यर्थे क्यङ्विधीयत इत्यर्थः।

उ ]न विशेष' इति 'कृभ्वस्तियोग' इति सूत्रस्थभाष्ये स्पष्टम्। अन्यथा भृशादिहलन्तप्रकृतिके विशेषः स्यात्। अन्यहल्लन्तस्याप्यप्राप्तिः तेनेति तदाशयः॥[कर्तुः क्यङ्]।

भृशादिभ्यो। ननु भृशादीनां हलन्तानामेव ग्रहणात्तेनैव प्राप्नोतीत्यस्य व्यावर्त्योऽभाव इत्यत आह—हल इति। आवृत्त्या विभक्तिविपरिणामेनेति भावः। अन्यथा हि सर्वत्र हलो लोपः स्यादित्याद्यर्थेऽदिस्याशय। भृशाऽऽलोका इति। अधिकाऽऽलोका इत्यर्थः। भवत्यर्थे च्व्यन्तविधानेन 'च्व्यन्तस्या'दित्य सङ्गतमेतत्यत आह—च्विसहचरितेनेति। भाष्ये—डाजन्तादपीति। 'स्य'दिति शेषः। वचनप्रामाण्यस्य क्यष्प्रवृत्तौ हेतुत्वे क्यङन्तसमभिव्याहारे भवतेरपि प्रयोगः स्यादत आह—अप्रयुक्त इति। भवत्यर्थेति। 'कृभ्वस्तियोग' इत्यस्य डाज्विधावनुगमस्य तदर्थयोग इत्यर्थः। च्विविधौ तु शब्दयोग इत्येवार्थ इति भावः। कृभ्वस्तियोग इत्यस्योऽपि डाचीति ज्ञापयत इति इतिप्रत्ययस्यार्थादमेव तात्पर्यम्। भाष्ये—अक्रियमाणमिति। अभूततद्भावग्रहणमित्यर्थः॥ नन्वित्युक्त-

मार्णं प्रत्याख्यायते ॥ न सूत्रभेदः कृतो भवति ॥ यथान्यासमेवाऽस्तु ॥ ननु चोक्त'मिह कस्मान्न भवति क दिवा भृशा भवन्त्वी'ति ? ॥ ॥ नञिवयुक्त-मन्यसदृशाधिकरणे तथा ह्यर्थगतिः ॥९॥ नञ्युक्तमिवयुक्तं वा यत्किंचिदिह दृश्यते तत्रोऽन्यस्मिंस्तत्सदृशे कार्यं विज्ञायते ॥ [किं कारणम् ? ॥ तथाह्यर्थ-गति ']॥ तथा ह्यर्थो गम्यते । 'अब्राह्मणमानये'त्युक्ते ब्राह्मणसदृश एवानीयते नासौ लोष्टमानीय कृती भवति । एवमिहाऽप्यच्वेरितिच्विप्रतिषेधादन्यस्मिन्-च्व्यन्ते च्विसदृशे कार्यं विज्ञास्यते ॥ किं चाच्व्यन्तोऽप्यच्व्यन्त च्विसदृशम् ?॥ अभूततद्भावः ॥

इह पाथिप्रकृतय सोपसर्गा पठ्यन्ते—अभिमनस् सुमनस् उन्मनस् दुर्मनस् । तत्र विचार्यते—भृशादिषूपसर्गाः प्रत्ययार्थविशेषणं वा स्यात्—'अभि-भवतौ सुभवतावुद्भवतौ दुर्भवता'विति । प्रकृत्यर्थविशेषणं वा,—'अभिमन-श्शब्दात् सुमनश्शब्दादुन्मनश्शब्दाद्दुर्मनश्शब्दा'दिति । युक्तं पुनरिदं विचार-यितुम् । ननु चानेनाऽसन्दिग्धेन प्रकृत्यर्थविशेषणेन भवितव्यं यावता प्राक्प्रकृते-पठ्यन्ते ॥ यदि हि प्रत्ययार्थविशेषणं स्युः प्राग्भवतेः पठ्येरन् ॥ नेमे वाक्याः

प्र.]यथान्यासमिति । 'अच्वे'रिति पर्युदासाश्रयेण दोषद्वयस्यापि परिहार इत्यर्थः । इह पाथिप्रकृतिति । यदा मन शब्देनाऽसमस्ता एव सुदुरभय इति पक्षस्तदा प्रत्य-यार्थविशेषणं ते भवन्ति । मन शब्दस्याऽवृत्तिविषये तद्वृत्ति वर्तते । मनस्वी सुष्ठु-भवति, उद्भवति, दुष्टु भवति, आभिमुख्येन भवतीत्यस्यार्थे क्यङ्विधिः । अन्ये-त्वाहु—प्रायर्थस्याऽत्र वृत्तिविषये भवतेर्ग्रहणं, तेन मन धर्मं शोभनं प्राप्नोतीत्यादि-रर्थं क्यङन्तस्य भवति । यदा तु मन शब्देन स्वादीनां बहुव्रीहिरिति पक्षस्तदा प्रकृत्यर्थविशेषणं ते भवन्तीति विचार. क्रियते । प्राक्प्रकृतेरिति । प्रकृतेरेवानयथा

उ ]मिति न्याये स्वयुक्तमिति स्पष्टत्वार्थम् । अन्यस्मिंस्तत्सादृशे इत्यनेनाऽभेदेपि सादृश्यमस्तीति सूचयति॥ प्राक्प्रकृते पाठेन प्रत्ययार्थविशेषणत्वपक्षोऽसम्भावितोऽत आह—यदेति । समस्तत्वाऽसमस्तत्वाभ्यां पक्षद्वयसम्भव इति भाव । 'असुमना सुमना भवती'त्यर्थस्य क्यङन्तात्प्रतीतेः समास एवाऽऽवश्यकोऽत आह—मन.-शब्दश्चेति । तदर्थे मनआदीनामेव सापुत्वाख्यानयाऽपि प्रकृतिमात्रस्याऽसाधुत्वं स्यादत आह—अन्ये त्विति। असुमना सुमना भवतीत्यर्थस्तु पक्षद्वयेऽप्यार्थ इति भाव । मन.कर्मेति । मन धर्मं शोभनं कर्म प्राप्नोतीत्यन्वय ॥प्रकृते प्राक्पाठे त्वाऽसमस्तसमस्ताभ्यां पक्षद्वयोरपक्षेत्यत्वेनाह—प्रकृतेरेवेति । अवयवर्मवन्धे

१ 'तनो' । २ अयं पाठः क्वचिदपि नास्ति मन्त्र उ०. । ३ 'स्थानाऽन्य-दृश्यन्ते' । ४ 'वा'शब्द क्वचित् । ५ 'ननु चोक्ते' पा० । ६ 'स्यात्' पा० ।

प्रयोगो न भवति ॥ अस्त्यत्र विशेषः, एकेनात्र विशिष्टे प्रत्ययार्थे प्रत्यय उत्पद्यते । इह पुनरनेकेन । तत्र भवायत इत्युक्ते सन्देहः स्यात्—अभिभवतां सुभवतामुद्भवतां दुर्भवतामिति । तत्रासन्देहार्थमुपसर्गः प्रयुज्यते ॥

यत्र तर्ह्येकेन—उत्पुच्छयते[१] ॥

अत्राप्यनेकेन ॥ "पुच्छ उदसने पुच्छ व्यसने पुच्छ पर्यसने चे"ति ॥ इति ॥

लोहितादिडाज्भ्यः क्यष् ॥ ३।१।१३ ॥

किमर्थः षकारः ?[२]॥*॥ [षकारो] गुणवृद्धिप्रतिषेधार्थः ॥*॥ ङ्किति चेति[३] गुणवृद्धिप्रतिषेधो यथा स्यात् ॥ नैतदस्ति प्रयोजनम्, सार्वधातुकार्द्धधातुकयोरङ्गस्य गुण उच्यते । धातोश्च विहितः प्रत्ययः शेष आर्द्धधातुकसंज्ञां लभते, न चायं धातोर्विधीयते । लोहितादीनि प्रातिपदिकानि ॥ सामान्यग्रहणार्थस्तर्हि ॥ क्व सामान्यग्रहणार्थेनार्थः ?॥ 'न क्ये' इति ॥ नायं नान्ताद्विधीयते ॥ इह तर्हि—'यस्य हलः' 'क्यस्य विभाषे'ति ॥ नायं हलन्ताद्विधीयते ॥ इह तर्हि 'आपत्यस्य च तद्धिते नाति', 'क्यच्व्योश्चे'ति ॥ नायमापत्याद्विधीयते ॥ इह तर्हि 'क्याच्छन्दसी'ति ॥ 'क्याच्छन्दसी'त्येव तद्भवति । भुरण्युस्तुरण्युर्भुरण्युरित्येवमर्थम् ॥ इदं तर्हि प्रयोजनम्—यस्तद्बहुचकार इति दीर्घश्चात्र ङिद्ग्रहणमनुवर्तते तदिहापि यथा स्यात् लोहितायते इति ॥ किं पुनः कारणं तत्र ङिद्ग्रहणमनुवर्तते ? ॥ इह मा भूत्—उरस्या धृष्णुयेति ॥ यदि ङिद्ग्रहणमनुवर्तते पित्व-

---

प्र ]लोहितादि। भुरण्युरिति। कण्ड्वादियगन्तात्प्रत्ययः। उरस्येति। सुपां सुलुगिति ।

उ ]नाम्ध्यांत्समुदायविशेषकतेति भावः। नन्वकारस्याऽनुदात्तत्वाऽनुनासिकत्वप्रतिज्ञाने तत्सामर्थ्यादुच्चारणार्थस्याऽस्वरितेतरकार्ये इत्त्वे लोपे उपस्थिते सान्तग्रामशब्दस्य तदन्तस्य वा लोके युद्धे वर्तमानताऽभावेन 'युद्धे योऽयं ग्रामशब्द' इत्यनुवादाऽसम्भवेन सम्पूर्णस्याऽलाभेन च सङ्ग्राम युद्धे वर्तते ततश्च णिजिति विशिष्टपाठस्यानर्थकत्वेन कथं नियमार्थतेति चेन्न द्वितीयमकारं प्रश्लिष्य तस्याऽनुदात्तत्वाऽनुनासिकत्वं प्रतिज्ञायत इति तत्तात्पर्यात् । अनाऽनुनासिकत्वे मानं चिन्त्यम् भाष्यप्रयोगस्य पाक्षिकात्मनेपदलोपसत्त्वे ॥ भाष्ये—एवन्तर्हि भृशादिषूपसर्गास्थेति। भृशादिषु पठितस्योपसर्गस्यानर्थ्यं । तेन 'अभिभृशायते' इत्यादौ न षत्वम् । 'देवदत्त सुमनायते' इत्यादौ च योगेऽपि 'निष्ठान्त' इति षत्वम् ॥ [कर्त्तुः क्यङ्]।

लोहितादिडा । भाष्ये—गुणवृद्धीति । गणरत्नपठितेभ्यस्त्वप्राप्ते ॥

---

१ च क्वचिन्न । २ इह लुप्त सम्प्रति । '॥*॥ षकारो गुणवृद्धिप्रतिषेधार्थः ॥*॥' इति वार्त्तिकमेतदिति कैयटः । ३ 'ङ्कितीति' पा० । ४ 'स्येनावद्ध' पा० । ५ लोहितायति पा० । ६ इति क्वचिन्न । ७ 'यदि तत्र' पा० ।

मिति पितृ रीङ्भावो न प्राप्नोति । रीङ्भावे श्छिद्ग्रहणं निवर्तिष्यते ॥

यदि निवर्त्तते कथमसूया वसूया च यजामह इति?॥ असूयतेरसूया वसूयतेर्वसूया ॥अथ वा छान्दसमेतत् । दृष्टानुविधिश्च छन्दसि भव[ती]ति॥ यदि च्छान्दसत्व हेतुर्नार्थः श्छिद्ग्रहणेनाऽनुवर्तमानेन॥कस्मान्न भवति उरया धृष्णुयेति ? ॥ छान्दसत्वात् ॥ अथ वाऽस्त्वत्र दीर्घ च, छान्दसं ह्रस्वत्व भविष्यति । तद्यथा–'उपगायन्तु मां पत्नयो गर्भिणयो युवतय' इति ॥

अथ किमर्थ. पकारे ?॥[पकारो]विशेषणार्थ ॥क विशेषणार्थेनार्थ ?॥ 'वा क्यष' इति । वा यादिति ह्युच्यमाने–'पाश्या' अतोऽपि प्रसज्येत ॥ नैतदस्ति प्रयोजन परस्मैपदमित्युच्यते न चाऽत्र परस्मैपदं नाप्यात्मनेपद पश्याम' ॥ सामान्यग्रहणाविघातार्थस्तर्हि भविष्यतीति॥ क सामान्यग्रहणाविघातार्थेनार्थ ?॥ 'क्याच्छन्दसी'ति । याच्छन्दसीत्येव च तद्वक्तव्यम् । चुरण्यु, तुरण्यु भुरण्युरित्येवमर्थम्॥-॥लोहितडाज्भ्य क्यष्वचनम्॥*॥लोहितडाज्भ्य क्यष्वक्तव्यः ।

प्र ]तृतीयास्थाने यादेश । पित्र्यमिति । पितुरागतमिति 'पितुर्यच्चे'ति यत्प्रत्यय । यदीति । यदि रीङ्भाव एव निवर्तते न तु दीर्घविधावपि तदा असुवसुशब्दाभ्या पूर्ववद्यादेशे कृते दीर्घाभावादसूयावसूयेति न सिध्यति । असूयते कण्ड्वादियगन्त्याऽसूयेति । वसूयतेरिच्छाक्यजन्तस्य वसूयेत्युत्तरम् । अथ वेति । वर्णव्यत्ययेन दीर्घ क्रियतइत्यर्थ । यदीति । अनेन चकार प्रत्याख्यात । इदानीं पकारप्रत्याख्यानाय विचार क्रियते–अथ किमर्थ इति । पाश्येति । 'पाशादिभ्यो य' इति समूहे यप्रत्यय । 'वा या'दिति सूत्र विध्यर्थं मन्यते । टापि कृतएकादेशस्यान्तवद्भावाद्यप्रत्ययान्तमेतत् । नैतदस्तीति । सामान्यविहितानामात्मने पदस्मैं पदानां नियमार्थं प्रकरणमित्यदोप । लोहितडाज्भ्य इति । आदिशब्द

उ.]पित्र्ये यति रीङ् । यस्येति लोप । ननु श्छितीति निवृत्तावसूयेत्यपि सिद्धमत आह–यदीति ॥ उत्तरमिति ।असूयया धनेच्छया च यजामहे इति श्रुत्यर्थ । अप्रत्ययान्तटाबन्ताद्विभक्तेश्छन्दसो लुगिति भाव ॥ अथ वेति पक्षे प्राणंसुभिश्च यजामहे इत्यर्थ । भाष्ये नाऽर्थ. श्छिद्ग्रहणेनेति । अत एव 'ज्यादादीयस' इत्यत्राऽप्रवृत्तपरिभाषापक्षस्त्र सङ्गच्छते ॥ नियमार्थमिति । ननु नियमार्थत्वेऽपि पाश्याशब्दादिशब्देभ्य आचारक्विबन्तभ्य पक्षे तङ् स्यात्तद्वारणार्थं पकारोच्चारणमिति चेन्न,एतद्भाष्यप्रामाण्येन सूत्रभूताऽनुबन्धमन्यद्वा निमित्तमादायाऽऽचारक्विबन्ते एतत्प्रकरणाऽप्रवृत्ते । अनभिधानादीदृशे विषये आचारक्विपोऽभाव एवत्यन्ये ॥

१ च क्वचिन्न । २ ॥*॥ 'पकारो विशेषणार्थ' ॥ ॥ इति वार्तिकम् । ३ इद क्वचिन्न । ४ 'अत्रापि' पा० ।

कष्टकृच्छ्रगहनेभ्य कण्वचिकीर्षायामिति वक्तव्यम् । सत्रे-सत्रायते । सत्र ॥ कक्ष-कक्षायते । कक्ष ॥ कष्ट कष्टायते । कष्ट ॥ कृच्छ्रे-कृच्छ्रायते । कृच्छ्र ॥ गहन-गहनायते । गहन ॥ अपर आह-॥ ॥ सत्रादिभ्यश्चतुर्थ्यन्तेभ्य क्रमणेऽनार्जवे क्यङ् ॥ ॥ [सत्रादिभ्यश्चतुर्थ्यन्तेभ्य क्रमणेऽनार्जवे क्यङ्] वक्तव्य । तान्येवोदाहरणानि ॥ सत्रादिभ्य इति किमर्थम् ? ॥ कुटिलायाऽनुवाकाय क्रामति ॥ चतुर्थ्यन्तेभ्य इति किमर्थम् ?॥ अत्र कष्ट क्रामति ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् । नैतेभ्य यथान्तनिपातनम् ॥ किं तर्हि ?॥ तादर्थ्ये एषा चतुर्थी, कष्टाय यत्प्रातिपदिक, कष्टार्थे यत्प्रातिपदिकमिति ॥

कर्मणो रोमन्थतपोभ्या वर्तिचरो ॥ ३।१।१५ ॥

रोमन्थ इत्युच्यते कोऽयं रोमन्थो नाम ?॥ उद्गीर्णस्य वाऽवगीर्णस्य वा

प्र ]दयोऽत्र वृत्तिविषये पापपर्याया । कण्व पापमुच्यते । कुटिलायेति । दुरध्येयत्वादनुवाकस्याऽनार्जवमस्तीति भाव । अत्र इति । अनार्जवयुक्त पन्थान गच्छतीत्यर्थ । कष्टाय यदिति । कष्टलक्षणार्थप्रतिपादनाय यत्प्रातिपदिक प्रयुज्यते तस्मात् क्रमणेऽर्थे क्यङ्भवतीत्यर्थ । क्रमणविशेषणाऽनार्जवमभिधानशक्तिस्वाभाव्याल्लभ्यते । व्यवस्थितविभाषाविज्ञानाच्च पापादिभ्योऽनिष्टप्रसङ्गाऽभाव । [कष्टाय क्रमणे] ।

कर्मणो । उद्गीर्णस्येति । मुखप्रदेश प्राप्तस्येत्यर्थ । अवगीर्णस्येति ।

उ ]कर्मणे'इति कर्मपदमप्रयुक्तम् । अत एव सूत्रार्थव्याख्यानोत्तरम्-'अत्यल्पमिदमुच्यते कष्टाय क्रमणे इति, सत्रादिभ्य कण्वचिकीर्षायामिति वक्तव्य'मित्युत्तरभाष्य सङ्गच्छते। पापचिकीर्षाया गम्यमानायामित्यर्थ । न च चिकीर्षा उत्साह एव, तस्या गम्यत्वे 'क्रामती'ति परस्मैपदप्रयोगाऽनुपपत्ति, गमनरूपक्रमणपदार्थेनोत्साहस्य गम्यत्वेऽपि क्रमेस्तदर्थत्वाऽभावात् । नव्यास्तु 'वृत्तिसर्गतायनेषु क्रम' इत्यादौ वृत्त्युत्साहार्थत्वमेवाऽऽश्रित्य चिकीर्षाया एवोत्साहरूपाया प्रत्ययार्थत्वमाश्रित्य 'क्रमण' इत्यात्मनेपदमप्रयुक्त, तद्भाष्यविरुद्धम् । अनार्जवमेव क्रमणमिति । अनार्जवविषयमेव क्रमणमित्यर्थ । तद्ध्वनयन् वक्ष्यति-अनार्जवयुक्त पन्थान गच्छतीत्यर्थ इति । अपर आहेत्यनेन च परस्पर वाक्ययो व्याख्येयव्याख्यानभावो गम्यते इति न पूर्वापरविरोध ॥ व्यवस्थितेति । अनभिधानादिति तत्त्वम् ॥ [ लोहितादिडा ] ।

कर्मणो रोम । भाष्ये अवगीर्णस्य वा मन्थ इति । मन्थो-चलनम् । तच्चोद्गीर्णस्य चर्वणम् । अन्यस्याऽऽननरूप ॥ हनुचलन इत्युक्त्योद्गीर्णविषय एव प्रयोग ।

१ इद क्वचिन्न । २ इद वार्तिकव्याख्याभाष्यमित्यन्ये । अपरपठित वार्तिकमित्यपरे । ३ इद व्याख्यान तुम स्यादिति पौदा ॥ ४ 'क्रामत्यनुवाकाय' पा० । ५ 'नैद' पा० । ६ 'कष्टाऽर्थे' । ७'णो रोम' पा० ।

मन्य [रोमन्थं टनि।]यद्येव,॥ ॥ हनुचलने॥ ॥ हनुचलन इति वक्तव्यम्। इह मा भूत्—कीटो रोमन्थं वर्तयतीति॥ तत्तर्हि वक्तव्यम्?॥ ॥ न वाऽनभिधानात्॥ ॥ न वा वक्तव्यम्॥ कस्मान्न भवति—कीटो रोमन्थं वर्तयतीति?॥ 'अनभिधानात्'॥ ॥ तपसः परस्मैपदं च ॥*॥ तपसः परस्मैपदं चेति वक्तव्यम्। तपश्चरति तपस्यति॥ कथं 'तपस्यन्ते लोकविश्रुताः'?॥ आत्मनेपदमाङ्क्षीष्यति। [ कर्मणो रोमन्थतपोभ्याम् ]॥

बाष्पोष्मभ्यामुद्वमने ॥ ३।१।१६ ॥

॥*॥ फेनाच्च॥*॥फेनाच्चेति वक्तव्यम्। फेनायते। [ बाष्पोष्मभ्यामुद्व ]।

शब्दवैरकलहाऽभ्रकण्वमेघेभ्यः करणे ॥३।१।१७॥

॥*॥ अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणम् ॥*॥ अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणं कर्तव्यम्। अटा—अटायते। [अटाँ]॥ अट्टा—अट्टायते। [अट्टाँ]॥शीका—शीकायते। [शीकाँ]॥ कोटा—कोटायते। [कोटाँ]॥ पोटा—पोटायते [ पोटाँ ]॥ सोटा—सोटायते। सोटा॥ प्रुष्टा—प्रुष्टायते। प्रुष्टा॥ प्लुष्टा—प्लुष्टायते। प्लुष्टा॥ ॥सुदिनदुर्दिनाभ्यां च ॥*॥ सुदिनदुर्दिनाभ्यां चेति वक्तव्यम्। सुदिनायते दुर्दिनायते॥ ॥ नीहाराच्च ॥ ॥ नीहाराच्चेति वक्तव्यम्। नीहारायते॥ [ शब्दवैरकलहाभ्रकण्वमेघेभ्य ]।

सुखादिभ्यः कर्तृवेदनायाम् ॥ ३।१।१८ ॥

कर्तृवेदनायामिति किमर्थम्?॥ इह मा भूत्—सुखं वेदयते प्रसाधको देवदत्तस्य॥ 'कर्तृवेदनाया'मित्युच्यमानेऽप्यत्र प्राप्नोति॥ किं कारणम्?॥ 'कर्तु'रिति कर्तरि षष्ठी, 'वेदनाया'मिति चा ऽनो भावे। स यथैवात्मनो

प्र ]भगवत्प्रकरणानि सुगमान्यन्यानि। हनुचलन इति। हनुचलनसहचरितं चर्वितस्य मुखप्रदेशं आकृष्य यच्चर्वणं तत्र यथा स्यादित्यर्थः। कीट इति। वदनप्रदेशाद्विनिर्गतस्य चर्वितस्य। अनभिधानादिति। रोमन्थायते इति कर्तृत्वेन लौकिके प्रयोगे चर्वितचर्वणस्यैवाभिधानं न तदन्तरस्येत्यर्थः। [ कर्मणो रोमन्थ ]।

उ ]सुखादयः—सहचरितमिति। अर्थान्तरार्थं इति। वर्तुः करोतीत्यर्थे इत्यन्ये॥ नेति। एतत्र तत्र प्रयोगाऽभावान्नि तद्धेतुरयथेन यत्नेनेति भाव॥

सुखादिभ्य क। भाष्ये—सुखं वेदयत इति। सुखप्रसाधकेन देवदत्तस्य यत्र प्रसाधकः वेदयत इत्यन्वयः॥ यत्तत्र्यन्तरङ्गत्वात्कारकत्वेन वेदनायामन्वयो

१ इदं क्वचिन्न। २ इदं वार्तिकं क्वचिन्न। ३ 'न वक्तव्य'। ४ 'वाङ्ग'। ५ 'प्रुष्टा'प्रभृति क्वचिन्न। ६ अयं पाठो लुप्त। ७ 'सुदिनदुर्दिननीहारेभ्यश्चेति वक्तव्यम्'। ८ वेदयति सारं। ९ इति क्वचिन्न। १० 'चात्मनो'।

वेदयतेऽथापि परस्य, कर्तृवेदनेनासौ भवति ॥ न कर्तृग्रहणेन वेदनाऽभिसंबध्यते ॥ किं तर्हि ? ॥ सुखादीन्यभिसंबध्यन्ते—'कर्तृयानि सुखादीनी'ति ॥

नमोवरिवश्चित्रङः क्यच् ॥ ३।१।१९ ॥

॥ * ॥ नमसः क्यचि द्वितीयानुपपत्तिः ॥ * ॥ नमसः क्यचि द्वितीया नोपपद्यते—नमस्यति देवानिति ॥ किं कारणम् ? ॥ नमःशब्देन योगे चतुर्थी विधीयते सा प्राप्नोति ॥ * ॥ प्रकृत्यन्तरत्वात्सिद्धम् ॥ * ॥ [ प्रकृत्यन्तरत्वात्सिद्धमेतत् ] । नमःशब्देन योगे चतुर्थी विधीयते, नमस्यतिशब्दश्चायम् ॥

ननु च नमस्यतिशब्दे नमःशब्दोऽस्ति तेन योगे प्राप्नोति ॥ नैष दोषः । अर्थवतो नमःशब्दस्य ग्रहणं, न च नमस्यतिशब्दे नमःशब्दोऽर्थवान् ॥

अथ चोपपदविभक्तेः कारकविभक्तिर्बलीयसीति द्वितीया विभक्तिर्भविष्यति॥

॥ * ॥ क्यजादिषु प्रत्ययार्थनिर्देशः ॥ * ॥ क्यजादिषु प्रत्ययार्थनिर्देशः कर्तव्यः ॥

प्र ] सुखादिभ्य । किं तर्हीति । वेदनाया कर्मान्तरेणाऽभावात् । कर्तृग्रहणसामर्थ्यात् सुखादीनि विशेष्यन्ते । कर्तृग्रहणं च 'सुपां सुलु'गिति षष्ठ्युत्तरनिर्दिष्टम् । ततश्च वेदनेन यदा ममबन्धीनि सुखादीनि वेदयते तदा प्रत्ययो, नान्यदीयसुखादिवेदने । [ सुखादिभ्यः कर्तृवेदनायाम् ]॥

नमो वरिव । प्रकृत्यन्तरत्वादिति । 'नमस्ये'ति धातुं व्युत्पादयितुं निपातनमःशब्दसदृशशब्दान्तरान्वयकल्पना क्रियते । परमार्थतस्तु अविद्यमानावयवार्थो नमस्यशब्दः पूजावाची प्रकृत्यन्तरमित्यर्थः । ननु चेति । 'स एवाय'मिति प्रत्यभिज्ञानान्निपात एवाऽयमिति भावः । अर्थवत इति । नमस्यशब्दस्य समुदायस्यैवार्थवत्त्वादिति भावः । अथ चेति । अर्थवत्ताभ्युपगमेन नमस्कारेण पूजनीयार्थोऽकारेण परिहारान्तरम् । चतुर्थ्यास्तु 'नमोऽस्तु देवेभ्य' इत्यादिरवकाशः । 'नमस्करोमि नारायण'मित्यत्रापि कारकविभक्तिरेव भवति । क्यजादिष्विति । करण-

उ ] त्वाद्यसत्यपि सामर्थ्यात् सुखादिभिरन्वय इत्याह—वेदनाया इति । समस्तस्याऽन्यत्राऽन्वयाऽसम्भवादाह—सुपां सुलुगिति । 'वेदना'शब्दे 'विद चेतने'ति चौरादिकण्यन्तात् 'ण्यासश्रन्थ' इति युच् । नान्यदीयेति । सुखप्रमादादिना लिङ्गेनेति भावः ॥

नमोवरि । 'नमस्'शब्दस्य प्रकृत्यन्तरत्वेऽपि 'नम'शब्दान्क्यचो विधानेन तद्योगे चतुर्थी स्यादत आह—नमस्येतीति ॥ निपात एवेति । अव्ययस्योपलक्षणमेतत् । अन्यथा 'साक्षात्प्रभृतीनी'त्यनेन कृञ्योगे एव स्वार्थे एव च निपातत्वविधानादत्र तदभावेनाऽसङ्गतिः स्यात् ॥ अर्थवत्त्वादिति । वस्य मुद्गलदेवपूजेऽर्थवत्त्वादिति भावः ॥ इत्यर्थोऽङ्गीकारेणेति । अनेनेन सूचयति—'नाऽयम

१ इति क्वचित् । २ इदं क्वचित् । ३ इदं त्रुटितं भाति ।

[ ॥-॥ 'नमस पूजायां' 'वरिवस परिचर्यायाम्' 'चित्रङ आश्चर्ये' 'भाण्डात्समाचयने' 'चीवरादर्जने परिधाने च' 'पुच्छादुदसने व्यसने पर्यसने च ॥ ॥] १ नमस पूजायां वरिवस परिचर्यायां चित्रङ आश्चर्ये भाण्डात्समाचयने चीवरादर्जने परिधाने च, पुच्छादुदसने व्यसने पर्यसने चेति ॥ किं प्रयोजनम् ?॥॥ ॥ क्रियावचनं सार्थम् ॥ ॥ क्रियावचनता यथा स्यात् । नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति–'क्रियावचना' क्यजादय' इति, यदय 'सनाद्यन्ता धातव' इति धातुसंज्ञां शास्ति ॥ कथं कृत्वा ज्ञापकम् ? ॥ धातुसंज्ञावचन एतत्प्रयोजनं 'धातो'रिति तव्यदादीनामुत्पत्तिर्यथा स्यात् । यदि चाऽत्र क्रियावचनता न स्याद्धातुसंज्ञावचनमनर्थकं स्यात् । सत्यामपि धातुसंज्ञायां तव्यदादयो न स्यु ॥ किं कारणम् ?॥ साधने तव्यदादयो विधीयन्ते, साधनं च क्रियाया । क्रियाया अभावात्साधनाऽभाव । साधनाऽभावात्सत्यामपि धातुसंज्ञायां तव्यदादयो न स्यु । पश्यति त्वाचार्य –'क्रियावचना क्यजादय' इति, ततः 'सनाद्यन्ता धातव' इति धातुसंज्ञां शास्ति ॥ ननु चेद प्रयोजनं स्यात् 'परसाधने तव्यदादीनामुत्पत्तिं वक्ष्यामी'ति ॥ न परसाधने उत्पत्त्या भवितव्यम् ॥ किं कारणम् ?॥ 'साधन'मिति सम्बन्धिशब्दोऽयम् । सम्बन्धिशब्दाश्च

प्र ]प्रहणस्य वेदनाग्रहणेन व्यञ्जनानान्तानामिकारे स्वार्थे प्रत्ययप्रसङ्ग इति वचनम्। वरिवस इति। सपर्या–सेवा। 'परिचर्याया'मिति पाठान्तरम्। परसाधन इति। शब्दान्तरवाच्याया क्रियाया कर्मादिसम्बन्धे तत्र तव्यादीना'मत पश्ये'त्यादौ द्वितीयादीनामिव स्वार्थिकत्वात्प्रत्ययार्थे चेऽपि क्यजाद्यन्तानामुत्पत्ति स्यादेवेति भाव । न परसाधन इति। द्वितीयादीना प्रातिपदिकाद्विधानात्तस्य च द्रव्यवचनत्वाद्वचनप्रामाण्यात् परसाधन उत्पत्तिर्भविष्यतीति। तव्यादयस्तु धात्वन्तरेषु क्रियावाचिषु स्वसाधने भाव

उ ]ऽत्र प्रतीयते, किन्तु वरिवस्यति इत्यादिभ्य सपर्यादिमात्रप्रतीतिरिदस्मात्पूजामात्रप्रतीतिरित्याद्य एव समाधिरत्र युक्त , अयन्त्वेकदेशिन इति ॥ करणपदाऽनुवृत्त्या क्रियामानात्वे नियाचि प्रयोगवशादेव तद्विशेषप्रतीतिर्भविष्यतीति क्रिमेवंरीत्येत्याह–करणग्रहणस्येति । भाष्ये–साधने तव्यदादय इति । धातोऽपि क्रियाप्रवृत्तिभाव ॥ शब्दान्तरेति । स्वार्थिकत्वात्क्यजाद्यन्ताना द्रव्यवाचित्वेऽपि शब्दान्तरवाच्यक्रियाकारके तव्यादीनामुत्पत्ति स्यादेवेत्यन्वय । तत्र दृष्टान्तो–धूप्समित्यादि ॥ तव्यादयस्त्विति । एवञ्च धातुसंज्ञाविधानमेवैषां क्रियावाचकत्वे मानमिति भाव ॥ भाष्ये अथ वा धातव एवेति । क्रियावचना एवेत्यर्थ । क स्वल्पीति ।

१ इद हस्तम् । २ 'सपर्याया' पा० । ३ इद क्वचित्र । ४ 'वा' पा० । ५ 'क्रियाऽभावा' पा० । ६ इद पद क्वचित्र । ७ 'भवति' ।

पुनरेवमात्मकः यदुत सम्बन्धिनमाक्षिपन्ति। तद्यथा 'मातरि वर्तितव्यं' 'पितरि शुश्रूषितव्य'मिति । न चोच्यते 'स्वस्यां मातरि' 'स्वस्मिन् वा पितरी'-ति । सम्बन्धाच्चैतद्गम्यते--'या यस्य माता' 'यस्य यश्च पिते'ति । एवमिहा-ऽपि सम्बन्धादेतद्गन्तव्य--'यस्य धातोर्यत्साधन'मिति ॥ अथ वा धातव एव क्वजादयो, न चैव ह्यर्था आदिश्यन्ते क्रियावचनता च गम्यते । क. खल्वपि पचादीनां क्रियावचनत्वे यत्न करोति । येनैव खल्वपि हेतुना पचादय क्रिया-वचनास्तेनैव क्वजादयोऽपि । एवमर्थं खल्वाचार्यश्चित्रयति,-'क्वचिदर्थां-न्नादिशति, क्व चिन्ने'ति ॥ एवमप्यर्थादेशन कर्तव्यं-कथमिमे अनुधा धुष्येर-न्निति ॥ अथ वा वाक्यमर्थादेशनमकर्तुम् ॥ कथम् ? ॥ करण इति वर्तते । करणं च करोतेरर्थ । करोतिश्च क्रियासामान्ये वर्तते । [ नमोवारे ] ॥

मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ३।१।२१॥

इमौ हलिकली स्त इकारान्तौ—हलिः कलिः । अस्ति हल्शब्द. कल-शब्दश्चाऽकारान्त , कयोरिदं ग्रहणम् ?॥ याविकारान्तौ, तयोरत्वं निपात्यते ॥ किं प्रयोजनम् ? ॥*॥ हलिकल्योरत्वनिपातन सन्वद्भावप्रतिषेधार्थम् ॥५॥ हलिकल्योरत्वनिपातनं क्रियते ॥ [ किं प्रयोजनं ? ॥ 'सन्वद्भावप्रतिषे-

प्र ]रादा परसाधने नोत्पद्यन्त इत्यर्थः । अथ वेति। अभिधानशक्तिस्वाभाव्यादन्त-रेणाप्यर्थादेशन विशिष्टक्रियावचनत्वस्य सिद्धत्वादित्यर्थ । चित्रयतीति । 'चित्र वैचित्र्यकरणे' इति चौरादिकस्य रूपम् । अनेक मार्गमाश्रयतीत्यर्थः । क्रियासामान्य इति । सामान्येन च विशेषाणामाक्षेपात्कश्चित् प्रत्यय क्व चिद्विशेषे भवतीत्यर्थ । न च वेदनाग्रहणेन करणस्य विच्छेद , तयोर्विरोधाऽभावात् । [ नमोवरिव ] ।

मुण्डमिश्र । कयोरिद ग्रहणमिति । द्विविधयोरन्तयो कृतान्वयोर्ग्रहणमुता-ऽकारान्तयोरेवेति प्रश्न । किं प्रयोजनमिति । 'हलिकली' इत्येव पञ्चाल नित्यत-

उ ]पचादीनामर्थरहितानामेव पाठात् । क्वचिदर्थानिति । अनेकान् । क्वचिदेकमि त्यर्थ । क्वचिन्नेति । एकमपि नादिशतीत्यर्थः ॥ एवमप्यर्थादेशनमिति । 'नमस पूजाया'मित्यादि। धोष्येरन्निति।निकृन्तप्रेरणान्स्वार्थे णिच्।घुष्येरन्नित्येव क्वचित्पाठ । 

मुण्डमिश्र। निर्देशादेवाऽकारान्तनिर्णयेन प्रश्नाऽनुपपत्तिरत आह-द्विविधा-विति । भाष्ये-इमाविति । समानार्थावित्यर्थ ॥ यद्यप्यकारान्तयोरेव ग्रहणेऽपि तयोर्नियमार्थत्वादिकारान्ताभ्या णिजभावेन सर्वदोषपरिहारोऽस्ति तथाप्येकदेश्याह भाष्ये-याविति । नियमार्थत्वे तु सजातीयानुपूर्वीकनाम्नैतदर्थकनाम्नोहलिकल्योरेवे'ति । प्रकाराऽन्तरेणाप्येकदेश्युक्ति नमन्याऽनुपद वक्ष्यते ॥ भाष्ये-वृद्धिरपि नित्येति ।

१ इद क्वचिन्न । २ 'यश्च यस्य' । ३ 'रात्रपि' पा० । ४ वाक्यमेवार्था' पा० ।

धार्थं[1]] । सन्वद्भावो मा भूदिति । अचहलत्, अचकलत् ॥ नैतदस्ति प्रयोजनम् । इकारलोपे कृते 'अग्लोपिना ने'ति प्रतिषेधो भविष्यति ॥ वृद्धौ कृतायां लोपस्तत्राऽग्लोप्यङ्गं भवति ॥ इदमिह सम्प्रधार्यं—वृद्धिः क्रियतामग्लोप इति, किमत्र कर्तव्यम् ? ॥ परत्वाद्वृद्धिः ॥ नित्यो लोपः । कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि प्राप्नोति ॥ [ वृद्धिरपि नित्या । कृतेऽपि लोपे प्राप्नोत्यकृतेऽपि प्राप्नोति]॥ अनित्यो लोपः । अन्यस्य कृतायां वृद्धौ प्राप्नोत्यन्यस्याऽकृतायाम् । 'शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति'॥ वृद्धिरप्यनित्या॥ अन्यस्य कृते लोपे प्राप्नोत्यन्यस्याऽकृते । 'शब्दान्तरस्य च प्राप्नुवन्विधिर

प्र ]इत्यर्थः । शब्दान्तरस्य चेति । यद्यपि वृद्धौ कृतायामपि लोपस्य प्रवृत्तिस्तथापि वाचनिकं तस्याऽनित्यत्वम् । अत्र वा अन्यस्य प्रवृत्तावप्यन्यस्य स्थानिनोऽप्रवृत्त्या लोपस्याऽनित्यत्वम् । अन्यस्य कृते लोप इति ।'अत उपधाया' इत्यनेनाऽकारस्येत्यर्थः । ननु लोपस्य स्थानिवद्भावात्कथमकारस्य प्राप्नोति ? । नैष दोषः । प्राप्तौ सत्यां स्थानिवद्भावेन प्रतिबन्धः क्रियते । पूर्वस्य विधौ स्थानिवद्भावविधानात् । अप्राप्तौ तु परनिमित्ताभावात्स्थानिवद्भाव एव न स्यात् । यद्यपि विकल्पेन भिन्नस्वभावा च वृद्धिस्तथापि वृद्धिशब्दवाच्यत्वादभेदमाश्रित्य शब्दान्तरप्राप्त्या वृद्धेर्नित्यत्वं कथितम् । तत्त्वतस्तु लोपे कृते वृद्धेरप्राप्त्याऽनित्यत्वं वक्तव्यम् । न्यायव्युत्पादनाय त्वन्यथाऽभिहितम् । सूत्र

उ ]कार्यमात्रं निमित्तमिति भावः । वाचनिकमिति । 'शब्दान्तरस्ये'ति वचनमिति भावः । वस्तुतस्तदपि न्यायसिद्धमित्याह—अत्र वेति । प्राप्तौ सत्यामिति । अत्र तूभयोरनित्यत्वे परत्वादन्त्यस्यैव वृद्धिर्न तूपधाकारस्येति भावः । तदनाश्रयणेऽपि समाप्तिरित्यत्र तात्पर्यम् ॥ ननु पूर्वमन्त्यवृद्धिप्रसक्तावपि लोपे उपधावृद्धिप्राप्तिरिति नैकस्या अनित्यत्वमिति शङ्कते—यद्यपीति । भिन्नस्वभावेति । भिन्नस्थानिकेत्यर्थः । वस्तुतोऽचोञ्णितीत्यस्य लोपेन बाधेऽपि 'अत उपधाया' इत्यस्याऽप्रवृत्तिरेव स्थानिवत्त्वेन वक्त्रा, 'अचो ञ्णिती'त्यस्य चाऽनित्यत्वं लोपे कृतेऽप्राप्त्यैवेत्याशयेनाह—तत्त्वतस्त्विति । न्यायेति । पूर्वोक्तस्यार्थः । परं त्विदम्भाष्यमेकदेश्युक्तिः, भिन्नलक्षणप्राप्ता भिन्नस्थानिकाया वृद्धेर्नित्यत्वोक्तेः सिद्धान्तयुक्तत्वाऽभावात् । कृते लोपे स्थानिवद्भावेन वृद्धेरप्राप्तेरपि तदुक्तेस्तद्युक्तत्वाऽभावात् । अत एव 'णौ चङी'ति सूत्रे लोपस्य शब्दान्तरप्राप्त्या वृद्धेर्लोपेनाप्राप्त्योभयोरनित्ययोः परत्वाद्वृद्धिरित्याशङ्क्य 'नाग्लोपी'ति सूत्रेऽग्ग्रहणाद्वृद्धेर्लोपो बलीयानिति सिद्धान्तितम् । तेनाऽत्रत्यस्यैकदेश्युक्तित्वं स्पष्टमेवोक्तम् । इदमेवाभिप्रेत्य सप्तमे कैयट आह—'अना

१ 'क्रियतां लोपः' पा० । २ 'नित्यत्वाल्लोपः' । ३ अयं पाठः क्वचिन्न ।

नित्यो भवति' ॥ उभयोरनित्ययोः परत्वाद्वृद्धिः । वृद्धौ कृतायां लोपः, तस्य लोपो न भवति ॥ अत्वे पुनः सति वृद्धिः क्रियतां लोप इति, यद्यपि परत्वाद्वृद्धिर्वृद्धो कृतायामप्यैर्गेन लुप्यते । तस्मा सुष्टूच्यते–'हलिकल्योरत्वनिपातनं सन्वद्भावप्रतिषेधार्थ'मिति । [ मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्र ] ॥

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥ ३।१।२२ ॥**

'समभिहार' इति कोऽयं शब्दः [1]॥ समभिपूर्वाद्धरतेर्भावसाधनो घञ्, समभिहरणं समभिहार इति । तद्यथा–पुष्पाभिहारः माल्याभिहारः उत्पलाभिहारः फलाभिहार इति ॥ विषम उपन्यासः । बहूव्यो हीमाः सुमनसस्तत्र युक्तः समभिहारः । इह पुनरेका क्रिया ॥ यद्यप्येका सामान्यक्रिया, अव-

प्र ]'प्रातिपदिकाद्धात्वर्थे'इति णिचि सिद्धे प्रपञ्चार्थमित्याहुः । न च 'तत्करोती'त्यादिना तत्र धात्वर्थनियमः क्रियते, राजानमतिक्रान्तवानत्यरराजदित्यादावपि णिचो दर्शनात् । 'मुण्डं करोति माणवक'मित्यादौ सापेक्षेभ्योऽपि णिजर्थं वा । [मुण्डमिश्र]॥

धातोरेकाचो । इह समभिहारो नाम मूर्तस्याऽनेकस्यैकत्र काल्यस्य भवति । धातुवाच्या तु क्रियैकैव, युगपदेवेन धातुनाऽनेकस्या अनभिधानात् । सा च निवृत्तभेदा साध्यैकस्वभावत्वाद्धातुना प्रत्याय्यते । अधिश्रयणादीनां च क्रमजन्यत्वाद्युगपदवस्थानाऽभावाच्च क्रियासमभिहारो न सम्भवतीति मन्यमानः पृच्छति–समभिहार इति कोयमिति । इतरस्तद्बुद्धिपरीक्षार्थं शब्दव्युत्पत्तिमाह–समभिपूर्वादिति ।

उ.]श्रित्य ज्ञापकत्वं निपातनमुक्तं, ज्ञापकाश्रयणमेव तु ज्याय' इति ।

प्रातिपदिकाद्धात्वर्थ इति । चुरादिगणसूत्रमिदमिति भावः । तत्करोतीति । 'हेतुमति चे'त्यत्रवार्तिकरादिदं गणसूत्रमप्रामाणिकम् । अत एव सत्यापपाशेति सूत्रे पाशादिग्रहणं चरितार्थम् । वार्तिके करोतिर्धात्वर्थोपलक्षणम् । तेन 'अत्यरराज'दित्यादीनां सिद्धिः । सत्यापेति सूत्रेऽनुवृत्तकरणं इतिवदित्यन्ये । धात्वर्थनियम इति । एवञ्च धात्वर्थमात्रे विधानार्थं स्यात् । 'करोते' इति च धात्वर्थमात्रोपलक्षणं स्यात् । अतएव 'वर्मणा सन्नह्यति संवर्मयती'त्यादिसिद्धिरिति भावः । सापेक्षेभ्योऽपीति । अयमभ्युच्चय इति 'सुप आत्मन' इत्यत्र भाष्ये स्पष्टम् ॥

धातोरेकाचो । इहेति । यथा पुष्पादीनाम् । समभिहारस्थोत्तरार्थम् । तेन क्रियाया विशेषणाऽनुपपत्त्या प्रश्न इत्यर्थः । एकत्वस्येति । एव देशस्याप्युपलक्षणमेतत् । ननु दिवेर्विजिगीषाक्रीडाद्यनेकार्थत्वदर्शनादाह–युगपदिति । ननु विषयभेदात्कर्तृभेदाच्च पाकादीनां नानात्वेन कथमेकैवेत्यत आह–सा चेति । एतच्चात्र-

1 'वृद्धावपि' पा० । 2 'गेन' पा० । 3 'धर्मा' पा० । 4 अयं पाठः क्वचिन्न । 5 'हि ता' पा० । 6 'हार इति' पा० । 6 'फल' 'पुष्प' पा० ।

पचतिक्रियामनु वक्ष्यति । अधिश्रयणोदकाऽऽसेचनतण्डुलाऽऽवपनैधोऽपकर्षणक्रियाः । ताः कश्चित्कार्त्स्न्येन करोति कश्चिदकार्त्स्न्येन । यः कार्त्स्न्येन करोति स उच्यते—'पापच्यते' इति । पुनः पुनर्वा पचति—पापच्यते इति ॥

अथ धातुग्रहणं किमर्थम् ? ॥ इह मा भूत्—भृशमटति सूत्रमिति ॥ अत

---

प्र ]यथाश्रवेणेति। मुख्यस्य समभिहारस्येहाऽसम्भवाद्गौणं आश्रीयते। बुद्धिगोचराऽनेकावयवक्रियागतं, पौनःपुन्यमाऽनुगतसमानप्रत्ययनिर्ग्राह्यवर्ती गृह्यते। सामान्यक्रियेति। साधारणी समस्ता क्रिया धात्वर्थ इत्यर्थः। यथोक्तं हरिणा—'गुणभूतैरवयवैः समूहः क्रमजन्मनाम्। बुद्ध्या प्रकल्पिताऽभेदः क्रियेति व्यपदिश्यते ॥ समूहश्च तथाभूतः प्रतिभेदं समूहिषु। समाप्यते ततो भेदे काल-भेदस्य सम्भवः' ॥इति॥ अत एव अधिश्रयणादीनां नाऽकार्त्स्न्येन प्रवर्तनाद्गुणावयवत्वं, तस्याश्च साधारणत्वमुच्यते। तदुक्तम्—'अनन्तरफलं यस्याः कल्पते तां क्रियां विदुः। प्रधानभूता तादर्थ्यादन्यासां तु तदाख्यता' ॥ कार्त्स्न्येनेति। क्रियान्तराऽव्यवहितसमाप्त्येनेत्यर्थः। अर्थेति। धातुरेव समभिहारविशिष्टक्रिया-

---

उ ]मेव साध्यतमित्याह—साध्येति। अत एव 'भवद्भिरास्यते' इत्यादौ बहुवचनमिति भावः। अधिश्रयणादीनां नानात्वादाह—अनेकेति। युगपदिति। उपलब्धिविनाशित्वादिति भावः। अमूर्तत्वाच्चेत्यपि बोध्यम्। भाष्ये—सोऽयमित्यस्य निमर्थकोऽयमित्यर्थः। साध्वभिहारे कर्मसाधन। उपलाऽभिहारे पठीनमुख्य। बुद्धीति। अनेकासां सकलानामवयवक्रियाणां बुद्धिविषयत्वेन यौगपद्यमिति भावः। बुद्धौ युगपदवस्थानमत्र समभिहार इति बोध्यम्। प्रत्यासेति। पौनःपुन्येन तस्या एवाऽनुगतत्वादिति भावः। अत्रापि समभिहारो बौद्ध एवेति ध्येयम्। क्रियायां जातिरूपसामान्यस्याऽसम्भवादाह—साधारणीति। सकलाऽवयवसाधारणीत्यर्थः। तदाह—समूहरूपेति। गुणभूतैरिति। क्रमजन्मनामधिश्रयणादीनां बुद्ध्या प्रकल्पितो योऽभेदस्तद्रूपसमस्तैरेव गुणभूतैरवयवैः सह क्रियेत्युच्यत इत्यन्वयः।

ननु 'प्रकृतं कटं कृतवन्तः' इत्यादौ कथं भूते 'क्त' इत्यत आह—समूहः स इति। तथाभूतः—कृताऽवयवः॥ समूहिषु—अवयवेषु। प्रतिभेदं—प्रत्येकम्। अभेद इति। बुद्धिकृताऽभेदेऽपीत्यर्थः। तस्याश्चेति। यदव्यवधानेन फलोत्पत्तिस्तस्या इत्यर्थः। अनन्तरमिति। अव्यवधानेन फलोत्पादिका प्रधाना क्रियेत्याह। अन्यासां तु तादर्थ्यात्तदाख्यता, गौणो व्यवहार इत्यर्थः। विजातीयेति। यथा द्रव्याणां द्रव्यान्तरव्यवधानेनापि समभिहारस्तथा क्रियाणामपि क्रियान्तरव्यवधानेनापि स इत्यर्थः। पुनः पुनर्वेति भाष्ये। समूहरूपायाः क्रियायाः कालभेदाद्भेदेऽपि साजात्यात्सैव पुनः पुनरनुष्ठीयत इति बुद्ध्या पौनःपुन्यमिति तात्पर्यम्। धातुरेवेति।

उत्तर पठति-॥ ॥ यङ्विधौ धातुग्रहण उत्तम् ॥१॥ [ यङ्विधौ धातुग्रहणे उत्तम् ] ॥ किमुक्तम् ? ॥ तत्र तावदुक्तम्— 'यङ्ग्रहणात्सन्विधौ धातुग्रहणानर्थक्य सोपसर्गं वमाने चेत्समविशेषकत्वादुपसर्गस्यानुपसर्गं वर्म ॥ सोपसर्गस्य हि वर्मत्वे धात्वधिकारेऽपि सनोऽविधानमवर्मत्वा''दिति ।

एवमिहापि'-क्रियासमभिहारग्रहणाद्यङ्विधौ धातुग्रहणानर्थक्य,सोपसर्गं क्रियासमभिहार इति चेत्क्रियासमभिहारविशेषकत्वादुपसर्गस्याऽनुपसर्गं क्रियासमभिहार , सोपसर्गस्य हि क्रियासमभिहारत्वे धात्वधिकारेऽपि यङोऽविधानमक्रियासमभिहारत्वा''दिति ॥

अथैकाज्हलादिग्रहण किमथम् ॥ इह मा भूत्-जागर्ति भृशम् । ईक्षते भृशमिति ॥-॥ एकाज्हलादिग्रहणे च ॥ ॥ एकाज्हलादिग्रहणे चोक्तम् ॥ किमुक्तम् ? ॥ तत्र तावदुक्तम्-॥ कर्मसमानकर्तृग्रहणानर्थक्य चेच्छाभिधाने प्रत्ययविधानादकर्मणो ह्यसमानकर्तृकाद्वाऽनभिधान''मिति ॥

इहापि-'एकाज्हलादिग्रहणानर्थक्य च क्रियासमभिहारे यङ्वचनादनेकाचो हलादेश्चानभिधान''मिति । सर्वथावश्यमनभिधानमाश्रयितव्यम् । क्रियमाणेऽपि ह्येकाज्हलादिग्रहणे यत्रैकाचो हलादेश्चोत्पद्यमानेन यङा ऽर्थस्याभिधानं न भवति, न भवति तत्रोत्पत्ति । तद्यथा-भृश शोभते भृश रोचते । यत्र चाऽनेकाचोऽहलादेश्चोत्पद्यमानेन यङाऽर्थस्याऽभिधान भवति, भवति तत्रोत्पत्ति । तद्यथा-अटाट्यते अरार्यते अशा

[redacted] ] चकी, द्योतकत्वादुपसर्गा न तु वाचक इत्यर्थ । प्राप्नोतीति। धातूपसर्गसमुदायस्य क्रियाविशेषावगतिहेतुत्वात्ततो यदि प्रत्यय स्यात्तत सोपसर्गस्य द्विर्वचन प्रसज्यत । प्राप्नुवन्ने इति चेष्यते । सन्सूत्रोक्त वार्त्तिकमिहाप्यतिदिशति-यङ्विधाविति । धात्वधिकारेऽपीति । 'प्रापपच्यत'इत्यादौ । ऊर्णोतिश्चेति । यथान्यासे सिद्धभावादवचनम्। वार्यान्तरसिद्धयेऽवश्यमूर्णोतेर्नुवद्भावो वा यत्नेनैव यङोऽपि सिद्धिमाह—

उ ] क्रियासमभिहारे' इत्यस्य समभिह्रियमाणक्रियावाचकादित्यर्थ इति भाव ।क्रियाधीयत्वादित्यथाऽपि सम्भा यनेत्युत्तरम् । सनिति । एकदाऽर्द्धधातुत्वभङ्गार्थं धातुग्रहणमित्याद्यपि तत्रत्यमत्र बोध्यमिति ध्वनितम् । तत्र च 'सोमृच्यते' इत्यादौ दिलाप । प्रपापच्यत इति । सूत्रन्तु वेष्टे धनौ चरितार्थमिति भाव । एका ज्हलादिग्रहणप्रत्याख्यानादाह-यथान्यास इति। वचनेन वचनप्रत्याख्यान त्वथवा ऽभावादाह-कार्यान्तरेति । इडुपग्रहस्य फल्वेन हेतुत्वाऽभावादाह-तत्स्य

१ इद सूत्र । २ इति क्वचिन्न । ३ इद प्रायिकम् । ४ 'कायानर्थक्य'पा०। ५ 'यत्र चैकाचो' पा० । ६ 'त्पद्यमानेन च यत्र' पा० ।

प्रत्ययार्थविशेषणेन भवितव्यं यावता 'हेतुमती'त्युच्यते । यदि हि प्रकृत्यर्थविशेषणं स्याद्धेतुमत इत्येवं ब्रूयात् ॥ नैतदस्ति । भवन्ति हि विषयसप्तम्योऽपि । तद्यथा—'प्रमाणे च प्रातिपदिकं वर्तते' 'क्रियायां प्रातिपदिकं वर्तते'इति । एवमिहाऽपि 'हेतुमत्यभिधेये णिज्भवती'ति, 'हेतुमति वा यो धातुर्वर्तते' इति जायते विचारणा ॥ अत उत्तरं पठति—॥-॥ हेतुमतीति कारकोपादानं प्रत्ययार्थपरिग्रहार्थं, यथा 'तनूकरणे तक्षः'॥-॥ हेतुमतीति कारकमुपादीयते ॥ किं प्रयोजनम् ? ॥ 'प्रत्ययार्थपरिग्रहार्थम्' । एवं सति प्रत्ययार्थः सुपरिगृहीतो भवति ॥ [ 'यथा तनूकरणे तक्षः' ] । यथा 'तनूकरणे

प्र ]न प्रयोजकव्यापारोऽपि तत्र प्रत्ययार्थस्य करणाधिकारोपस्थापितस्य करणस्य विशेषणं हेतुमतीति सप्तम्यते । यथा चानेकार्थत्वाद्धातूनां तक्ष्णोतेरधिश्रयणादिव्यापारोऽपि पचादिवाच्यो भवति —यथा पञ्चभिर्हलैः कृषतीति,तत्र प्रकृतिविशेषणमपि भवति। तत्र तु णिच्प्रत्ययो प्रानक्षयसत इति पक्षद्वयस्य सम्भवाद्दोषदर्शनाच्च प्रश्नः । हेतुमत इति। हेतुमदर्थाऽभिधायिन इत्यर्थः ।कारकोपादानमिति । कारकेण हेतु प्रत्ययार्थ उच्यते,स हि प्रत्ययं करोति—निष्पादयति। प्रत्ययार्थं इति । प्रत्ययस्याऽर्थं प्रयोजनं, स सुष्ठु परिगृहीतः परिपूर्णं भवति, वाचकत्वात् प्रत्ययस्य । प्रकृतिविशेषणे तु प्रत्ययस्याऽनुवादकत्वात्प्रयोजनकृत्वा प्रयोजनमपरिपूर्णं स्यादित्यर्थः । अथ वाऽर्थोऽभिधेयमुच्यते,स चान्वयव्यतिरेकाभ्यां व्यवस्थत्वात् प्रेषणादि प्रत्ययस्यैव न प्रकृतेरिति सुष्टु परिगृहीतो व्यवस्थापितो भवति । यथा तनूकरण इति । यत्र 'विरचणायां करोत्य' इति पक्षस्तत्र तनूकरणशब्देन कर्माऽभिधीयते, तत्र सात

उ ] पारच्छेदकमित्यर्थः । प्रकृतिविशेषणेति । भाष्ये 'प्रकृत्यर्थविशेषण'मित्यस्य प्रकृतेरर्थद्वारा विशेषणमित्यर्थं इत्यभिमानः । वस्तुतः प्रकृत्यर्थस्य पाकादेर्विशेषणमित्यर्थः, प्रत्ययार्थस्य विशेषणत्वनियमात् । धातोः शब्दस्य साक्षात्हेतुत्वाऽसम्भवादाह—हेतुमदर्थेति । हेतुमत्त्वविशेषणकाऽर्थाभिधायिन इत्यर्थः । भाष्ये—विषयसप्तम्योऽपीति । 'प्रमाणे' इत्यादेस्तद्विषयकबोधजनकं प्रातिपदिकमित्यादिरर्थ इत्याहुः । हेतुमच्छब्दस्य प्रेरणापरत्वात्कारकोपादानमसङ्गतमित्यत आह—कारकशब्देनेति । अन्वयव्यतिरेकाभ्यामिति ।'पञ्चभिर्हलैः कृषति' इत्यादौ पञ्चभिर्हलैरित्यस्याऽनन्यलभ्यकालान्तराऽभावाच्च धातोर्लक्षणेति भावः । कर्ताऽभिधीयत इति । बाहुल्यात्कर्तरि ल्युडिति भावः । तनूकरणस्य धात्वर्थत्वं विना तत्कर्तरि कथं प्रत्ययः स्यादिति तदर्थाभिप्रायकमेतदिति बोध्यम् । 'यदीद तदर्न्तर्हि प्रकृत्यर्थविशेष-

१ 'हेतुमति चे' पा० । २ 'इत्येव' पा० । ३ 'भवन्ति हि' पा० । ४ अयं पाठः मध्यांते नास्ति । ५ 'जनकत्वाने' ।

तक्ष' इति तनूकरणमुपादीयते ॥ यदि तर्हि तद्द्प्रकृत्यर्थविशेषणमिदं भवति। प्रकृत्यर्थविशेषणं हि तत्तत्र विज्ञायते—'तनूकरणक्रियायां तक्ष' इति ॥

अस्तु प्रकृत्यर्थविशेषणं को दोषः ?॥ इह 'ह्युक्तं करोति','प्रेषितं करोती' ति णिच् प्राप्नोति । प्रत्ययार्थविशेषणे पुनः सति नैषं दोषः । स्वशब्देनोक्तत्वान्न भविष्यति ॥ प्रकृत्यर्थविशेषणेऽपि सति नैष दोषः । यत्र नाऽन्तरेण शब्दमर्थस्य गतिर्भवति तत्र शब्दः प्रयुज्यते ॥ यत्र हि अन्तरेणाऽपि शब्दमर्थस्य गतिर्भवति न तत्र शब्दः प्रयुज्यते ॥

इह तर्हि 'पाचयत्योदनं देवदत्तो यज्ञदत्तेने त्युभयोः कर्त्रोर्लैनाऽभिधानं प्राप्नोति । 'प्रत्ययार्थविशेषणे सति पुनर्नैषं दोषः 'प्रधानकर्तरि लादयो

प्र ]म्येण दृष्टान्त ।यदा तु सार्वधातुकार्या कर्त्रादय' इति पक्षस्तदा वैधर्म्येण दृष्टान्त इति व्याख्यानम् । यथा तनूकरण प्रकृत्यर्था न तथा हेतुमद्व्यापार इत्यर्थ ।

परस्तु साधर्म्येण दृष्टान्तं सार्वधातुकत्वं च कर्त्रादीनां मन्यमान आह—यदीति। अस्त्विति । विनापि णिचा 'पचभिर्हले' रूपनी' ति प्रयोजकव्यापारावगमात् प्रकृत्यर्थत्व हेतुमत उपपद्यते । 'पचनी'त्यादौ तु द्योतको णिच्नास्तीति तदप्रनिपत्तिरिति भाव । उक्तं करोतीति । प्रकृतिविशेषणपक्षे यथा प्रकृत्याभिहिते प्रयोजकव्यापारे णिज्भवत्येवमुक्तप्रेषितादिशब्दाभिहितेऽपि प्राप्नोति, हेतुमद्विशेषणत्वात् करोत्यर्थस्य । प्रत्ययार्थविशेषणपक्षे तूक्तार्थत्वाण्णिजभाव । यत्रेति । यस्याऽर्थस्य द्योतनाय णिज्विधीयते स यदा शब्दान्तराऽवगतो भवति तदा प्रयोजनाऽभावाण्णिज भवतीत्यर्थ । उभयोरिति । धातुवाच्यस्य व्यापारस्य कर्तरि लकारेणोपत्तव्यम् । यदा च पाचिना द्वयोरपि प्रयोज्यप्रयोजकयोर्व्यापारोऽभिधीयते, णिच्प्रत्यय पेव स्वार्थिकत्वात् प्रयोजकव्यापारस्य द्योतकस्तदा धातुवाच्यव्यापारसाम्यात् कर्त्रोरपि साम्यमिति द्वयोरप्यभिधानं स्यात्, तत 'पाचयतो देवदत्तयज्ञदत्ता'विति प्रसज्ये

उ ]णमेव भवतीति भाष्येऽन्वय ।'अस्त्वि'त्यनेन तत्पक्षोपपत्ति सूचिता। तामाह—विनापीति । द्योतको णिज्नास्तीति । 'कृपनी'त्यादौ तु पचभिर्हलैरिति, एकान्ते तूष्णीमासीनत्वादिकत्य तद्द्योतकमिति भाव । एवमुक्तप्रेषितेति। प्रकृतिविशेषणपक्षे शब्दान्तराऽभिहितद्योतनार्थत्वं णिच्प्रवृत्तिरिति भाव । हेतुमद्विषयत्वादिति । प्रयोजकव्यापारविषयत्वादित्यर्थ । 'हेतुमता'त्यस्य विषयसप्तमीत्वादिति भाव । शब्दान्तरेति । वाचकशब्दान्तरत्यर्थं । यदा चेति । पच्यादिभि पाकानुकूल कन द्वयोरप्यभिधानमिति मते इदम्भाष्यमिति भाव । एकश्चोभयोरपि व्यापारयो समकक्षत्वेन विशेषणविशेष्यभावानापन्नयोभयोरपि कर्त्रो प्राधान्यमिति हृदयम् । अत

१ 'विशेषण भवति'। २ 'सतिपुन '। ३'सति पुनर्नैव दोषो भवति'।४'न दोष '।

भवन्ती'ति प्रधानकर्ता तेनाऽभिधीयते, यथाऽत्राऽप्रधानं कर्ता सिद्धा तत्र 'कर्तरी'त्येव तृतीया ॥ इह च 'गमितो ग्रामं देवदत्तो यज्ञदत्तेने'त्यव्यतिरिक्तो गत्यर्थ इति कृत्वा 'गत्यर्थाना च कर्तरी'ति क्तः कर्तरि प्राप्नोति ॥ इह च 'व्यतिभेदयन्ते' 'व्यतिच्छेदयन्ते' इति । अव्यतिरिक्तो हिंसार्थ इति कृत्वा 'न गतिहिंसार्थेभ्य' इति प्रतिषेधः प्राप्नोति ॥

अस्तु तर्हि प्रत्ययार्थविशेषणम् ॥ यदि प्रत्ययार्थविशेषणं 'पाचयत्योदनं देवदत्तो यज्ञदत्तेने'ति प्रयोज्ये कर्तरि कर्मसंज्ञा प्राप्नोति । भवति हि तस्य

]मित्यर्थः । प्रधानकर्तेति । प्रकृत्यर्थपरतन्त्रत्वाण्ण्यर्थस्य प्राधान्याभावस्य कर्तोऽपि प्रधानमिति भावः । तस्मिन् इति । प्रयोजकव्यापारस्य गमिधात्वर्थत्वात्तस्य कर्तरि प्रयोजके क्तः प्राप्नोतीत्यर्थः । प्रयोज्यस्य तु कर्मत्वात्कर्मण्येव क्त इष्यते । तदुक्तम्—'अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः' इति ॥ व्यतिभेदयन्त इति । प्रयोजकव्यापारस्य कर्मव्यतिहारे न तु प्रयोज्यव्यापारस्येति द्रष्टव्यम् । भवति हीति । ण्यर्थस्य प्राधान्यात्तद्व्यापारेणेप्सिततमत्वात्प्रयोज्यस्येत्यर्थः । प्रकृत्यर्थविशेषणत्वे तु

उ ]त्वाऽत्र पक्षे प्रयोज्यस्य कर्मत्वं नाऽऽपादितम्, प्रयोजकव्यापारस्य विशेषणत्वाऽबोधेन तस्य कर्तृत्वाऽभावेन कर्मत्वस्याप्यभावात् । गत्यादिसूत्रेणैव पक्षे विध्यर्थमेवेति बोध्यम् । पक्षे दोषं हि 'प्रकृत्यर्थविशेषण'मिति भाष्यकाराऽऽश्रयति । तस्मात्प्रधानाप्रधानस्य पार पक्षेऽयं । ननु अन्यानपेक्षितत्वलक्षणप्राधान्यस्य प्रयोजकव्यापारस्य, शब्दस्य प्रयोज्यव्यापारस्येत्युभयाश्रययोः कर्तृत्वं, 'स्वतन्त्रः कर्ते'त्यनोभयविषयप्राधान्यस्यापि विनिगमनाविरहेण प्रसङ्गः । एवञ्च ण्यन्तोत्तरत्वेन पर्यायेण द्वयोरप्यभिधानात्स्यादिति भाष्याशयः । प्रधानकर्तेति । प्रकृतिभूतण्यन्तार्थकर्तरीत्यर्थः । प्रयोज्यकर्ता तु धात्वर्थस्य, न तु ण्यन्तार्थस्येति न ण्यन्तप्रकृतिकत्वेन तदभिधानमिति भावः । प्रधानकर्ता—ण्यप्रकृत्यर्थप्रधानव्यापाराश्रयरूप कर्मेत्यर्थः ।

अप्रधानमिति । ण्यप्रकृत्यर्थप्रधानव्यापाराश्रय इत्यर्थः । अव्यतिरिक्त इति । प्रयोजकव्यापाराव्यतिरिक्तोऽपि इत्यर्थः । णिजन्तार्थकत्वे तु प्रयोजककर्ता न गत्यर्थकर्ता, किन्तु ण्यन्तकर्तेति न दोषः स्यादु । ननु प्रत्ययार्थविशेषणपक्षेऽपि कथमात्मनेपदं, हिंसार्थप्रयोज्यव्यापारस्यैव व्यतिहारो, न तु णिजन्तप्रयोजकव्यापारस्य सोऽत आह—प्रयोजकव्यापारस्य व्यतिहार इति । तद्व्यापारेणेप्सिततम इत्यादिति । तद्व्यापारप्रयोज्यव्यापारस्य फलाश्रयत्वादित्यर्थः । भाष्ये—तस्य—प्रयोजकस्य । तस्मिन्—प्रयोज्ये । एतेन 'स्वव्यापारे स्वातन्त्र्यात्परव्यापारेणाऽन्तरङ्गत्वेन च कर्तृत्वमेवे'त्यपास्तम्, अन्तरङ्गादपि प्रधानकार्यस्य लोके बलवत्तया

१ इदं क्वचित् । २ 'कर्तरि क्त' । ३ 'यते' । ४ इदं क्वचित् । ५ 'व्यतिहार' ।

तस्मिन्नीप्सा॥ इह च 'ग्रामं गमयति' 'ग्रामाय गमयती'ति,—व्यतिरिक्तो गत्यर्थ इति कृत्वा 'गत्यर्थकर्मणी'ति द्वितीयाचतुर्थ्यौ न प्राप्नुतः ॥ इह च—एधोदकस्योपस्कारयतीति,—व्यतिरिक्तः करोत्यर्थ इति कृत्वा 'कृञः प्रतियत्ने' इति षष्ठी न प्राप्नोति ॥ इह च 'भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठाना'मिति प्रयोज्ये कर्त्तरि षष्ठी न प्राप्नोति ॥ इह चा'ऽभिषावयति' 'परिषावयती'ति, 'व्यतिरिक्तः सुनोत्यर्थ' इति कृत्वा 'उपसर्गात्सुनोतिसुवती'त्यादिना षत्वं न प्राप्नोति॥ नैष दोषः। यत्तावदुच्यते 'पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति प्रयोज्ये कर्त्तरि कर्मसंज्ञा प्राप्नोती'ति। 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणी'त्येतन्नियमार्थं भविष्यति—'एतेषामेव ण्यन्तानां यः कर्ता स णौ कर्मसंज्ञो भवति नान्येषा'मिति॥ यदप्युच्यते—'इह च ग्रामं गमयति ग्रामाय गमयती'-ति 'व्यतिरिक्तो गत्यर्थ' इति कृत्वा 'गत्यर्थकर्मणी'ति द्वितीयाचतुर्थ्यौ न

प्र ]द्वयोरपि प्रयोज्यप्रयोजकव्यापारयोरेव धातुवाच्यत्वाद्धातुवाच्यव्यापाराऽपेक्षया द्वयोरपि कर्तृत्वात्तत्राऽभिधानं प्राप्नोतीति दोष उक्तः। ग्रामं गमयतीति। ण्यर्थस्यैव ग्रामः, प्रयोज्यश्च कर्मेति भावः। षष्ठी न प्राप्नोतीति। ण्यर्थस्य कर्मत्वादिति भावः। सुद् तु करोतिधात्वाश्रयत्वाण्णिजुत्पत्तावपि तद्रूपसन्निधानात्सिध्यत्येवेति तत्राऽनुदाहृतः। प्रयोज्ये कर्त्तरीति। तस्याऽप्राधान्यादिति भावः। अभिषावयतीति। ण्यर्थस्योपसर्गो विशेषक इति भावः। एतेषामेवेति। ण्यर्थस्य प्राधान्यात्तेनेप्सितमस्य प्रयोज्यस्य सिद्धा कर्मसंज्ञा। न च स्वव्यापाराऽपेक्षया स्वातन्त्र्यात्स्वाकर्तृसंज्ञा प्राप्नोतीति युक्तं वक्तुम्। प्रयोज्यव्यापारस्याऽप्राधान्यात्प्रधानाऽप्रधानव्यापारसन्निधौ च प्रधाननिमित्तस्य कार्यस्य युक्तत्वात्। नियमेन तु प्रधान-

उ ]दर्शनादिति भावः। एकधातुवाच्यत्वादिति। ण्यन्तप्रकृतिधातुवाच्यत्वादित्यर्थः। ननु प्रयोज्यस्य ण्यर्थव्यापारापेक्षया कर्मत्वेऽपि ग्रामादेर्गम्यर्थनिरूपितमेव कर्मत्वमत आह—ण्यर्थस्यैवेति। 'प्राधान्या'दित्यादि। उत्तरदेशसंयोगे ण्यर्थव्यापारजन्यत्वस्यापि सत्त्वादिति भावः। प्रतियत्नवाचिकरोत्यपेक्षया सुट्प्रकृतेर्विधानविशिष्टे षष्ठ्याः प्राप्तिरेव कथमुक्तेत्यत आह—सुट् त्विति। कर्मणि विधानादर्थग्रापेक्षा षष्ठी, 'उपात्प्रतियत्ने'ति सुट् धातुरूपापेक्ष इति भावः। तस्याऽप्राधान्यादिति। कृत्प्रकृत्यर्थकर्त्रादौ हि तेन षष्ठी। कृत्प्रकृतिश्च ण्यन्ता। एवञ्च तदर्थकर्त्तर्येव स्यान्न तु णिच्प्रकृत्यर्थकर्त्तरि। अप्राधान्यञ्च कृत्प्रकृत्यर्थाऽकर्तृत्वमेवेति बोध्यम्। नियमस्य उपपत्तिमाह—ण्यर्थस्येति। परत्वादिति। अन्तरङ्गत्वादुपजीव्यत्वाच्चेत्यपि बोध्यम्। प्रधानेति। सर्वापेक्षया प्रधानकार्यस्य बलवत्त्वात्। न चोद्देश्यतालक्षणमर्थं प्राधा-

१ 'सुनोत्यादीनामिति' 'सुनोतीत्यादीनामिति'। २ 'प्रधानव्यापार'। ३ 'गत्यर्थे'।

प्रस्तुत'इति,-नाम्नावेव प्रेष्यते 'गच्छ ग्राम'मिति ॥ कथं तर्हि ? ॥ साधनविशिष्टामसौ क्रिया प्रेष्यते-'ग्राम गच्छ' 'ग्रामाय गच्छे'ति ॥ यदप्युच्यते-"[इह च] एधो दकस्योपस्करयतीति व्यतिरिक्त करोत्यर्थ इति कृत्वा कृञ्प्रतियत्न इति षष्ठी न प्राप्नोती"ति । नाम्नावेव प्रेष्यते-'उपस्कुरु एधो दकस्ये'ति ॥ कथं तर्हि ? ॥ साधनविशिष्टामसौ क्रिया प्रेष्यते-'एधो दकस्योपस्कुरुष्वे'ति ॥ यदप्युच्यते-"इह च भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामिति प्रयोज्ये कर्तरि षष्ठी न प्राप्नोती"ति । उक्तं तत्र शेषग्रहणस्य प्रयोजनं 'कर्तृभूतपूर्वमात्रेऽपि षष्ठी यथा स्या'दिति ॥ यदप्युच्यते "इह चाभिषावयति परिषावयतीति-व्यतिरिक्त सुनोत्यर्थ इति कृञोपसर्गात्सुनोतीत्यादिना षत्वं न प्राप्नोती'ति, नाम्नावेव प्रेष्यते-'सुनु-अभी'ति ॥ कथं तर्हि ?॥ उपसर्गविशिष्टामसौ क्रिया प्रेष्यते-'अभिषुणु'ति ॥

प्र ] प्रयुक्तकार्यव्यापृतौ गुणनिमित्तकर्मसंज्ञाया कर्तृत्वं भवत्येव । तदुक्तं हरिणा-'गुणक्रियाया स्वातन्त्र्यात्प्रेषणे कर्मता गतः । नियमात्कर्मसंज्ञाया स्वधर्मेणाभिधीयते' इति ॥ नाम्नाविति । ग्राम प्रकृत्यर्थस्य कर्म न तु ण्यर्थस्येत्यर्थः । साधनविशिष्टामिति । ग्रामकर्मिका गमनक्रिया प्रयोज्य प्रेष्यति-प्राप्नोतीत्यर्थः । स च प्रेष्यते-प्राप्यते । कर्तृभूतपूर्वमात्रेऽपीति । प्रधानचरेऽपि कर्तरीत्यर्थः । सुनु अभीति । न प्रयोजकव्यापारस्याभिमुख्यमभिशब्देन द्योत्यते, अपि

उ ]न्यप्रयोज्यव्यापारस्याप्यन्यानधीनत्वलक्षणार्थप्राधान्यस्य प्रयोजकव्यापारेऽपि सत्त्वात्, शब्दशास्त्रे शब्दप्राधान्यस्यैव मुख्यत्वादिति भावः । गुणेति । प्रेषणे कर्मताप्राप्तोऽपि पदार्थः कर्मसंज्ञाया नियमादप्राप्त्या गुणक्रियाया स्वातन्त्र्याच्च स्वधर्मेण कर्तृत्वेनाभिधीयत इत्यर्थः । 'स्वातन्त्र्येणे'ति पाठेऽपि-'कर्तृत्वेने'त्येवार्थः । ग्राम प्रकृत्यर्थस्येति । गमेः सकर्मकत्वेनाऽस्य कर्मापेक्षत्वाण्ण्यर्थस्य कर्मसंज्ञाया प्रयोज्यकर्मता शाब्दी आर्थीति भावः । 'साधनविशिष्टा क्रियामसौ प्रेष्यते' इत्यत्र कथं द्विकर्मकत्वं, कथञ्च प्रयोज्ये कर्मणि लकार इत्यत आह—प्राप्नोतीति । तथा च पूर्व इति प्राप्त्यर्थः । तस्माण्ण्यन्तात्कर्मणि प्रत्यये प्रेष्यत इतीति भावः । 'प्राप्नोतीत्यर्थ' इति पाठे प्रेष्यतिपदस्य स्वोक्तस्येदमर्थकथनम्, न तु भाष्ये तथा पाठ इति भ्रमितव्यम् । भूतपूर्वत्वस्यानुपपत्तेराह-प्रधानचरेऽपीति । कृत्प्रकृतिघटकधात्वर्थकर्तर्यपीत्यर्थः । तन्मूलकस्य कृद्ग्रहणमाहात्म्येनेदर्थसमर्थनमिति भावः । अपिविति । एतत्पाठेन कदाचिदपि ण्यर्थविशेषणतेति भावः । भाष्यसम्मतेन चैतदोक्तं प्रयोज्यव्यापारस्यैवान्यैकप्रकारेण तु तदाभिमुख्यद्योतकत्वाऽभाव एवाऽभे-

१ इदं क्वचित् । २ 'किं तर्हि' पा० । ३ 'नियामर्थो' । ४ 'सुनोत्यादीनामिति' ।

युक्तं पुनरिदं विचारयितु,—नन्वनेनाऽसन्दिग्धेन प्रत्ययार्थविशेषणेन भवितव्य यावता व्यक्तमर्थान्तर गम्यते—पचति पाचयतीति चे ? ॥ बाढं युक्तम् । इह पचे क प्रधानार्थ ?॥ याऽसौ तण्डुलाना विक्लित्ति. ॥ अथेदानीं तदभिसन्धिसन्धिपूर्वक प्रेषणमध्येषण वा युक्त यत्सर्वं. पच्यर्थ स्यात्॥

॥ ]तु प्रयोज्यव्यापारस्यैवेत्यर्थ । युक्त पुनरिति । सन्देह एव विचारनिमित्तं नोपपद्यते, अन्वयव्यतिरेकाभ्यां भूयोदर्शनविषयाभ्या प्रत्ययार्थविशेषणपक्षस्यैवोपपन्नत्वादिति भाव । याऽसाविति । तदर्थत्वात्कारकग्रामस्य, तदनन्तरत्व फलोत्पादादिति भाव । तदुक्त हरिणा—'अनन्तरं फल यस्या. कल्पते तां क्रियां विदु । प्रधानभूतां तादर्थ्यादन्यासां तु तदाख्यता' ॥ इति ॥ तत्र यथाऽधिश्रयणादयस्तादर्थ्यात्पचिवाच्यास्तथा प्रेषणादिरपि, द्योतकस्तु णिजपेक्ष्यत इत्यर्थ । न च कारकाणामपि तादर्थ्यात्पच्यभिधेयत्वप्रसङ्ग , तेषामक्रियात्वात्साधनोऽथ क्रियात्वाचि-त्वात् । विक्लित्तिश्चाऽत्र फलानन्तरव्यापारोपलक्षणम्,'इतरा पचन्ती'त्यादौ तस्याऽसम्भवादित्याहु । पच्यर्थं स्यादिति । सम्भावने लिङ् । संभाव्यते पच्यर्थत्व प्रेषणादे ।अत एव सरायाद्विचार्य प्रत्ययार्थविशेषणपक्षो भाष्यकारेण स्थापित·, तद्दोषाणं परिहृतत्वात्, पक्षान्तरे दोषाणा चाऽपरिहारात् । अथ वा प्रकृत्यर्थविशेषणपक्षोऽपि स्थापित ,तत्पक्षभाविना दोषाणा सुपरिहरत्वात् । तथा हि यदुक्तं—'द्वयो कर्त्रोर्लैनाभिधान प्राप्नोती'ति, नाऽयं दोष·, प्रकृत्या प्रयोज्यव्यापारोपसर्जनस्य

उ.]लभ्यत इति यद्दव ।यद्यपि पूर्वं 'प्रमाणे द्वयसच्''शेषे''सम्भूते' इति सप्तमीनिर्देशस्योभयथापि दर्शनाद्विचार उपपादितस्तथाप्यन्वयव्यतिरेकाभ्यामिदानीं विचार आक्षिप्यत इत्याह—अन्वयेति । भाष्ये–व्यक्तमर्थान्तरं गम्यत इति । 'पचन्ताऽपचन्ताभ्यामपरस्परस्मा'दिति शेष । विक्लित्ते प्रधानार्थत्वे युक्तिमाह–तदर्थत्वादिति । विक्लित्तिग्रहणं फलाऽव्यवहितपूर्ववर्त्तिव्यापारोपलक्षणम् । स्पष्टञ्चेदमनुपदं स्वयं वक्ष्यति । तद्धेतुमाह–तदनन्तरत्वेति । तथा प्रेषणादिरपीति । विक्लित्त्यनुकूलत्वेनेत्यर्थ । वस्तुत प्रवर्त्तनाप्रयोज्येन्चेव तस्य विशेषणता न्याय्या। सम्भावन इति । 'उपसंवादाशङ्कयोश्चे'ति सूत्रे भाष्ये पठितेन 'उपसंवादाशङ्कयोर्लिङि'त्यनेन । तत्राऽऽशङ्का–उत्प्रेक्षा । सम्भावनापि–उत्कटकोटिका शङ्कैवेति बोध्यम् । भाष्ये–तदभिसन्धिपूर्वकमित्यस्य–'तद्विशेषणभूत'-मिति शेष । अपरिहारादिति । 'सर्वम्पच्यर्थं स्यादिति युक्तमपि' न पक्षो दुष्ट' इति शेष, दोषाणामुक्तत्वादिति भाष्यार्थ इति भाव । अथ वेति । अत्र पक्षे 'सर्वं पच्यर्थं.' स्यादिति यत्तदुक्तमेवेति भाष्यार्थ इति भाव ।प्रयोज्यव्यापा-

१ च क्वचिन्न । २ तदभिसम्बन्धपूर्वकं । ३ 'कल्पते' पा० ।

अथ हेतुमतीति कोऽयमर्थः ? ॥ हेतुः कर्ताऽस्यास्ति हेतुमान्, 'हेतुमती'ति॥ ॥ हेतुनिर्देशश्च निमित्तमात्रं, भिक्षादिषु दर्शनात् ॥*॥ हेतुनिर्देशश्च निमित्तमात्रे द्रष्टव्यः । यावद्ब्रूयान्निमित्तं कारणमिति तावद्धेतुरिति॥ किं प्रयोजनम् ?॥ 'भिक्षादिषु दर्शनात्'। भिक्षादिष्वपि हि णिज्दृश्यते—'भिक्षा वासयन्ति, 'करीषोऽग्निरध्यापयती'ति ॥ किं पुनः कारणं पारिभाषिके हेतौ न सिध्यति ?॥ एवं मन्यते— चेतनावत एतद्भवति प्रेषणमध्येषणं चेति, भिक्षाश्चाऽचेतनाः ॥ नैष दोषः । यावद्यः स एव वासं प्रयोजयति य आह'उष्यतां'मिति॥

प्र ]प्रधानस्यास्यार्थस्याभिधानात्तस्यैव णिचा ग्रानतान प्रधान एव कर्तरि ल भविष्यति नाऽप्रधाने।णिचा च ग्रानत्वेन प्रधानभूतगमनव्यापारस्य निवर्तिन गमनारम्भस्य प्रधानस्याऽस्याभिधानादिति ष्यन्ता प्रयोजककर्तरि लस्याऽनुत्पत्ति । 'ष्यतिभेदयन्त' इत्यत्रापि स्तिमतार्थस्य प्रधान धात्वर्थो, न तु हिंसार्थस्य तस्या मनेधदन्तिये नाऽभाव ।

अर्थेति। यद्यपि पस्पशे मतस्यार्थस्य मन्वर्थत्वेन निर्णीतस्तथापि हेतुशब्दस्याऽनेकार्थत्व भाति हेत्वर्थोऽपरिज्ञानात्तद्विशिष्टस्यापि मत्वर्थस्याऽपरिज्ञानात् प्रश्न । स चाऽर्थाद्धेतुविषय एवाऽवतिष्ठते । को हेतुरिति । किं प्रयोजको हेतुरथ निमित्तमात्रम् ? । हेतु कर्तेति । हेतु प्रयोजक इति भाव ॥ तावद्धेतुमिति ।

उ ] र्थेति । प्रयोजकव्यापार उपसर्जनं यस्येति विग्रह । लोके प्रयोज्यप्रयोजकयो गुणप्रधानभावव्यवस्थाऽभावेऽस्यादृशायारयोरपि तत्त्वसंबोधित्वेन, न तु फलानुकूलत्वेन समरूपतया बोध उचित । एवञ्च वाचकतापक्ष इव द्योतकतापक्षेऽपि द्वयोर्व्यापारयोर्गुणप्रधानभावेनैवावस्थिते प्रधानकर्तुरेव लेनाऽभिधानमित्यप्रधाने कर्मणि तृतीयादि भवति ।

परे ॥ द्योतकत्वात्तस्य विशेषणत्वेनोचितानि भाष्योक्तदोषाऽनुद्धार । स एवाऽस्य पक्षस्य भाष्ये प्रकृत्यर्थविशेषणत्वे दोषोऽस्य । किञ्च ष्यन्ता प्रत्ययस्य प्रकृत्यर्थकर्तरि सामर्थ्यादित्यस्य वाच्यमेव स्यात्।एवञ्च प्रयोज्ये कर्तरि तृतीयैव लकारोऽपि स्यात् । इत्यादीनामत्र ग्रन्थे कर्मण्यपि स्वादिस्वीकारेण लादिविधौ कर्तृकर्मणो प्रधानाऽप्रधानत्वाभ्याऽप्रमाणितत्वाच्च । वाचकत्वे तु न दोष , प्रयोज्यस्य ष्यन्तप्रकृत्यर्थकर्तृत्वेऽपि ष्यन्तकर्तृत्वाऽभावात्तत्र कर्तरि ष्यन्ता प्रत्ययाऽनुपपत्त ।एवमन्ययोरपि दूषणमेवैतत् । णिचेति । प्राधान्येनान्तरदेशसंयोगानुकूलव्यापारार्थक एव गम्यर्थ इति भाव ।-तयोग्रहणसामर्थ्यादिति बोध्यम् । व्यतीति।सोऽपि प्रागुक्तयुक्त्यैव प्रधानभूतप्राणवियोगानुकूलव्यापारार्थक एवेति भाव ।हेतु प्रयोजक इति। तथा च

१ 'यस्य' पा० । २ 'स' इति क्वचित् । ३ 'मात्रे द्रष्टव्यम्' पा० । ४ अयं पाठ क्वचित् । ५ 'वासयति' । ६ 'यश्चाह' । ७ 'य आह इहोष्यतामिति' ।

किं तर्हि ? ॥ तूष्णीमप्यासीनो यस्तत्समर्थान्याचरति सोऽपि वास प्रयोजयति । भिक्षाश्चापि प्रचुरा व्यञ्जनवत्यो लभ्यमाना वासं प्रयोजयन्ति । तथा कारीषोऽग्निर्निवाते एकान्ते सुप्रज्वलितोऽध्ययनं प्रयोजयति ॥

इह कश्चित्कं चिदाह—'पृच्छतु मां भवान्, अनुयुङ्क्तां मां भवा'निति, अत्र णिच्कस्मान्न भवति ? ॥ अकर्तृत्वात् । न ह्यसौ संप्रति पृच्छति, [¹न च प्रेक्ष्यति, ] तूष्णीमास्ते ॥ किं च भो वर्तमानकालाया एव क्रियाया·

प्र.]तत्समर्थाचरणमपि प्रयोजकव्यापारस्तत्सद्भावाधीनत्वात्प्रयोज्यक्रियासिद्धेरित्यर्थः । पृच्छतु मा भवानिति । प्रष्टा प्रयोज्यस्तस्य प्रेरकः प्रयोजको भवतीति तद्व्यापारे णिच्कस्मान्न भवतीति प्रश्नः । एकविषयत्वाल्लोडादेर्णिचश्च पर्यायप्रसङ्ग ॥ अकर्तृत्वादिति । स्वतन्त्रस्य कर्तुः प्रयोजको हेतुरित्युच्यते, प्रयोज्यश्चाऽत्र न कर्तेति प्रयोजको न हेतुसंज्ञ इत्यर्थः । तूष्णीमिति । निर्व्यापारत्वात्कारकत्वमात्रमपि तस्य नास्ति कुतस्तद्विशेषः कर्तृत्वमित्यर्थः ।

उ ]पारिभाषिकस्यैव हेतोर्ग्रहणमिति भाव ।वस्तुतस्तु 'को मत्वर्थ' इत्यस्य किं पारादिकः प्रयोजकव्यापार इत्यर्थः । कृत्रिमाऽकृत्रिमन्यायेन हेतुसंज्ञाविधानसामर्थ्येन च तस्यैव ग्रहणं भविष्यतीति तत्प्रश्नाऽनौचित्यात् । हेतुः कर्ताऽस्येति। प्रयोजकव्यापार एवेत्युत्तरम् । प्रयोजकस्य पारिभाषिकहेतुत्वेऽपि लक्ष्यानुरोधेनाह भाष्ये—हेतुनिर्देशश्चेति । पारिभाषिकेऽपि लक्ष्यसिद्धिमाह—नावश्यमिति । तदाशयमाह—तत्समर्थेति । भाष्ये 'प्रवीती'त्यनेन तादृशशब्दप्रयोग एव मुख्या प्रवर्तनेति सूच्यते । ननु प्रश्नक्रियाकर्तृतया कस्य चिदिदप्यभावात्प्रयोज्यस्याऽभावे प्रयोजकस्याप्यभावात्कथं णिच्शङ्का², तत्राह—प्रष्टेति । 'भावी'ति शेष ।

समानार्थत्वाद्युगपल्लोट्णिचोरप्रसक्तेराह—एकविषयत्वादिति । वस्तुतस्तु लोडन्ते प्रयुज्यमानलोडन्तशब्द एव प्रयोजकव्यापारस्तस्य सत्त्वाण्णिच्स्यादिति प्रश्नाशय । पर्यायस्य प्रश्नविषयत्वे लोटोक्तत्वात्प्रेषणस्य णिज्न भविष्यतीत्युत्तरपरभाष्याऽसङ्गति । न हि पर्याये लोटोक्तत्वमस्ति । पर्यायो नाम कदाचिल्लोटैव, कदाचिण्णिचैवेत्याकार । ननु 'उक्त करोती'त्यत्रोक्तन्यायेनाऽत्रापि णिचोऽप्राप्त्या भवदुक्तव्याख्याने भाष्याऽसङ्गतिरिति चेन्न, लोडन्तशब्दप्रयोगरूपप्रयोजकव्यापारस्य लोटवाच्यत्वमित्यभिमानेन शङ्कासत्त्वात् । लोटोक्तत्वादित्युत्तरस्य चाऽयमाशयः प्रेरणात्वेन लोड्वाच्य एवेति । एतच्च 'विधिनिमन्त्रणे'ति सूत्रे उपपादयिष्यते । मञ्जूषायाञ्च निपुणतरमुपपादितम् । न कर्तेति । तत्र प्रश्नक्रियाया अभावादितिभाव । कुतस्तद्विशेष इति । 'तूष्णीमास्त' इति भाष्य कैमुतिकन्यायोपलक्षण

१ अयं पाठ क्वचिन्न । २ 'मां' पा० । ३ 'अनुयुक्तां' पा० ।

कर्ता भवितव्यं न भूतभविष्यत्कालया ?॥ भूतभविष्यत्कालया अपि भवितव्यम्। अभिसम्बन्धस्तत्र क्रियते—'इमां क्रियामकार्षीदिमां क्रियां करिष्यती'ति॥ इह पुनर्न कश्चिदभिसम्बन्धः क्रियते, न चासौ भवति पृच्छति, न चासौ प्रक्ष्यति, तूष्णीमास्ते॥ यदि तर्हि कर्ता नास्ति कथं तर्हि कर्तृप्रत्ययेन लोटाऽभिधीयते ?॥ अथ कथमस्मिन्नपृच्छत्येव प्रवृत्तिर्वर्तते ?॥ अभिसम्बन्धस्तत्र क्रियते—'इमां क्रियां कुर्वि'ति॥ कर्तापि तर्ह्यभिसम्बन्धः क्रियते॥ कथम् ?॥ 'कर्ता चाऽस्याः क्रियाया भवे'ति। एवं न च कर्ता, कर्तृप्रत्ययेन च लोटाऽभिधीयते॥ अथापि कथं चिदकर्ता स्यादेवमपि न दोषः, लोटोक्तत्वात् प्रैषस्य णिज् न भविष्यति। विज्ञायन्ते ह्येतेऽर्थाः प्रैषादिषु लोडादयः। यत्र

प्र ]कर्तृत्वमेव तस्याऽऽशीयमानं—'प्रश्नक्रियायाः कर्ता त्वं भवे'ति। यथा 'राजा भव युध्यस्वे'ति राजत्वमेवाऽऽशीयते। यस्तु प्रश्नक्रियां समाप्तक्रियो वा प्रयोज्यः कर्ता तस्य प्रयोजको हेतुरित्यत्र णिजभावः॥ इतरः वर्तमानक्रियस्यैवाऽनेन कर्तृत्वं युक्तमिति मत्वा चोदयति—किं च भो इति॥ अभिसम्बन्ध इति। भूताया भाविन्याश्च क्रियायाः कर्त्राभिसम्बन्धो भूतो भावी च प्रतिपाद्यत इत्यर्थः॥ अथ कथमिति। असत्यर्थे शब्दप्रयोगाऽसम्भवात्॥ अभिसम्बन्ध इति। बुद्धिपरिवर्तिन्यर्थे बहिरसत्यपि शब्दप्रयोगादिति भावः॥ न च कर्तेति। तस्यैवाऽऽशीयमानत्वात्। तदुक्तं हरिणा—'द्रव्यमात्रस्य तु प्रैषे पृच्छतेर्लोड्विधीयते। सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः'॥ इति॥ अथापीति। दुर्बलपक्षाभ्युपगमेनाऽपि परिहारोऽभिधीयत इति भावः। लोटोक्तत्वादिति। एकविषयत्वाण्णिचो लोडादीनां च पाक्षिकत्वाद्यदा लोड्भवति तदा तेनैवाऽभिहितत्वात् प्रैषस्य णिज् न भविष्यति॥

उ ]नीयम्। आशीयमान—निर्वर्त्यमानमित्यर्थः। एतेन 'लोटा कर्तृत्वस्याऽभिधानात् कथमकर्तृत्व'मित्यपास्तम्। तदुपपादयति—यस्तु प्रवृत्तेति। अस्य 'तिन्यर्थेन स्वतादिप्रयोगं विनापी'त्यादि। प्रकृतक्रियायोऽपि चोदनायां प्रैषेण एव भाष्ये—अभिसम्बन्ध इति। बुद्धिकृताऽभिसम्बन्ध इत्यर्थः। भाष्ये—न चासौ प्रक्ष्यतीति। लोडन्तप्रयोगकृतप्रेरणां विनेत्यर्थः। बुद्धेति। बुद्ध्या विपरीकृतस्यैव सर्वत्र बोधात्। प्रकृते च क्रियाया इव कर्तृत्वस्यापि तथाभूतस्यैव विधानमिति भावः। आशीयमानत्वादिति। विधेयत्वादित्यर्थः। [प्रैष इति]। द्रव्यमात्रस्य कर्तृत्वादि तस्य प्रयोग—प्रैषः। दुर्बलेति। ईश्वरस्तुरादि यदि हेतुमत्तामूने प्रहणमिति भावः। पाक्षिकत्वात्—पर्यायेण जायमानत्वात्। एतद्भाष्यनिष्कर्षं अग्रेवोक्त। कैयटोक्त-

१ अत्र पाठ- क्वाचित्क। २ 'पृच्छि' 'पृच्छन्ति' पा०। ३ च क्वाचित्क। ४ 'भवति' पा०। ५ 'प्रेरणस्य' पा०। ६ 'त्वत्यर्थौ' पा०।

च द्वितीय प्रयोज्योऽर्थो भवति, भवति तत्र णिच् । तद्यथा—आसय शाययेति ॥*॥ कृष्यादिषु चानुपपत्ति ॥*॥ कृष्यादिषु चानुत्पत्तिर्वक्तव्या । एकान्ते तूष्णीमासीन उच्यते—'पञ्चभिर्हलैः कृषती'ति । तत्र भवितव्य 'पञ्चभिर्हलैः कर्षयती'ति॥ ॥२॥ कृष्यादिषु चानुत्पत्तिर्नानाक्रियाणां कृष्यर्थत्वात् ॥३॥ कृष्यादिषु चानुत्पत्ति सिद्धा ॥ कुत ? ॥ 'नानाक्रियाणां कृष्यर्थत्वात्' । नानाक्रिया कृपेरर्थः । नावश्य कृषिर्विलेखन एव वर्तते । किं तर्हि ? ॥ प्रतिविधानेऽपि वर्तते। यदसौ भक्तबीजबलीवर्दै प्रतिविधान करोति स कृष्यर्थ । अतश्च प्रतिविधानेऽपि वर्तते, यदहरेवाऽसौ न प्रतिविधत्ते तदहरेव तत्कर्म न प्रवर्तते ॥*॥ यज्यादिषु चाऽविपर्यास ॥*॥ यज्यादिषु चाऽविपर्यासो

प्र ]एकान्त इति—कृषावसामर्थ्यं दर्शयति।तूष्णीमासीन इति—व्यापाराऽभावकथनम् । कश्चिद्धि सामर्थ्यातिशयाद्युगपत्पञ्चभिर्हलैः कृपेत्पर्यायेण वेति तन्निराकरणाय 'एकान्ते तूष्णीमासीन' इत्युक्तम् । तत्र पञ्चभिर्हलैर्भूमिमन्यैः कर्षयतीत्यर्थावगमात् णिचि सति कृषतीति न प्राप्नोतीति तदनुत्पत्तिर्वक्तव्येत्यर्थ ॥ प्रतिविधानेपीति । अनेकार्थत्वाद्धातूना कृषिरेव प्रयोजकव्यापारे तत्समर्थाचरणलक्षणे वर्तत इत्यर्थ । धातुनैव चोपपदसहितेन तस्याऽर्थस्य प्रकाशितत्वाण्णिजभाव, 'विभाषोपपदेन प्रतीयमान' इति पक्षे आत्मनेपदाऽभावश्च । यदा तु कृषिर्विलेखने वर्तते तदा भवत्येव 'पञ्चभिर्हलैः कर्षयती'ति णिच् ॥ यज्यादिष्विति । यते

उ ]व्याख्याने हि लोकसिद्धे तद्वारणेऽपि तदुक्तरीत्या शक्तितात्पर्यविषयस्य पर्यायस्याऽवारणाच्चिन्त्यमिदम् । नन्वेव णिज्भेदो समावेशाऽभावे 'आसये'त्याद्युपपत्तिरत आह—भाष्ये—यत्र द्वितीय इति । प्रयोजकोऽपि यथा यदाऽन्याऽपेक्षया प्रयोज्यो भवति तदा तयो समावेश इत्यर्थ । ननु प्रयोजकव्यापारस्य पञ्चभिर्हलैरित्यनेनैव द्योतितत्वात्तद्द्योतनाय 'एकान्ते' इत्यादि व्यर्थमत आह—कश्चिदिति। तत्रेति । एवञ्च प्रयोजकव्यापारस्याऽत्र प्रतीतेस्तद्बोधनाय णिच् स्यादिति भाव । अनेकार्थत्वादिति । प्रतिविधानान्तोऽत्र धात्वर्थ । फलानुकूलत्वेन स एव धा । करणस्य च फले एवान्वय । भाष्य—तत्कर्मेत्यस्य कृष्यर्थफलमित्यर्थ । आद्येऽत्र प्रयोज्यस्य कर्मत्व इष्टापत्ति । 'गतिबुद्धे'ति सूत्रन्तु नियमस्य सजातीयापेक्षत्वादन्यथा त एव व्यावर्त्तकम् । अन्ये तु तत्प्राप्तिरेव नेति दिक् । णिजभावइति । द्योतकतापक्षेऽप्युपपदेनैव द्योतितत्वाद्द्योतकणिचोऽभाव इतिभाव । वस्तुतो द्योतकत्वादिनो वचनाऽऽरम्भ, द्योतकसमुच्चयदर्शनात्। वाचकत्ववादेन तत्खण्डनमिति तत्त्वम्। प्रयोजकव्यापारफलस्य कर्तृगामि त्वाकृपेरा मनेपदमाशङ्कयाह—विभाषेति ।

१ 'कृषति' । २ अपि क्वचिन्न । ३ 'याज्यादिषु च विपर्यास' । ४ 'चाऽविप' ।

र्थीकरणेन सामर्थ्यमिति कृत्वा द्वितीया भविष्यति॥ ॥*॥ आख्यानात्कृतस्तदाचष्टे [इति] कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् ॥*॥ आख्यानात्कृदन्तात् णिज्वक्तव्यस्तदाचष्ट इत्येतस्मिन्नर्थे । 'कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च

---

म ]रिति । एतच्च प्रक्रियागतविभागाश्रयेणोक्तम् । परमार्थतस्तु धात्वन्तर सूत्रनिर्दिष्टनियावचनं ॥ आख्यानादिति । आख्यायत इत्याख्यानम्—इतिवृत्तमुच्यते । प्रकृतिवदिति । णिचो या प्रकृतिः कंसवधादि, तया तुल्यं कर्मादि कारकं भवति । यथाऽऽख्यानक्रियापेक्षं कंसवधादेः कर्मत्वं तथा कंसादेरपि प्रतिपत्त्याख्यानकर्मभावस्येत्यर्थः । प्रकृतिवद्भावातिदेशेन च कंसादेः पृथक्कृतत्वात् कंसमघातयदित्यादौ कंसादिशब्दवर्तिनस्याः संज्ञायामप्रादय कर्मादेर्न भवन्ति । चत्करणाच्च स्वाश्रयमपि भवतीति 'पुष्येण योजयती'ति पुष्यस्य कर्मत्वाऽभावः । अथ वा प्रकृत्या तुल्यं वर्तत इति प्रकृतिवत्, प्रकृतेरिव प्रकृतिवत् । ण्यन्तस्य कारकमित्युभयथानिर्देशाश्रयणात् च चित्रकार्थपरिगृह्यते । प्रकृतिप्रत्यापत्त्या राजागमनादौ नलोपाद्यपि निवर्तत इति

---

उ ]इत्यर्थः । करोत्यर्थाभिधायीति । करोत्यर्थविशेषणीभूताख्यानस्याख्यार्थोऽभिधीयत इत्यर्थः । सूत्रणे च सूत्रेर्वृत्तिर्बोध्या । भाष्ये—व्याकरणेन सामर्थ्यमिति । तज्जन्यफलश्रवणरूपमित्यर्थः । नित्यशब्ददर्शने 'सूत्रयती'त्यत्राऽऽख्यानार्थोऽभावाच्छङ्कैव नास्तीत्याह—एतथेति । आख्यायत इति । बाहुलकात्कर्मणि ल्युट् । भावल्युटि ह्याख्यानक्रियायां कर्मत्वं न स्यात् । णिच इति । 'कृतो या प्रकृति'रिति तु नोक्तं, प्रत्ययलक्षणेन कृदन्ततयाऽनेनातिदेशेन च षष्ठीप्रसङ्गात्, 'राजागमन'मित्यादौ राज्ञः कर्तृतया 'राजान'मिति द्वितीयाऽनापत्तेश्च । तदयमर्थः—णिच्प्रकृतेर्याऽऽख्यानक्रियायाः कारकता तथा कंसादेरपीति । तदाह—यथेति । नन्वेवमप्यव्यवस्थेत्यत आह—प्रकृतिवद्भावातिदेशेनेति । प्रकृत्यामिव प्रकृतिवत् । अत्र प्रकृतिशब्देन कृत्—प्रकृतिः । तस्यां यथा कंसादेरन्तर्भावस्तथा कृदन्तप्रकृतिणिजन्तेऽपीत्यर्थः । नन्वेवं 'पुष्येण योजयती'त्यत्रापि द्वितीयापत्तिरत आह—चत्करणादिति । क्वचिदिति । 'पुष्ययोगे ज्ञा'इत्यत्र च प्रकृतेरेव प्रकृतिवदित्येवाश्रयणीयमिति भावः । एवञ्च द्वितीयाद्यन्तत्वाय पृथक्त्वाय चाऽतिदेशद्वयमाश्रयणीयं भवति, वैरूप्यं च भवतीति गौरवम्, अत 'प्रकृतिवच्चे'त्यस्य कृत्प्रकृतेर्हन्त्यादेर्ण्यन्तत्वे यथा कारकं द्वितीयाद्यन्तं, धात्वन्तर्भूतं च तथेत्यर्थं उचितः । 'प्रकृतिप्रत्यापत्ति'रित्यत्र कृत्प्रकृतेरेव ग्रहणेनाऽत्रापि तदर्थौचित्याच्च 'पुष्येण योजयती'त्यत्र च न दोषः । प्रकृतिमिति । कृल्लुकि प्रत्यापत्तावपि राजन्शब्दे नलोपनिवृत्तिः कथमिति चिन्त्यम् । वस्तुतः 'प्रकृतिवत्कारक'मित्यतिदेशात्पृथक्त्वेन समासाऽभावेनाऽपदत्वात्तन्निवृत्तिरिति बोध्यम् । अत्र 'प्रकृतिवच्चे'ति 'च' "कारक"-

कारक । [ आख्यानात्कृदन्ताण्णिज्वक्तव्यम् ] । कंसवधमाचष्टे कंसं घातयति । बलिबन्धमाचष्टे बलिं बन्धयति ॥

॥*॥ आख्यानाच्च प्रतिषेधः ॥*॥ आख्यानशब्दाच्च प्रतिषेधो वक्तव्यः । आख्यानमाचष्टे इति ॥ किं पुनर्यान्येतानि सञ्ज्ञाभूतान्याख्यानानि तेभ्य उत्पत्त्या भवितव्यम्, आहो स्वित्क्रियाख्यानमात्रात् ?॥ किं चातः ॥ यदि सञ्ज्ञाभूतेभ्यः, इह न प्राप्नोति,—राजागमनमाचष्टे राजानमागमयति । अथ क्रियाख्यानमात्रात्, न दोषो भवति ॥ यथा न दोषस्तथाऽस्तु ॥*॥ इत

प्र ] राजानमागमयतीत्याद्युपपन्नं भवति । कंसवधमिति यद्यप्यत्र सन्नियोगनिर्दिष्टानामन्यतरापाये उभयोरप्यभाव इति वधादेशनिवृत्तिर्निष्पद्यते तथापि पृथग्योग जानाति पुनरा यौगपद्यमिति कृत्वास्य सन्नियोगशिष्टत्वाऽभावान्निवृत्तिर्न सिध्यतीति प्रकृतिप्रत्यापत्तिरुच्यते । किं पुनरिति । कंसवध-बलिबन्धाख्यानादीनामित्यर्थः । इदम् थायामिति । यदाऽरण्यस्थो रममाणान् मृगान् प्रतिपद्य व्याचष्ट—एतस्मिन्नरण्ये एवंविधा मृगा रमन्त इति तदा प्रतिपाद्यस्य दर्शनार्था प्रवृत्तिर्भवति । यदा

उ ] इत्यनन्तरं योग—प्रकृतिवच्चकारकं च नि । तत तद्धत्वार्थसंप्रत्ययादिदृष्टम् । तत धातवस्तीत्यादौ कृत्वैव सिध्यति, अन्यथा 'धातोः स्वरूपग्रहणे' इति परिभाषया न स्यात् । कश्चित्तु वदति 'प्रकृति पदेन हनुमान्स्यन्तप्रकृति हनुमान्स्यन्तश्च प्रत्ययस्योपस्थितत्वात्प्रकृतिग्रहणमेव । प्रत्यापत्ति —प्रत्याभिमुख्यम् । सा च तत्स्वत्व तत्कार्यसंपत्त्य च भवतीति । अनेनैव कारकत्वाभिमानं वधादेशनिवृत्ति कृन्नलुगादिकं च सिद्धम् । नन्वेव प्रत्ययग्रहणेन कृदन्तलात्कर्मादे षष्ठी स्यादत —प्रकृतिवच्च कारकमिति । यद्विभक्त्यन्तं तत्र तत्कर्मतापीत्यर्थः । एवञ्चाऽऽपत्तिरूपता न दृष्टापि । 'प्रत्यापत्ति शब्दस्य च प्रत्यभिमानविषयतयाऽऽपत्ति स्थितिरित्यर्थः ननु तस्य पुनः प्रादुर्भाव प्रत्यापत्ति । अत एव 'रात्रिं विवासयति' 'मृगान् रमयन्ती'त्युदाहरणविषयत्वे प्रकृतिप्रत्यापत्तिरत्र सङ्गतिः । अन्यथा तत्र प्रकृतता दर्शनाऽनपहारा प्रत्यापत्तिरन्यत्वहाराऽसङ्गतिः स्पष्टैव । कारकत्वाभिमानं तस्या फलमित्याहुः । यद्यप्यत्र सन्नियोगेति । एवञ्च तदनित्यत्वज्ञापकस्य प्रकृतिप्रत्यापत्ति वचोऽनर्थकमिति ध्येयम् । भाष्ये सञ्ज्ञाभूतानीत्यस्य प्रसिद्धानीत्यर्थः । भाष्ये—राजानमागमयतीति । एतच्च 'देवदत्तपाकमाचष्टे' इत्यर्थे देवदत्तं पाचयतीत्यत्र 'गतिबुद्धी'तिनियमेन देवदत्तस्य कर्मत्वाऽभावात् । दृश्यथेति । दृश्यादिभ्य इत दृशि साधु । रममाणान्मृगानिति । एतेन 'मृगरमण'शब्द आगते

१ अत्र पाठः कश्चित्र । २ 'बन्धि' 'बर्हि' 'बन्धि' पा० । ३ 'यतीति' पा० ।
४ 'सञ्ज्ञाभूताख्यानानि तेभ्य' 'सञ्ज्ञीभूताख्याना' पा० । ५ 'क्रियाख्यान' पा० ।

र्थाया च प्रवृत्तौ ॥*॥ दृश्यर्थायां च प्रवृत्तौ कृदन्ताण्णिज्वक्तव्यस्तदाचष्ट इत्येतस्मिन्नर्थे । कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । मृगरमणमाचष्टे मृगान् रमयतीति ॥ दृश्यर्थायामिति किमर्थम् ? ॥ यदा हि ग्रामे मृगरमणमाचष्टे मृगरमणमाचष्ट इत्येव तदा भवितव्यम् ॥*॥ आङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम् ॥*॥ कालात्यन्तसंयोगे मर्यादायां कृदन्ताण्णिज्वक्तव्यस्तदाचष्ट इत्येतस्मिन्नर्थे, आङ्लोपश्च कृल्लुक्प्रतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । आरात्रिविवासमाचष्टे रात्रिं विवासयतीति । ॥*॥ चित्रीकरणे प्रापि ॥*॥ चित्रीकरणे प्राप्यर्थे कृदन्ताण्णिज्वक्तव्यः । कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावयते—सूर्यमुद्गमयतीति ॥*॥ नक्षत्रयोगे ज्ञि ॥*॥ नक्षत्रयोगे जानात्यर्थे कृदन्ताण्णिज्वक्तव्यः । कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकं भवतीति वक्तव्यम् । पुष्ययोगं जानाति पुष्येण योजयति । मघाभिर्योजयतीति ॥ तत्तर्हीदं बहु वक्तव्यम् ? ॥ ॥*॥ न वा सामान्यकृतत्वाद्धेतुतो ह्यविशिष्टम् ॥*॥ न वा वक्तव्यम् ॥ किं

प्र.] हि ग्राम इति । ग्रामे मृगाणामभवात्तद्दर्शनार्थो प्रवृत्तिः । 'दृश्यर्थाया'मित्येतच्च मृगरमणादिविषयमेव द्रष्टव्यम् । राजागमनादिषु तु दृश्यर्थप्रवृत्त्यभावेऽपि णिज्भवति । आरात्रिविवासमिति । यावद्रात्रेर्विवासोऽतिक्रमणं तावत्कथां कथयतीत्यर्थः । चित्रीकरण इति । आश्चर्यकरणे गम्यमाने तत्प्रयोजनार्थे णिज्वक्तव्यः । संभावयत इति । 'भू प्राप्तावात्मनेपदी'त्यस्य रूपम् । पुष्येणेति । पुष्यो योगक्रियायाः कर्ता, स हि चन्द्रमसं सम्बध्नाति । तत्रोभयप्राप्तौ कर्मणीति नियमात् षष्ठ्यभावे

उ] रुढ इत्यपाठ्यम् । प्रवृत्तिर्भवतीति । आख्यानविषयेत्यर्थः । इत्येतच्चेति । प्रयोगाऽनुसारादिति भावः । यावदिति । रात्रिरूपकालेनाऽत्यन्तसंयोग । कथाख्याऽऽख्याने कर्मेति भावः । 'आरात्रिविवास'शब्देन तावत्पर्यन्तकथा लक्ष्यन्त इति बोध्यम् । कालाऽत्यन्तसंयोगे गम्यमाने इत्यर्थः । वसेरकर्मकतया 'गतिबुद्धी'ति रात्रेः कर्मत्वं हेतुमण्णिचि तद्वदिहापि बोध्यम् । भाष्ये-प्राप्तीति,—सम्पदादित्वेन भावक्विबन्तात्सप्तमी । एवं 'ज्ञौ'त्यपि । भू प्राप्तावितिः । 'सम्भावयते' इत्यस्य प्रापयतीत्यर्थः । उभयप्राप्ताविति । नियमेन चन्द्रमसः प्रतीतेरुभयप्राप्तिः । वस्तुतः सहयोगेऽत्र तृतीया, कर्तृप्रयोगाऽभावेनोभयप्राप्तेरभावात् । मतान्तरोक्तं प्रकृतिवदित्यस्यार्थेऽपि न दोषः, हेतुमण्णिचि गत्यादिनियमात्तृतीयाया एव पुष्येण-

१ इदं क्वचिन्न । २ इति क्वचिन्न । ३ 'भवतीति' । ४ 'आङ्लोपश्च' 'आलोपश्च' पा० । ५ 'प्राप्यर्थे' 'प्राप्त्यर्थे' पा० । ६ इदं प्रक्षिप्तम् । ७ 'सूर्योद्गमं' पा० ।

प्रयोजको नाम भवति तेनैतत्तुल्यम्॥ यदि तर्हि सर्वं इमे स्वभूत्यर्थं प्रवर्तन्ते क प्रयोज्यार्थ ?॥३॥ यदभिप्रायेषु सज्जन्ते ॥४॥ यदभिप्रायेषु[आ]सज्जन्ते-ईदृशौ यवौ कुरु, ईदृशौ पुरुषौ कुर्विति। आदित्यश्चास्याभिप्राये सज्जते। एष तस्याऽभिप्राय -'उज्जयिन्या. प्रस्थितो माहिष्मत्यां सूर्योद्गमनं संभावये-यें'ति, तं चास्यादित्योऽभिप्रायं निर्वर्तयति ॥ भवेदिह वर्तमानकालता युक्ता स्यात्-'उज्जयिन्या प्रस्थितो माहिष्मत्यां सूर्योद्गमनं सभावयते सूर्यमुद्गमयती'ति, तत्रस्थस्य हि तस्यादित्य उदेति। इह कथं वर्तमानकालता,-कंम घातयति बलिं बन्धयतीति, चिरहते [च] कंसे चिरबद्धे च बलौ ?॥

प्र ]त्यर्थं। परिभाषा इति। दण्डनादिका। यदभिप्रायेष्विति। तदुक्तं हरिणा-'निमित्तभ्य प्रवर्तन्ते सर्व एव स्वभूतये। अभिप्रायानुरोधोऽपि स्वार्थस्यैव प्रसिद्धये'॥इति। सज्जन्त इति भाष्यकारवचनादात्मनेपदम्। परस्मैपदी तु सजि -

उ ]हि हेतुत्वम्, अयम न तथेत्यप्रयोजकोऽहेतुरिति चेदित्यर्थ।प्रवृत्तिरुभयत्रा-ऽनपेक्षेति। प्रयोज्यप्रवृत्तिरुभयत्रापि प्रयोजकाभिप्रेतानपेक्षा तन्मात्रानुद्देश्यकेत्य-र्थ। उभयत्रानपेक्ष्यैव सिद्धिरिति। 'किंचि'दित्यस्य प्रयोजकाभिप्रेतमात्रं। किंचिदनपेक्ष्येनोभयोर्देवदत्तादित्ययोर्भवतीत्यर्थ। तस्मात्प्रयोजको न निर्देश्य। अन्यथा णिजनवकाश इति भाव। तदेव व्युत्पादयति-नेह कश्चिदिति। 'सत्या-मपि प्रेरणाया'मिति शेष। सनिन्द उपालम्भ -परिभाषणम्।तदाह-दण्डना-दिका इति। अनेन सर्वत्र स्वेष्टसाधनताज्ञान प्रवर्तकमित्युक्तम्। भाष्ये-कुर्वतः प्रयोजक इति। प्रयोजकाऽभिप्रेतमात्रोद्देश विनापि स्वेष्टोद्देशेनैव कुर्वन् पुम प्रयो-जको दृश्यते। यथा गुरु शिष्यानध्ययने प्रवर्तयतीत्यादौ, तद्वत्सूर्यस्यापीति भाव।

क प्रयोज्यार्थ इति। प्रेरणाजन्यप्रवृत्त्याश्रय प्रयोज्यस्तस्य प्रेरणया कोऽर्थ, प्रयोजन किमिति प्रश्न.। उत्तरमाह-यदभिप्रायेष्वासज्जन्त इति। प्रेरकाभि-प्रायेष्वासज्जन्ते। तदभिप्राय ज्ञात्वा तं निर्वर्तयन्ति यदेष एव प्रयोज्यस्य प्रेरणया-ऽर्थ इत्यन्वय। एवञ्च क्रियाया स्वाभिप्रायानुरोधफलक तज्ज्ञापनमेव प्रेरणाफल-मिति भाव। 'अभिप्राय'पदेन तद्विषय उच्यते। तदाह-ईदृशावित्यादिना। तदाह निमित्तेभ्य इति। स्वभूतिसाधनत्वज्ञापकप्रेरणादिभ्य इत्यर्थ। ननु स्वभूति-फलकप्रवृत्तिप्रयोजकाऽभिप्रायाऽनुरोधोऽपि किमर्थ इत्यत आह-अभिप्रायेति। ननु शिष्यादीनां स्वार्थसिद्धये गुर्वाद्यभिप्रायानुरोधेऽपि सूर्यस्य तदनुरोधे मानाऽभाव, फलाऽभावश्चेति चेन्न, अभिप्रायसम्पत्तिमात्रेण तदुद्देश्यकप्रवृत्त्याश्रयत्वादिरूपप्रयोज्य-प्रयोजकभावाऽध्यारोपेण णिजिति तात्पर्यात्। भाष्यकारवचनादिति। तत्प्र-योगादस्याऽनुदात्तेत्त्वेऽपि पाठोऽनुमीयत इति भाव। ननु 'चिरहते कंसे' इत्युक्त्या

अत्रापि युक्ता॥ कथम्? ॥ ये तावदेते शौभिका[1] नामैते प्रत्यक्षं कंसं घातयन्ति, प्रत्यक्षं च बलिं बन्धयन्तीति॥ चित्रेषु कथम्?॥ चित्रेष्वपि उद्गूर्णा निपतिताश्च प्रहारा दृश्यन्ते कंसकर्षण्यश्च[2] ॥ ग्रन्थिकेषु कथम्, यत्र शब्दग्रन्थगडुमात्रं[3] लक्ष्यते?॥ ते ऽपि हि तेषामुत्पत्तिप्रभृत्या विनाशादृद्धीर्व्याचक्षाणाः[4] सतो बुद्धिविषयान् प्रकाशयन्ति॥ आतश्च सतः—॥६॥ व्यामिश्रा[5] ॥६॥ व्यामिश्राश्च दृश्यन्ते। केचित्कंसभक्ता भवन्ति केचिद्वासुदेवभक्ताः। 'वर्णान्यत्वं' खल्वपि पुष्यन्ति। केचिद्रक्तमुखा[7] भवन्ति केचित्कालमुखाः[8]। 'त्रैकाल्यं' खल्वपि लोके लक्ष्यते,

---

प्र ] गृह्णन्तु यत्र गतार्थेति। चिरहत इति। चिरप्रवृत्तत्वाद्धननघातकभावस्य प्रयोजकव्यापारस्य वर्तमानत्वाऽसम्भवात्। उपमन्त्रणारम्भे तु न दोषः, आख्यानस्य वर्तमानत्वादित्यर्थः। शौभिका इति। कंसानुकारिणां नटानां व्याख्यानोपाध्यायाः। कंसानुकारी नटः सामाजिकैः कंसबुद्ध्या परिगृहीतः कंसो भाष्ये विवक्षितः। ग्रन्थिकेष्विति। कथकेष्वित्यर्थः। सतोऽसीति। तदुक्तं हरिणा—'शब्दोपहितरूपांस्तु बुद्धेर्वि

---

उ ] प्रयोजकव्यापारस्य वर्तमानकालत्वाऽभावो नास्तीत्यत आह—चिरप्रवृत्तेति। कंसकृष्णयोर्वध्यघातकभावस्य चिरप्रवृत्तत्वेन तत्प्रयोजकव्यापारस्यापि तत्त्वमेवेति भावः। कंसाद्यनुकारिणा—कंसादिमन्यमानानाम्। भाष्ये—प्रत्यक्षं कंसं घातयन्तीति। तादृशेनैव सामुख्येनेत्यर्थः। उद्गूर्णा इति। उद्यता इत्यर्थः। 'गुरी उद्यमने' इत्यस्य रूपम्। एवञ्च चित्रलेखका अपि चित्रस्थं कंसं तादृशेनैव कृष्णेन घातयन्तीत्यर्थः। 'ग्रन्थिक'पदे 'अत इनिठनौ' इति ठन्। शब्दग्रन्थगडुरिति। शब्दः—कथकमुखोच्चार्यमाणः। ग्रन्थः—तद्ग्रन्थपुस्तकरूपः। गडुः मनुष्यगडुः। न तत्र कश्चिदपि कंसादिबुद्धिविषय इत्यर्थं इत्याह। तेऽपि—ग्रन्थिका अपि। तद्वृद्धीर्व्याचक्षाणा इति। तदैश्वर्याणीत्यर्थः। तानि कथयन्तो ग्रन्थिकाः स्वबुद्धिविषयभूतान् सतो विद्यमानान् कंसादीन् प्रकाशयन्ति—श्रोतृबुद्धौ समर्पयन्तीत्यर्थः। विद्यमानत्वेन बुद्धिविषयत्वे हेतुमाह—आतश्च सत इति। व्यामिश्राश्चेति। चो हेतौ। यतो विरुद्धपक्षाश्रिता दृश्यन्त इत्यर्थः। न ह्यनीतबुद्धौ तत्सम्भवतीति भावः। तत्कालकृतैः स्वपक्ष इव वर्णान्यत्वं पुष्यन्ति—पुष्टं कुर्वन्ति, दर्शयन्तीत्यर्थः। तत्रैव युक्त्यन्तरमाह—त्रैकाल्यं खल्वपीति। एवञ्च बुद्धिविषयसत्त्वेन सर्वोऽपि व्यवहार इति भावः। शब्देति। शब्दसमर्पितबुद्धिविषयाकारानित्यर्थः। साधनत्वेनेति।

---

१ 'शोभनिका' 'शोभिका' पा०। २ 'कंसस्य वासुदेवस्य च' कंसस्य 'कृष्णस्य च' पा०। 'कंसकर्षण्यो हि रज्जवः'। 'कार्षण्य'। ३ 'गडु' पा०। 'ग्रन्थनमात्र'। ४ 'वृद्धीः' 'बुद्धीः' 'तद्बुद्धीः' पा०। ५ 'व्याश्रिताश्च' 'व्यामिश्रिताश्च'। 'ताहि'। ६ इदं वार्त्तिकं। भाष्यमेव न वार्त्तिकमित्यन्ये। ७ 'केचिद्रक्तमुखाः'। ८ 'कालमुखाः'।

'गच्छ हन्यते कंसः'। 'गच्छ घानिष्यते कंस'। 'किं गतेन, हतः कंस' इति ॥

* इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥

## कण्ड्वादिभ्यो यक् ॥ ३।१।२७ ॥

किमर्थः ककारः ? ॥*॥ [ यकोऽके ] गुणवृद्धिप्रतिषेधार्थः ॥१॥ क्ङितीति गुणवृद्धिप्रतिषेधो यथा स्यात् ॥ नैतदस्ति प्रयोजनम्। सार्वधातुकार्धधातुकयोरनन्तरस्य गुण उच्यते, धातोश्च विहितः प्रत्ययः शेष आर्धधातुकसंज्ञां लभते, न चायं धातोर्विधीयते। कण्ड्वादीनि हि प्रातिपदिकानि ॥ ॥*॥ कण्ड्वादिभ्यो वावचनम् ॥२॥ [ कण्ड्वादिभ्यो वावचनं कर्तव्यम् ]। कण्ड्वादिभ्यो वेति वक्तव्यम् ॥*॥ अवचने हि नित्यप्रत्ययत्वम् ॥३॥ अक्रियमाणे हि वावचने नित्यः प्रत्ययविधिः प्रसज्येत ॥ तत्र को दोषः ? ॥*॥ तत्र धातुविधितुक्प्र-

प्र ] पयता गतान्। प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते' ॥इति॥ शिष्टं [भाष्यं] स्पष्टम्॥ इति कैयटकृते भाष्यप्रदीपे तृतीयस्य प्रथमे पादे द्वितीयमाह्निकम्॥

कण्ड्वादिभ्यो यक्। किमर्थ इति। द्वैविध्यं कण्ड्वादीनां दर्शयितुमुपन्यासः। ककारप्रयोजनमेव दर्शयितुं वस्त्वन्तरमुपक्षिप्यते–कण्ड्वादिभ्यो वावचनमिति। यदा कण्ड्वादीनि प्रातिपदिकानि तदा 'वे'ति वक्तव्यमित्यर्थः। तत्र को दोष इति। नित्येऽपि प्रत्यये क्विपा 'कण्डूः'रित्यादि सिध्यतीति भावः।क्विपा यथेष्टं रूपं न सिध्यतीति दर्शयितुमाह–तत्रेति। 'कण्डूय'शब्दात् क्विपि विहितेऽकारलोपस्य स्थानिव-

उ.] द्भावाद्विषयत्वादेरित्यर्थः ॥ इति नागेशभट्टविरचिते भाष्यप्रदीपोद्योते तृतीयस्य प्रथमे द्वितीयमाह्निकम्।

कण्ड्वादिभ्यो। धातुभ्यो यकि गुणनिषेधकत्वया कस्य चारितार्थ्यादाह–द्वैविध्यमिति। प्रातिपदिकत्वमात्रन्तु प्रष्टा मन्यते। उपक्षिप्यत इति। तत्समाधाने नैव ककारप्रयोजनमप्युक्तमेव भवतीति भावः। यदेति। प्रातिपदिकत्वपक्षेऽपीत्यर्थः। केवलधातुपक्षे तु वावचने क्रियमाणेऽपि 'कण्डूवनी'त्यनिष्टप्रसङ्गः, कण्ड्वादित्वादाद्युवङादिप्रसङ्गश्चेति भावः।न च प्रातिपदिकान्येव सन्तु,अत्र च सूत्रे 'करणे' इत्यनुवर्त्तते, तेन कण्डूं करोतीत्यर्थे यक्।अन्यदा तदभावः।तेन कण्ड्वादिरित्यादेः सिद्धिः। यगन्तेभ्यस्तु न क्विप्, अनभिधानात्। तेन नोक्तदूषिते प्रयोगः। एवं 'वा'-वचनं किमर्थमिति वाच्यं,'सुख्यती'त्यादावतो लोपानापत्तेः।क्विपा–सम्पदादिक्विपा। यथेष्टमिति। वीप्सया 'यथा सादृश्ये' इत्यव्ययीभावः। एकवचने युक्तो नोदाहृतमित्यत आह–कण्डूय इति। क्वौविति। 'क्वौ लुप्तं न स्थानिव'दिति निषेधादिति भावः।

१ इदं प्रक्षिप्तम्। २ इदं वार्त्तिकं क्वचिन्न दृश्यते।

निषेधः ॥*॥ तत्र धातुविधेस्तुकश्च प्रतिषेधो वक्तव्यः स्यात्। कण्ड्वौ कण्ड्वः। 'अचि श्नुधातुभ्रुवां य्वोरियङुवङा'विति युवङादेशः प्रसज्येत। इह कण्ड्वा कण्ड्वे इति,—'ओः सुपी'ति [विभक्तेरुदात्तत्व]प्रतिषेधः प्रसज्येत। तुकः प्रतिषेधः — वल्गु मन्तुरिति। 'ह्रस्वस्य पिति कृति [ तु'गिति ] तुक् प्राप्नोति॥*॥ ह्रस्वयलोपौ च ॥*॥ ह्रस्वयलोपौ च वक्तव्यौ स्याताम्। ह्रस्वः–वल्गुर्मन्तुरिति ॥ किमर्थमिदं, न ह्रस्व एवायम् ?॥अन्तरङ्गत्वाद्येऽर्थकार इति दीर्घत्वं प्राप्नोति। ह्रस्वः ॥ यलोपः—यलोपश्च वक्तव्यः। कण्डूः मन्तुः वल्गुरिति॥ किमर्थमिदं, न वलीन्येव सिद्धम् ?॥ वलीत्युच्यते न चात्र वलादिं पश्यामः ॥ ननु च क्विवलादिः॥ क्विलोपे कृते वलादयभावान्न प्राप्नोति॥ इदमिह सम्प्रधार्यं-क्विब्लोपः क्रियतां यलि लोप इति, किमत्र कर्तव्यम् ?। परत्वात्क्विब्लोपः। नित्य यस्यापि क्विब्लोपः। कृतेऽपि यलोपे प्राप्नोत्यकृतेऽपि प्राप्नोति। नित्यत्वात्पर-

प ]त्वमुत्पत्ति कर्तव्ये नास्ति। 'ज्वरत्वरस्त्रिव्यविमवामुपधायाश्चे'ति निषेधात्। यथापि स्थानिवत्त्वादुवङ् स्यात्तथापि वकारस्योठ् करिष्यते। 'आदिशब्दश्च पूर्वो वकार' ऊठि कर्तव्ये स्थानिवत्त्वाऽभावः। अत एवेह पुनरुवङ् भवति, तत्र

उ ]भयप्राप्तौ तदभावनिकम्। किन्तु 'अचो विधौ ने'त्येव सार्वत्रिकमिति भावः। इह प्रौक्ष्या। आक्षिप्तातिति। 'दो विधि'मितिनिषेधादित्यपि बोध्यम्। अत एवेति। आदिशब्दश्च पूर्वत्वेन स्थानिवत्त्वाऽभावादित्यर्थः। पुनरुवङ्भवतीति। 'लक्ष्ये लक्षणस्ये'ति न्यायादित्यपि बोध्यम्। न चास्मादिशब्दश्च पूर्वत्वं स्थानिवद्भावेन लभ्यं, यस्यादेशत्वाऽभावात्, तत्र आदेशत्वेऽपि तस्य कार्याऽभावात्। न च 'सर्वे सर्वपदादेशा' इति 'कण्डू'इत्यस्य कण्ड्वादेशे तस्य स्थानिवत्त्वादनादिशब्दस्य पूर्वत्वेन तस्य 'कण्डू क' इत्यादेशे कार्यं स्थानिवत्त्वम्, 'सर्वे सर्वपदादेशा' इत्याधिप्राऽच परस्मिन्निस्यस्याऽप्रवृत्ते। अत एव स्वरादिग्रहणस्य व्यवहितसाधारणपूर्वत्वग्रहणज्ञापकता आकरोक्ता सङ्गच्छते। न च 'प्रातिपदिकानी'त्युत्तरस्य भाष्ये वाक्यवचनात्, 'यदा कण्ड्वादीनि प्रातिपदिकानि' त्यादिना स्वयं तथैव व्याख्यानाच्च,अतोऽस्य स्थानिवत्त्वेऽपि तत्र परे पूर्वस्य 'कण्डू' इत्यस्य धातुत्वाऽभावादुवङोऽप्राप्त्याऽसङ्गतोऽयं कैयट।स्पष्टमेवं 'ओसो व्यो'रिति सूत्रे कैयटे इति वाच्यम्, अनिर्देशेनाऽकारे सत्यपि श्रवणाऽभावेन तस्य लौकिकसत्त्वविरहात्, ङित्युत्सर्वस्थानमूलकेन 'प्राग्दीव्यतो'णिति सूत्रभाष्योक्तेनैकदेशविकृतन्यायेन 'कण्डू' इत्यस्य धातुत्वाभिमानात्। तत्रेति। ओजस्निमित्तक उवङ् प्राप्नोति, एकदेशविकृतन्यायेन 'कण्डू' इत्यस्य धातुत्वात्। न

१ इति- क्वचित्। २ इह क्वचित्। ३ 'अनिर्देश्य'। ४ 'अन्तरङ्गत्वादट्यकारे'। ५ 'यलोप'। ६ 'वह'। ७ 'क्विपो लोपे' 'क्विपि लोपे'। ८ अपि क्वचित्।

स्याच्च क्विब्लोपे कृते यलोपाभावात्तु प्राप्नोति ॥

एवं तर्हि प्रत्ययलक्षणेन भविष्यति ॥ वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥

अथ क्रियमाणेऽपि धातुवचने यदा यगन्तात्क्विबुत्पद्यते दोषा एवात्र भवन्ति[1]॥ नैतेभ्यस्तदा क्विब्द्रक्ष्यते॥ किं कारणम् ?॥ अन्येभ्योऽपि दृश्यत इत्युच्यते न चैतेभ्यस्तदा क्विब्दृश्यते ॥ यथैव तर्हि क्रियमाणे[ऽपि[2]]धातुवचनेऽन्येभ्योऽपि दृश्यत इत्येवमत्र क्विन्न भवत्येवमक्रियमाणेऽपि धातुवचने न भविष्यति । अवश्यमेतेभ्यस्तदा[3] क्विबेषितव्य ॥ किं प्रयोजनम् ?॥ एतानि रूपाणि यथा स्युरिति ॥ तत्तर्हि धातुवचनं कर्तव्यम् ? ॥ न कर्तव्यम् । उभयं कण्ड्वादीनि,—धातवश्चैव प्रातिपदिकानि च । आतश्चोभयं,—कण्डूयतीति हि[4] क्रियां कुर्वाणे प्रयुज्यते, 'अस्ति मे कण्डू'रिति वेदनामात्रस्य सान्निध्ये ॥

प्र ]'कण्डू'शब्दादौ तसो कृतयोरवङ् प्राप्नोति । 'ओः सुपी'ति तु यणादेशोऽप्रयोग पूर्वस्योक्त । नित्यत्वाच्चेति । 'वेरपृक्तलोपात्पूर्वं यलि लोप' इत्येतदनाश्रित्येदमुच्यते । वर्णाश्रय इति । वल्रूपाश्रयो य्वोर्लोपो न तु प्रत्ययाश्रय । धातुवचने तु सति पक्षे यगनुपादानादभीष्टसिद्धि । नैतेभ्य इति । कर्तरि क्विपो विधानात् । कण्डूरिति च कर्मणोऽनवगमादिति भाव । अवश्यमिति । सम्पदादित्वाद्भावे कर्तव्य इति भाव । वेदनामात्रस्येति । वेदना च सत्त्वरूपा प्रतीयते न च साध्यरूपेति भाव । तत्र धात्वधिकारबलाद्धातुभ्य एव स्वार्थे यग्भवति, प्रातिपदिकेभ्यस्तु स्वाद्युत्पत्तौ सत्यां

उ ]वेनन्निमित्ते ङवति अल्लोपस्य स्थानिवत्त्वम्, 'न पदान्त'मिति निषेधादितिभाव । भाष्ये—ह्रस्वस्य चेतीति । ह्रस्वोच्चारणसामर्थ्याद्दीर्घोऽभाव मन्यते । तद्दूषयन्नाह ह्रस्वयलोपौ चेति । अन्तरङ्गत्वादिति । 'अकृतव्यूह'परिभाषा तु नास्त्येवेति भाव । वेरपृक्तलोपादिति । इद ह्यसत्तीति चिन्त्यम् । 'लोपो व्यो'रिति सूत्रे 'धातुप्रत्ययलक्षण'मिति वार्तिकम् । कर्मणोऽनवगमादितियत्र [illegible] कर्मणोऽवगमस्तत्र भवत्येव, यथा भिषज्यते क्विपि भिषक्शब्दे इत्याहु । केचित्त्विदम्भाष्यम नन्तपरमेवेत्याहु । सम्पदादित्वादिति । तेन वेदनामात्रप्रतिपादनेऽपि कण्डूरित्यादि सिद्धमिति भाव ।

भाष्ये—एतानीति । कण्डूरित्यादीनि दीर्घान्तप्रथमैकवचनान्तानीत्यर्थः । एतदपि कण्ड्वादित्याद्यर्थं धातुवचनं कर्तव्यमेवेत्याह—तत्तर्हीति । भाष्ये—उभयं कण्ड्वादीनीति । उभयेत्यर्थे 'उभय'मित्यव्ययम् । द्विप्रकाराणीत्यर्थ । उभयाङ्गीकारे प्रमाणमाह—आतश्चेति । ननु भावक्विबन्तेन वेदनामात्रे कण्डूरित्यादेर्सिद्धिरत आह—सत्त्वरूपेति । सैवेत्यर्थ । भावक्विबन्ते हि प्रकृत्या साध्यरूपेणापि प्रतीति स्यादिति भाव ।

१ 'क्विबुत्पद्यते' 'क्विबुत्पत्स्यते' 'दृश्यते' । २ इद क्वचित्त । ३ 'इत्यत्र क्विप्' पा० । ४ 'धातवश्च प्राति' पा० । ५ 'धिन्वंतद्' ।

अपर आह–'धनुप्रकरणद्धातु कस्य चासञ्जनादपि ।
आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः ॥ इति ॥

कमेर्णिङ् ॥ ३।१।३० ॥

किमर्थोऽयं णकारः । [ ॥२॥ णकारो ] वृद्ध्यर्थः । ॥३॥ 'ञ्णिती'ति वृद्धिर्यथा स्यात् ॥ क्रियमाणेऽपि वै णकारे वृद्धिर्न प्राप्नोति ॥ किं कारणम्? ॥ 'क्ङिति चे'ति प्रतिषेधात् ॥ णित्करणसामर्थ्याद्भविष्यति ॥ अत उत्तरं पठति– ॥४॥ णिङि णित्करणस्य सावकाशत्वाद्वृद्धिप्रतिषेधप्रसङ्गः ॥५॥ णिङि णित्करणं सावकाशम् ॥ कोऽवकाशः ? ॥ सामान्यग्रहणार्थो णकारः ॥

क्व सामान्यग्रहणार्थेन णकारेणार्थः ? ॥ 'णेरनिटी'ति । णिङि णित्करणस्य सावकाशत्वाद्वृद्धेः प्रतिषेधः प्राप्नोति॥ ङित्करणमपि तर्हि सावकाशम् ॥ कोऽवकाशः ? ॥ सामान्यग्रहणाविघातार्थो ङकारः ॥ क्व सामान्यग्रहणाविघातार्थेनार्थः ? ॥ अत्रैव ॥ शक्योऽत्र सामान्यग्रहणाविघातार्थोऽन्योऽनुबन्ध आसङ्क्तुम् । तत्र ङकारानुबन्धे वृद्धिप्रतिषेधः प्राप्नोति ॥ अवश्यमात्मनेपदार्थो ङकारोऽनुबन्ध आसङ्क्तव्यो ङित इत्यात्मनेपदं यथा स्यात् ॥

प्र ]'कण्डू'रित्यादिरूपसिद्धिः । कस्य चेति । धातुविधानप्रतिबद्धार्धधातुकसंज्ञाश्रय गुणनिषेधार्थस्य ककारस्य करणादपि धातु–कण्ड्वादिर्यगन्तः प्रत्ययान्तमिति ज्ञायत इत्यर्थः । आह चेति । दीर्घान्तपाठश्च पाणिनेः धातुत्वमेषां निश्चीयते । नित्ये हि धातुत्वे नित्य च यगि सति अहृस्वकार इति दीर्घस्य निवृत्त्यर्थं दीर्घपाठोऽनर्थकः स्यादित्यर्थः ।

उ ]कण्ड्वादिभ्यो भावे क्विबादयो भवन्तीति तत्त्वम् । स्वार्थे इति । 'नित्य मिति शेष । धा ग्रहणाऽननुवृत्तेः । तेन परे कण्डूयतीत्यादि न । आर्द्धधातुकस्येति । न च माऽपि माऽस्तु कोऽपि मास्त्विति वाच्यम्, सुस्वनीत्यादावतो लोपार्थं तस्या आवश्यकत्वात् ।

दीर्घपाठ इति । 'वल्गु-मन्तु'प्रभृतीनां ह्रस्वपाठः प्रातिपदिकविषये चरितार्थ इति तेषामपि दीर्घो भवति । यत्तु तेषामपि दीर्घपाठेन वल्गुप्रभृतीनां दीर्घाऽभावो ज्ञाप्यते, तन्न, भाष्यविरोधात्, शास्त्रबाधकल्पनाऽपेक्षया प्रातिपदिकलक्षणस्यैव ल्युगाव । एतेन ककारेणार्द्धधातुकत्वमेव कल्प्यतामित्यपास्तं, धातुत्वकल्पनस्यैव ल्युगात् ॥ [ कड्वादिभ्यो यक् ] ।

कमेर्णिङ् । भाष्ये–ङित्करणमपि सावकाशमिति । एवञ्च परत्वाद्वृद्धिः प्राप्नोतीति भाव । यद्यमिति । नित्यनिर्देशो ह्रस्वाऽभावफलकः तदभावे स्वत एव ह्रस्वत्वस्याभ्यर्थं मत् श्रद्धे सता ज्ञापयतीत्यर्थः । ननु णिश्चेत्यनुक्त, प्रतिषेध

१ किमर्थो णकार ' पा० । २ 'णकारो वृद्ध्यर्थ ' इति वार्त्तिकत्वेन कुत्रचित् गौडा । ३ 'अचो ञ्णितीति' पा० । ४ 'स्यादिति' पा० । ५ 'नुबन्धात्' पा० ।

एवमप्युभयोः सावकाशयोः प्रतिषेधबलीयस्त्वात्प्रतिषेधः प्राप्नोति ॥ एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—'न कमेर्वृद्धिप्रतिषेधो भवती'ति यदयं 'न कम्यमिचमा'मिति मित्संज्ञायाः प्रतिषेधं शास्ति ॥ ॥*॥ मित्प्रतिषेधस्त्वं चाऽर्थवत्त्वात् ॥*॥ मित्प्रतिषेधस्य चार्थवत्त्वाद्वृद्धिप्रतिषेधः प्राप्नोति ॥ अर्थवान् मित्प्रतिषेधः ॥ कोऽर्थः ?॥ णिङन्तस्य णिचि या वृद्धिस्तस्या ह्रस्वत्वं मा भूदिति ॥

नतु च तस्या अपि 'ह्मिति ने'ति प्रतिषेधेन भवितव्यम्॥न भवितव्यम् । उक्तमेतत्—'ह्मिति प्रतिषेधे तन्निमित्तग्रहणमुपधारोर्वान्यर्थ'मिति ॥ एवं तर्हि न णिङन्तस्य णिचि या वृद्धिस्तस्या ह्रस्वत्वं प्राप्नोति॥ किं कारणम् ?॥ 'णिचा व्यवहितत्वात्'॥लोपेकृते नास्ति व्यवधानम् ॥स्थानिवद्भावाद्व्यवधानमेव ॥ णिङ्येव तर्हि माभूदिति ॥ णिङि च न प्राप्नोति ॥ किं कारणम् ?॥ 'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इति॥नैव वा पुनर्णिङन्तस्य णिचि वृद्धिः प्राप्नोति ॥ किं कारणम् ? ॥ णिचा व्यवहितत्वात् ॥ लोपे कृते नास्ति व्यवधानम् ॥ स्थानिवद्भावाद्व्यवधानमेव॥ इदं तर्हि प्रयोजनं यच्चिण्णमुलोर्दीर्घोऽन्यतरस्यामिति दीर्घत्वं शास्ति तत्कमेर्णिङि मा भूदिति ॥ किं पुनः कारणं तत्र दीर्घोऽन्यतरस्यामित्युच्यते न ह्रस्वोऽन्यतरस्यामित्येवोच्येत॥ यथाप्राप्तं[चापि]कमेर्ह्रस्वत्वमेव । तत्रायमप्यर्थो ह्रस्वग्रहणं न कर्तव्यं भवति, प्रकृतमनुवर्तते ॥ क्व प्रकृतम् ?॥ 'मितां ह्रस्व' इति ॥ का रूपसिद्धिः—अशमि

---

[ ]कमेर्णिङ् । प्रतिषेधबलीयस्त्वादिति।प्रतिषेधस्य विप्रतिषेधशास्त्रबाधकत्वाद्बलीयस्त्वम् । णिङन्तस्येति। कामयमाने प्रयुङ्क्ते इति णिच्। णिङ्येवेति। णिङ्निमित्ता या वृद्धिस्तस्या णिङ्निमित्तं ह्रस्वत्वं मा भूदित्येवमर्थो मित्प्रतिषेधः स्यादित्यज्ञापको णिङ्वृद्धेरित्यर्थः । णिङि चेति । 'ह्रस्वत्व'मिति शेषः । असिद्धमिति । ह्रस्वे कर्तव्ये बहिरङ्गा वृद्धिरसिद्धेत्यर्थः । स्थानिवद्भावादिति । 'क्ङिलुगुपधात्वे'-त्युपधाविधौ स्थानिवत्त्वनिषेधः प्रत्ययविधावेवेति तत्रैवोक्तम् । तथा च 'पट्यती',-त्यत्र वृद्धौ कर्तव्यायां निषेधो न भवति । किं पुनरिति । कमेर्णिङि वृद्धिप्रतिषेधाभिन्य ह्रस्वत्वमेव स्थितमिति मित्प्रतिषेधो न कर्तव्यो भवति, चिण्णमुलस्तु णिङि

---

उ ]प्रवृत्तौ ह्रस्वस्यैव भावादत आह—णिङ्निमित्तेति। ता त्वसौ मन्यते।ह्रस्वे इति। वृद्धेरसिद्धत्वे ह्रस्वस्य ह्रस्वे प्रयोजनाभावात्तस्याऽप्रवृत्तौ ज्ञापकत्वमेव स्थितमिति भावः । ननु पर्जन्यवल्लक्षणप्रवृत्तेर्ह्रस्वस्थानेऽपि प्राप्तह्रस्ववारणेन दीर्घभवनाय मित्त्वनिषेधः सार्थक इत्यरुचेराह भाष्ये—नैव वेति । प्रत्ययविधावेवेति । 'पारिखीय' इत्यादौ । भाष्ये 'इदन्तर्हि प्रयोजनं यच्चिण्णमुलो'रिति। 'मित्संज्ञाप्रतिषेधस्ये'ति

---

१ इद क्वचित्। २ 'नन्वेतस्या'। ३ 'तर्हि णि'। ४ 'ह्रस्वत्व न'। ५ 'न तत्र'।

अशामि, शाम शामम् शामशाम ।² ?॥कृत्वा सिद्धम्॥ न सिध्यति–'नोदात्तोपदेशस्य मान्तस्यानाचमे'रिति वृद्धिप्रतिषेधः प्राप्नोति ॥ नैष दोषः । चिण्कृतो यः वृद्धिप्रतिषेधो, न णिचि॥ ³इदं तर्हि–अजनि अजानि, जन जनम् जान जानमिति। जनिवध्योश्चेति वृद्धिप्रतिषेधः प्राप्नोति ॥ सोऽपि चिण्कृतोऽरेव, न णिचि ॥ णिज्व्यवहितेषु तर्हि यल्लोपे चोपसङ्ख्यानं कर्तव्यं स्यात् । शमयन्तं प्रयोजितवान्–अशशमि अशामि शम शमम् शाम शामम्। शशामयते –अशशामि-अशशामि । शशाम-शशामम् शशाम शशामम्॥ किं पुनः कारणं न सिध्यति?॥ 'चिण्णमुलपरे णौ मितामुपधाया ह्रस्वो भवती'त्युच्यते,यश्चात्र णिश्चिण्णमुलपरो,न तस्मिन्मित्त्वम्,यस्मिंश्च मित्त्वं नाऽसौ णिश्चिण्णमुलपरः ॥णिलोपे तर्हि कृते चिण्णमुलपरः ॥ स्थानिवद्भावान्न चिण्णमुलपरः ॥ अथ 'दीर्घोऽन्यतरस्या'मित्युच्यमाने यावता स्थानिवद्भावः कथमेतत्सिध्यति ? ॥ एतदिदानीं दीर्घग्रहणस्य प्रयोजनम्–'दीर्घविधिं प्रत्यजादेशो न स्थानिवद्भवती'ति स्थानिवद्भावप्रतिषेधः

प्र ]वृद्धेर्ज्ञापक एवेति भावः । उपसङ्ख्यानं कर्तव्यं स्यादिति । पाक्षिकवृद्धिप्राप्त्यर्थमित्यर्थः ।एतदिदानीमिति।ननु पाक्षिकदीर्घनिवृत्त्यर्थो मित्प्रतिषेधो न ज्ञापक । यद्वेति।अभिहन्ता वभेर्यदा णिच्क्रियते तदा तत्र ह्रस्वनिवृत्त्यर्थो मित्प्रतिषेधः स्यादित्यर्थः ॥

उ ]दोषः ।'चिण्णमुलो'रित्यत्र ह्रस्वग्रहणनिवृत्त्यर्थे दीर्घमात्रे भाष्ये–णिज्व्यवहितेष्विति। पाक्षिकेति । वृद्धेर्वैकल्पिकत्वार्थं 'वृद्धिर्वे'त्युपसङ्ख्यानं कर्तव्यमित्यर्थः । दीर्घविधाने तु कृतह्रस्वस्य दीर्घविधानान्निवृत्तिरिति भावः । भाष्ये–दीर्घविधिम्प्रतीति । 'न पदान्त'सूत्रे जशादिसाहचर्येण वेपादिषु दीर्घस्यैव ग्रहणेन 'पूर्वत्राऽसिद्धे न स्थानिव'दित्याश्रित्य भगवता 'न पदान्त' सूत्रे तस्य प्रत्याख्यानेन च स्थानिवत्त्वनिषेधाऽसङ्गतेरिदम्भाष्यमेकदेश्युक्तिरिति नार्यमाधकम् । णिजन्तात्ण्यपि उपसङ्ख्यानेन सिद्धम् । 'शशम शशाम'मित्यादावपि यङ्लुगन्ताण्णमुलि सिद्धम् । 'न च 'चिण्णमुलो'-रित्यत्र दीर्घविधानसामर्थ्यादजादेशेऽपि निषेधः इति वाच्यम्, 'हेड' धातोरहेडि अहीडि–इति साधनेन चारितार्थ्यात् । ह्रस्वविधाने हि 'अहेडी'ति स्यादिति वाच्यम्। नैचित्त्वेन ह्रस्वप्रामाण्यात्तत्र्यवार्त्तिके 'वरेयलोपस्वरवर्ज'मित्यत्र दीर्घोऽप्युपसङ्ख्येय । तदिदानीं दीर्घग्रहणस्य प्रयोजनमिति । अनन्यभाष्यस्वारस्याद्धेडधातोर्घटादिष्वप्रामाणिक पाठः,'उक्ताल'सूत्रस्थभाष्यप्रामाण्याच्च 'वा दान्ते'तिसूत्रस्थभाष्यप्रामाण्याच्च चिण्णमुलोरिति सूत्रस्थभाष्यार्थेन यथाश्रुतभाष्यं रमणीयमेवेत्याहुः । 'तस्मात्प्रतिषेधः प्राप्नोती'त्यस्य 'तन्निषेधो वक्तव्य' इति शेषः । अत एव

१ इदं क्वचित् । २ 'इदं तर्हि' । ३ 'यश्चात्र चिण्णमुलपरो' । ४ 'स्थानिवद्भावप्रतिषेध' । ५ 'मेवैतावता' । ६ 'वरवत्र' । ७ 'एतदि' ।

सिद्धो भवति ॥ यदा त्वत्रस्थायादय आर्धधातुके वा भवन्ति तदा णिचि णिङ्नास्ति तदेषो मिप्रतिषेध स्यात्। तस्मात्प्रतिषेध प्राप्नोति ॥*॥ उक्त वा ॥-॥ [उक्त वा ]॥ किमुक्तम्?॥ 'तद्धितकाम्योरिकप्रकरणा दि[ग्लक्षणेयो गुणवृद्धी प्रतिषेध । नचैतल्लक्ष्यं न वृद्धिरि]ति । ॥ [ कमेर्णिङ् ॥ ] ॥

## आयादय आर्द्धधातुके वा ॥ ३।१।३१ ॥

कथमिदं विज्ञायते–'आयादिभ्यो यदार्द्धधातुकं तस्मिन्नवस्थिते वाऽऽयादीनां निवृत्तिर्भवतीति, आहो स्विदायादिप्रकृतेर्यदार्द्धधातुकं तस्मिन्नवस्थिते वाऽऽयादीनामुत्पत्तिर्भवती ति ॥ किं गतमेतदियता सूत्रेण, आहो स्विदन्यतरस्मिन्पक्षे भूय सूत्र कर्तव्यम्? ॥ गतमित्याह ॥ कथम्? ॥ यदा तावदायादिभ्यो यदार्द्धधातुकं तस्मिन्नवस्थिते वाऽऽयादीनां निवृत्तिर्भवतीति तदाऽनिर्देशेन सर्वमायादिप्रकरणमनुक्रम्य 'आयादय आर्द्धधातुके वे'त्युच्यते । यदाऽऽयादिप्रकृतेर्यदार्द्धधातुकं तस्मिन्नवस्थिते वाऽऽयादीनामुत्पत्तिर्भवतीति, तदैकं वाक्यं तथेद च । गुपूधूपविच्छिपणिपनिभ्य आय । 'आर्द्धधातुके वा' । ऋतेरीयङ् । 'आर्द्धधातुके वा' । कमेर्णिङ् ।

---

प्र ] आयादय । आर्द्धधातुक इति परसप्तमीमाश्रित्य पक्षद्वयविचार । द्वयोरपि च पक्षयोदोष इति मत्वा प्रश्न–कथमिति। आहोस्विदन्यतरस्मिन्निति । निवृत्तिशब्द उत्पत्तिशब्दो वा निर्देष्टव्य इति मन्यते । यदा तावदिति । एतद्वाक्य निरपेक्षैरायादिविधानवाक्यै परनिमित्तानपेक्षा आयादयो यदा विधीयन्ते तदाऽनेनार्द्धधातुके तेषा पक्षे निवृत्ति क्रियते । यद्यपि नित्या शब्दास्तथापि शास्त्रप्रक्रियाया क्वचिदुपात्तस्य लोपादिद्वारेण निवृत्ति क्रियते । क्वचिदपवादविधानेनोत्सर्गस्याऽनुत्पत्तिराप्यते । ततो निवृत्तिपक्षो नाऽनुपपन्न । यदेति । यदा सूत्रनयस्याऽय

---

उ ] 'उक्त वे'ति 'वा'शब्द सङ्कृच्छते । [ कमेर्णिङ् ] ।

आयादय । विषयसप्तम्यां विचाराऽऽरम्भाशङ्क–परेति । आयान्तादिभ्य आर्द्धधातुके निदर्श्य विषयभावात्तिवृत्तिर्विषया । तदर्थं तत्पादाल वार्यमित्याह– निवृत्तीति।उत्पत्तिशब्दो वेलस्य प्रयोजनं चिन्त्य सर्वत्र विधिवाक्ये तदभावेऽप्युत्पत्त्यवगते । एकतरपक्षेऽधिकवर्त्तव्यतायामेव भाष्यतात्पर्यात्। क्वचिदनुत्पत्तिशब्दो वेति पाठ । आयादनुवृत्त्यैव सिद्ध 'आयादय' इति पञ्चम्या विपरिणम्यते । आयादिभ्यो यदार्द्धधातुक तत्र परे गुणादिभ्य आयाद्यनुत्पत्तिरित्यर्थ । परन्तु इद गुर्विति दिक् । पक्षे निवृत्तेरिति । निवृत्तिपद विनापि सामर्थ्यादिति भाव । क्वचिदिति । 'अदिप्रभृतिभ्य' इत्यादौ । क्वचिदिति । यथा दीर्घविषये यण् ।

---

१ 'तदर्थ' । २ अय पाठ क्वचिन्न । ३ 'दिरि' मेत्यत्रोप। ४'सिद्धऽस्य।

वाविधिमुक्ता 'सार्वधातुके नित्यमिति वक्ष्यामि ।१॥ स्यादिविधयस्तु तु विप्रतिषेधेन तुल्यनिमित्तत्वात् ॥२॥ स्यादिभिस्त्वायादीनां बाधनं प्राप्नोति विप्रतिषेधेन ॥ किं कारणम् ? ॥ 'तुल्यनिमित्तत्वात्' । तुल्यं हि निमित्तमायादीनां स्यादीनां च । स्यादीनामवकाशः—चरिष्यति हरिष्यति । आयादीनामवकाशः—गोपायति धूपायति।इहोभयं प्राप्नोति—गोपायिष्यति धूपायिष्यतीति । परत्वात्स्यादयः प्राप्नुवन्ति ॥३॥ न वाऽऽयादिविधानस्यानवकाशत्वात् ॥४॥ न वैष दोषः ॥ किं कारणम् ? ॥ 'आयादिविधानस्याऽनवकाशत्वात्' । अनवकाशा आयादयः, उच्यन्ते च ते, वचनात्भविष्यन्ति ॥

ननु चेदानीमेवाऽवकाशः प्रक्लृप्तः—गोपायति धूपायतीति? ॥ अत्रापि शप्स्यादिर्भवति ॥ यद्यत्रापि शप्स्यादिर्भवति न त्वत्रास्ति विशेषः सति वा शप्यैसति वा ॥ अन्यदिदानीमेतदुच्यते—'नास्ति विशेष' इति। यत्तु तदुक्तम् 'आयादीनां स्यादिभिस्त्वायादीनां(?)ऽवकाश' इति, स नाऽस्त्यवकाशः । अवश्यं खल्वप्यत्र शप्स्यादिरेषितव्यः ॥ किं प्रयोजनम् ? ॥ गोपायन्ती धूपायन्तीति, शप्श्यनोर्नित्यमिति नुम्यथा स्यादिति ॥ यदि तर्ह्यनवकाशा आयादयः, आया

प्र ]वैनत्, 'गुप्त'इत्यपि न सिध्यति, कप्रत्यये परत आयस्य निवृत्तौ सत्यां प्रत्ययलक्षणेन गुणप्रसङ्गात्। न च प्रत्ययलोपसूत्रे लोपस्य ग्रहणं सूत्रे वा तद्भावितग्रहणमाश्रितम्। गोपायतीति । विशेषाऽभावादत्र शपोऽनुपपत्तिरित्यायादीनामवकाशं मन्यते । अन्यदिदानीमिति । विशेषाऽभावेऽपि लक्षणवशात् प्रवर्त्यं शपेति भावः । 'कामयते'इत्यन

उ ]नदभावात् ।सार्वधातुके नित्यमिति । अत्र नित्यग्रहणमार्थिकार्थकथनं सामान्यसूत्रे 'वे त्येनाऽस्य नित्यत्वमिद्धं । स्यादिभिरिति । ल्लदशप्रकरणोत्तर 'स्यताती' इति पक्षे इदम् । तुल्यं हि निमित्तमिति । अनेनाऽन्तरङ्गत्वं निरस्यति। परत्वात्स्यादय इति । तथा च 'नकृद्गति न्यायेनाऽस्यो न स्यादेवेति भावः । न च 'सार्वधातुके नित्य मित्यस्य परत्वाद्बाधेऽपि सामान्यसूत्रेण वैकल्पिकायो भविष्यति न हि तेनाऽपि विप्रतिषेध , तस्याऽनैमित्तिकत्वेनान्तरङ्गत्वादिति वाच्यम्, अपवादविषये उत्सर्गाऽप्रवृत्त्या सार्वधातुकविषये तदप्रवृत्तेः । न त्वत्रास्तीति । विशेषकृच्छ्राय तदभावे न प्रवर्त्तते इति मन्यते । स नाऽस्त्यवकाश इति।पर्जन्यवल्लक्षणप्रवृत्तिरिति भावः । विशेषोऽप्यस्त्यत्याह—कामयत इति । 'गोपायन्ती त्यत्रापि विशेषं भाष्ये दर्शयति—अवश्यं खल्वपीति । यदि तर्हीति । एवञ्चाऽनवकाशत्व

१ इदं क्वचिन्न । २ 'यस्त्वात्'। ३ इदमत्र क्वचिन्न । ४ विप्रतिषेधेन तुल्य'। ५ 'तीति' पा० । ६ 'यद्यप्यत्रापि' पा० । ७ सति वाऽप्यसति' पा० । ८ 'गोपायन्ति' पा० । ९ इदं क्वचिन्न ।

दिभिः स्यादीनां बाधनं प्राप्नोति ॥ यथा पुनरयं सूत्रभेदेन परिहारो यदि पुनः 'शपि नित्य'मित्युच्यते ॥ सिध्यति, सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवाऽस्तु॥ननु चोक्तं 'सत्यादिभ्यो यदार्द्धधातुकमायादिप्रकृतेर्यदार्द्धधातुकमिति चोभयथाऽनिष्टप्रसङ्ग' इति ॥ नैष दोषः । आर्द्धधातुक इति नैषा परसप्तमी ॥ का तर्हि ?॥ विषयसप्तमी॥ आर्द्धधातुकविषये इति । तत्रार्द्धधातुकविषये आयादिप्रकृतेरायादिषु वा कृतेषु यो यत्र प्रत्ययः प्राप्नोति स ततो भविष्यति ॥

सनाद्यन्ता धातवः ॥ ३।१।३२ ॥

अन्तग्रहणं किमर्थं न 'सनादयो धातवः' इत्येवोच्येत ?॥ केनेदानीं तदन्तानां भविष्यति ? ॥ तदन्तविधिना ॥ अत उत्तरं पठति ॥*॥ सनादिष्वन्तग्रहणं उक्तम् ॥*॥ [सनादिष्वन्तग्रहणं उक्तम् ]॥ किमुक्तम् ?॥ "पदसंज्ञायामन्तवचनमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थ"मिति । इदं चाऽपि प्रत्ययग्रहणमयं चाऽपि संज्ञाविधिः ॥

किमर्थं पुनरिदमुच्यते, न 'भूवादयो धातव'इत्येव सिद्धम् ?॥ न सिध्यति । पाठेन धातुसंज्ञा क्रियते न चेमे तत्र पठ्यन्ते ॥ कथं तर्ह्येषामपठ्य-

प्र ]नु विशेषोऽस्त्येव, शब्दान्तरेणाऽस्य स्वरस्याऽभावात् । यथा पुनरिति। वार्त्तिककारेण तु 'सिद्धं सार्वधातुके नित्यवचना'दिति ब्रुवता सूत्रभेदेन परिहार उक्तः । अवश्यकर्तव्ये च सूत्रभेदे 'शपि नित्य'मिति न्यासः कर्तव्यो येन दोषो न भवतीत्यर्थः । ननु तौदादिकत्वादिच्छेः शेन भाव्यं न तु शपा । एवं तर्हि न्यासभेदोपलक्षणार्थमिदमिति, शिति नित्यमिति तु न्यासः कर्तव्यः ।[आयादय आर्द्धधातुके वा]।

सनाद्यन्ता । भूवादय इत्येवेति। भुवो वादयो भूवादय इत्यर्थाश्रयणादिति भावः । ततश्च क्रियावाचित्वात्सनाद्यन्तानां धातुसंज्ञा सिध्यतीत्यर्थः । पाठेनेति। 'आदि'शब्दस्य प्रत्येकं सम्बन्धादर्थाश्रयत्वाद् धातुसंज्ञा विहिता, तेनाऽऽगणसमाप्तेः समस्तशब्दाश्च सर्वनामादयो निवर्तिता भवन्तीति भावः । स्थानिवद्भावेन धातुसंज्ञासिद्धिं वक्ष्यामीति पृच्छति—कथं तर्हीति । ननु भूवादिभ्यादिशब्दा धातुपाठे पठिता एव ।

उ ]नैः स्यादिबाधने शपोऽनित्यत्वान्नित्यत्वात्सिद्धिरिति भावः । यथा पुनरिति । वार्त्तिककृता सूत्रभेदेन परिहार उक्तस्तथा सूत्रभेदमङ्गीकृत्य यदि पुनः 'शपि नित्य'मित्युच्यते तदा सर्वदोषपरिहार इति भाष्याशयः । क्वचिद्भाष्ये एव 'शिती'ति पाठः । विषयसप्तमीति । 'आर्द्धधातुक' इति सूत्रभाष्योक्तरीत्या जातिनिर्देश इति भावः । सूत्रे 'आयादय' इत्युक्तिरनन्तरस्यैव सम्बन्ध इति भ्रमवारणार्थेति तत्त्वम् ।[आयादय]

सनाद्यन्ता । गणपाठनिबन्धना संज्ञा कथमेषामिति आह—भुवो वादय इति ।

१ 'सुच्यते'। २ 'आर्द्धधातुकविषये'। ३ अयं पाठो लुप्तः । ४ 'विधौ'ति क्वचित्।

मानानां धातुसंज्ञा भवति—अस्तेर्भूः ब्रुवो वचिः चक्षिङः ख्याञिति॥ यद्यप्येते तत्र न पठ्यन्ते प्रकृतयस्त्वेषां तत्र पठ्यन्ते, तत्रैः स्थानिवद्भावात्सिद्धम्॥ इमेऽपि तर्हि यद्यपि तत्र न पठ्यन्ते येषां त्वर्थे आदिश्यन्ते ते तत्र पठ्यन्ते, तत्र स्थानिवद्भावात्सिद्धम् ॥ न सिध्यति। 'आदेशः स्थानिव'दित्युच्यते न चेमे आदेशाः ॥ इमेऽप्यादेशाः ॥ कथम्? ॥ आदिश्यते यः स आदेशः । इमे चाप्यादिश्यन्ते ॥ एवमपि षष्ठीनिर्दिष्टस्यादेशाः स्थानिवद्भवन्तीत्युच्यते न चेमे षष्ठीनिर्दिष्टस्यादेशाः ॥ षष्ठीग्रहणं निवर्तिष्यते॥ यदि निवर्तते, अपवादे उत्सर्गकृतं प्राप्नोति 'कर्मण्यण्' 'आतोऽनुपसर्गे कः' इति केऽप्यण्स्यात्

प्र ]नैतदस्ति। नहि ये धातुपाठे पठितास्त इहाऽऽदिश्यन्ते, शब्दान्तरत्वादेशानां। चक्षादीनां तु पाठशङ्कापि नास्ति। येषां त्वर्थ इति। इष्यादीनामित्यर्थः । न चेम इति। इतिशब्दस्याऽऽदेशशब्दस्य तत्र ग्रहणाद्येषामेव स्थानिनिरूपणादेशत्वं प्रसिद्धं तेषामेव तत्र ग्रहणमित्यर्थः । इमेऽपीति। क्रियानिमित्तत्वस्यादेशशब्दस्य तत्र ग्रहणमित्यर्थः । अत्र चोदयन्ति—यदि स्थानिवद्भावेन सनादीनां धातुसंज्ञा विधीयते, तदा तदन्तविध्यभावात्प्रत्ययानामेवाङ्गसंज्ञानिबन्धनान्यडादीनि प्राप्नुवन्ति, प्रत्ययान्तानां चेष्यन्ते। यङ्प्रत्ययश्च समभिहारविशिष्टक्रियावचनाद्धातोः स्वार्थे विधीयते, आयादयश्च शुद्ध एव स्वार्थे विधीयन्त इति तेषां स्थानिनः कस्य चिदसत्त्वस्य भावात् स्थानिवत्त्वाऽभावाद्धातुसंज्ञा न प्राप्नोति। अत्रोच्यते—कर्तुमिच्छतीति कर

उ ]वदन्तानि वादयः । स्वर्थवाचकाः । क्रियावाचिन इति यावत्। यथा सुब्धादीनां क्रियावाचकत्वन्तथेत्यर्थम्। तेनेति। पाठेन आणवन्त्यादयः, अर्थेन—'या' इत्येवमादय इत्यर्थः । 'पाठेने'त्यादि' 'न चैते तत्र पठ्यन्त' इत्यन्तेनाऽत्र भाष्यकारोक्ति। धातुसंज्ञासिद्धिमिति। 'सनाद्यन्तेऽपी'ति शेषः । पृच्छतीत्यस्यैकदेशीति शेषः ।

शब्दान्तरत्वादिति। स्थानषष्ठीनिर्देशादपूर्वोपदेशाच्च। तस्यैतात् ग्रहणं तदीयप्रयोगनियम एव स्यादिति भवतीत्याद्यसिद्धिरिति भावः । पठितसादृश्येन भवतीत्यादिस्थानापन्न एषामपि तत्रैव धातुवत्स्यात्—जग्ध्यादीनामिति । भाष्यमुपलक्षणमिति भावः । अनेनास्यैकदेश्युक्तित्वं ध्वनितम्। स्वधीति। तस्या यौगिकत्वादिति भावः । न चेमे इति भाष्ये। इमे—सनादय इत्यर्थः । तत्रेति। 'स्थानिव'दित्यत्रेत्यर्थः। स्थानिनिवृत्त्येति। स्थानषष्ठीनिर्देशादिति भावः । क्रिया निमित्तत्वस्येति। आदेशग्रहणसामर्थ्यादानुमानिकस्यैव यौगिकस्यापि ग्रहणमित्याशयः । तदन्तविध्यभावादिति। स्थानिवत्सूत्रे विशेष्याऽसन्निधानात्तदभावे आदेशान्तस्यातिदेशेन धातुत्वाऽभाव इति भावः । यद्वा क्रियादिविधौ तदभावादित्यर्थः । अत्रोच्यत इति। 'धातोः कर्मण' इत्यादेः समानकर्तृकर्मभूतधात्वर्थविशि-

पश्यति यक्ष्यति । परत्वाच्छबादय प्राप्नुवन्ति ॥*॥ अपवादो नामानेकलक्षणप्रसङ्ग ॥-॥ अपवादो नाम स भवति यत्राऽनेकलक्षणप्रसङ्ग । अत्र वै भावकर्मणोर्यग्विधीयते कर्तरि शप । क प्रसङ्गो यद्भावकर्मणोर्यक् कर्तरि शबादयो बाधेरन् ?॥ एवं तर्हि–॥ ॥यच्शपावुत्सर्गावपवादा श्यनादय स्यादयश्च ॥*॥ एवमपि–॥२॥अपवादविप्रतिषेधाच्छ्यनादिबाधनम् ॥*॥ अपवादविप्रतिषेधाच्छ्यनादिभि स्यादीना बाधन प्राप्नोति।श्यनादीनामवकाश –दीव्यति सीव्यति। स्यादीनामवकाश –पक्ष्यति यक्ष्यति। इहोभय प्राप्नोति–देविष्यति सेविष्यतीति । परत्वाच्छ्यनादय प्राप्नुवन्ति॥ नैष दोष । शबादेशा श्यनादय करिष्यन्ते, शप्च स्यादिभिर्बाध्यते। तत्र दिवादिभ्य स्यादिविषये शबेव नास्ति कुत श्यनादय ॥ तत्तर्हि शपो ग्रहण कर्तव्यम् ?॥ न कर्तव्य । प्रकृतमनुवर्तते ॥ क प्रकृतम्?॥'कर्तरि श'बिति॥ तद्वै प्रथमानिर्दिष्ट षष्ठीनिर्दिष्टेन चेहार्थ ॥नैष दोष । 'दिवादिभ्य' इत्येषा पञ्चमी 'श'बिति प्रथमाया षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्ये'ति ॥ प्रत्ययविधिरय, न च प्रत्ययविधौ पञ्चम्य प्रकल्पिका भवन्ति ॥ नाय प्रत्ययविधि । विहित प्रत्यय, प्रकृतश्चानुवर्तते ॥

अथ वाऽनुवृत्ति करिष्यते।'सार्वधातुके यक्'।स्यतासी ललुटो च्लि लुङि च्ले सिजभवति । 'कर्तरि शप्' । स्यतासी ललुटो च्लि लुङि च्ले सिजभवति । 'दिवादिभ्य श्यन्'। स्यतासी ललुटो च्लि लुङि च्ले सिज्भवति ॥ तथ वाऽन्तरङ्गा स्यादय ॥ काऽन्तरङ्गता ?॥ लावस्थायामेव स्यादय सार्वधातुके श्यनादय ॥ [ स्यतासी लृलुटो ] ॥

प्र ]च्छ्यनादय स्युरित्यर्थ । अपवाद इति । यत्रोत्सर्गलक्षणस्याऽपवादलक्षणस्य च प्रसक्तस्तत्राऽपवादव्यवहार । यग्विधौ तु भावकर्मग्रहणानुवर्तनात्कर्तरि यकोऽप्रसङ्गात्नास्ति तदपवादत्वमित्यर्थ । लावस्थायामिति । ननु च परत्वाच्छबादेशोऽभाव्यम् । न च लादेशानामनित्यत्वम्, कृतेष्वपि स्यादिषु आतृतीयपरिसमाप्तेर्धात्वधिकारेऽपि धातोर्विहितस्य लस्येत्येव विहितविशेषणाश्रयणाल्लादेशाना प्रसङ्गात् । एव तर्हि कृतेष्वपि लादेशेषु स्यादयो भवन्तोऽन्तरङ्गा एव भवन्ति । नहि तद्विधौ

उ ]स्यादौ शपि कृते तमेव निमित्तीकृत्य यत्स्यादिति भाव ।भाष्ये–अथवाऽनुवृत्तिरिति । एवञ्च तत्सन्निधौ विधानसामर्थ्याच्छ्यनादय अपवादा इति भाव । लावस्थायामिति भाष्यस्य–आदेशोत्पत्तेः प्रागेव स्यादय इत्यर्थं प्रतिभाति । तत्र शङ्कते–ननु चेति । अनित्यत्वमिति । व्यवधानेन धातो परत्वाऽभावादप्रवृत्तेरिति

१ इद भाष्यमित्यन्ये । २ इद क्वचित्त । ३ इद भाष्य न वार्त्तिकमित्यन्ये । ४ 'करिष्यन्ति' पा० । ५ 'भवतीति' पा० ।

श्छन्दसि कर्तव्यः॥ 'सनाद्यन्ते नेपन्त्वाद्यर्थः' । सनाद्यन्ताधिकारे च कर्तव्यः ॥ किं प्रयोजनम् ? ॥ 'नेषन्त्वाद्यर्थं । इन्द्रो नस्तेन नेषतु । गा धो नेष्टादिति । ॥ ॥ प्रकृत्यन्तरत्वात्सिद्धम् ॥*॥ प्रकृत्यन्तरत्वात्सिद्धमेतत्॥कथम्?॥ प्रकृत्यन्तरं नेषेति । ॥ ॥ नेषतु नेष्टादिति दर्शनात् ॥*॥नेषतु नेष्टादिति हि दृश्यते॥

अथ किमर्थं पकारः । ॥*॥ [ पकारः ] स्वरार्थः ॥*॥ 'अनुदात्तौ सुप्पिता'वित्येष स्वरो यथा स्यात् ॥ ॥ पित्करणानर्थक्यं चाऽनच्कत्वात् ॥*॥ पित्करणं चाऽनर्थकम् ॥ किङ्कारणम् ?॥ 'अनच्कत्वात्'। अनच्कोऽयन्तत्र नाऽर्थः स्वरार्थेनाऽनुबन्धेन पकारेण ॥ इटि कृते साऽच्को भविष्यति ॥*॥ इटोऽनुदात्तार्थमिति चेदागमानुदात्तत्वात्सिद्धम् ॥ ॥ [ इटोऽनुदात्तार्थमिति चेदागमानुदात्तत्वात्सिद्धम् ] ॥ आगमानुदात्तत्वेनेटोऽनुदात्तत्वं भविष्यति ॥ एवं तर्हि सवयं कर्तव्य. ॥ किं प्रयोजनम् ? ॥ यद्वयासिसीष्ठा' । एकाज्लक्षण

प्र ]ब्विधेय ।तेन तदन्तस्य धातुसंज्ञाया सत्या नेष वादीनि सिद्ध्यन्ति।नीशब्दात्सिपि गुणे च कृते लोटि च नेषत्विति रूपम् । प्रकृत्यन्तरत्वादिति । जेपृ णेपृ प्रेपृ गता-विति पाठान्नशत्यर्थं उत्सर्गो न कर्तव्य । अरशासिसीष्ठा इत्याद्यर्थस्तु कर्तव्य एव । सवयमिति । सनादिमध्येऽत्रैव वेति भाव । यद्वयासिसीष्ठा इति । यानेरवपूर्वाद्

उ ]मधिकारो घुद्धिस्थता तेषु कर्तव्य इत्यर्थ । सिध्यन्तीति। लोट्यपि सिप्सिद्धिरित्यर्थं । नेषत्विति प्रयोगे सिप्शपो समावेश सिध्यति । विकरणत्वे लुक् स न स्यादिति भाव. । लेट्त्वाच्छन्दसि 'लेटोऽडाटा'वित्यस्याऽप्रसिरिति बोध्यम् । अत्रोत्सर्ग॰ कर्तव्य , स च सनाद्यन्ते कर्तव्य इति पूर्वपक्षद्वयम्। तत्राद्य खण्डित एव, उत्सर्गता त्वावश्यकोत्याह-अनयेति । लिङि सिप्सिद्ध्यर्थमुत्सर्गं कर्तव्य इत्यर्थ । भाष्ये-इति हीति । 'नेषतु'इत्यर्थं सनादिवर्गे करणे 'नेष्टा'दित्यस्याऽसिद्धि । अत्र करणे 'नेषत्वि'त्यस्याऽसिद्धि । प्रकृत्यन्तरत्वे तु 'नेष्टा'दिति नयते सिपि सिद्धम् , अत्रैव लेटीतिपदरहितसूत्रकरणादित्याशय । यद्वा 'नेष्ट'दित्यत्र विकरणव्यत्ययेन शपो लुक् ।'नेषतु नेषतादिति दृश्यते' इति भाष्ये पाठ। 'लोकेऽपी'ति शेष । 'नेष्टादिति (हि)दृश्यते',इति लेखकप्रमाद ।अन्यथा प्रकृत्यन्तराऽऽपत्स्यरत्वं न दर्शितं स्यात् । भाष्ये-आगमाऽनुदात्तत्वादिति । 'तास्य'दित्यादौ धातुस्वरप्रयुक्तशेषनिघातेनेति भाव । सनादिमध्ये इति। 'लेटी'ति पदरहितमिति

१ अयमंशो वार्तिकतया पठ्यते क्वचित् ।२ 'कर्तव्यं' 'सनाद्यन्ते च कर्तव्य ' 'वक्तव्य ' । ३ 'नेष्टम्' पा० । ४ इदं क्वचिन्न । ५ 'नेष ' पा० । ६ इदं भाष्यमित्यन्ये । ७ 'स्यादिति' पा० । ८ 'लुक् ' पा० । ९ 'पकारेणानुबन्धेन' पा० । १० 'इडनुदात्तार्थं' पा० । ११ अयं पाठो लुप्त । १२ 'इडनुदा' ।

उदात्तनिवृत्तिस्वर प्रसज्येत ॥*॥ सिब्बहुलं छन्दसि णित् ॥*॥ सिब्बहुल छन्दसि णिद्वक्तव्य । सविता धर्मं साविषत् । प्र ण आयूंषि तारिषत् ।

## कास्प्रत्ययादाममन्त्रे लिटि ॥ ३।१।३५ ॥

॥-॥ कास्ग्रहणे चकास उपसङ्ख्यानम् ॥-॥ कास्ग्रहणे चकास उपसङ्ख्यान कर्तव्यम् । चकासाचकार ॥ न कर्तव्यम् । 'चकास्प्रत्यया'दिति वक्ष्यमि ॥*॥ चकास्ग्रहणे कास उपसङ्ख्यानम् ॥ ॥ चकास्ग्रहणे कास उपसङ्ख्यान कर्तव्यम् । कासाचक्रे । सूत्र च भिद्यते ॥ यथान्यासमेवास्तु ॥ ननु चोक्त 'कास्ग्रहणे चकास उपसङ्ख्यान मिति ॥ नैष दोष ॥ चकास्शब्दे कास्शब्दो ऽस्ति, तत्र 'कास्प्रत्यया' दित्येव सिद्धम् ॥ न सिध्यति ॥ किं कारणम् ? ॥

प्र ]उदात्तस्येति। छन्दस्युभयथे ति सार्वधातुकत्वाल्लुपदेशादिति ल्सार्वधातुकाऽनुदात्तत्वे सति प्रत्ययस्वरेण धातुस्वरेण वा सशब्दाऽकारस्योदात्तत्वादुदात्तनिवृत्तिस्वर इट' प्रसज्यत । षकारे तु सति अनुदात्त एवेड्भवति । पित्स्वरणसामर्थ्यादेव च सशब्दाऽकारस्य धातुस्वरो न भवति, एतत्प्रदेशपाठाद्वा । याशब्दस्यैव तु भवति । 'तिङ्ङतिङ' इति यो निघात स 'निपातैर्यद्यदी'ति प्रतिषिद्ध । अवशब्दस्य 'तिङि चोदात्तवती'ति निघात । साविषदिति । 'षू प्रेरणे' इत्यस्य लेटि रूपम् । 'तारिषदिति तरते । [ सिब्बहुल लेटि ] ॥

उ ]सतीति।अत्र पाठे–प्रत्ययस्वरेणेति। सनादिपाठे–धातुस्वरेणेति। 'प्रत्ययस्वरेणे'-त्येव युक्त, सनादिपाठस्य स्थानत्यागे फलाऽभावेन भाष्ये दूषितत्वात् । 'पित्स्वरणसामर्थ्या'दित्यपि चिन्त्यम् , एतत्प्रदेशेत्याद्येव युक्तम्। याशब्दस्यैवेति । एवञ्च 'यासिसीष्ट' इत्याद्युदात्तमिति भाव । ननु 'तिङ्ङतिङ' इति निघात स्यादत आह–तिङ्ङतिङ इति । अत्रेद तत्त्वम् ,–अत्रैव पाठे 'लेटी'ति पदरहित कार्यं, अकारस्तु ल्सार्वधातुकानुदात्तत्वायोपरीत्येड्गतिषेधाऽभावाय च । उदात्तनिवृत्तिस्वरवारणाय च षकार । अन्तरङ्गत्वाच्च पूर्वं सपि ततो विकरणव्यवधानेऽप्यादेशा । अत आर्द्धधातुकोपदेशोऽकारान्तलाङ्गोपसिद्धिरिति । [ सिब्बहुल लेटि ] ॥

कास्प्रत्यया । नन्वत्र 'प्रत्यय'ग्रहणं व्यर्थम् 'आममन्त्रे लिटी'ति योग विभागेन सामान्यत आम विधाय कास्ग्रहण नियमार्थं व्याख्येयम्—'औपदेशिकधातोर्धेत्वास एवे'ति प्रत्ययान्ते सिद्धेरिति चेन्न, अनेकाच्प्रत्ययान्त ग्रहणार्थत्वात्। तेन चकाद्भ्य आचारक्विबन्तेभ्य आम् । ध्वनित चेद हरदत्तग्रन्थे । न च एकाच्प्रत्ययान्तपरमेवाऽस्तु, त्रिग्रहणेनैव सिद्धे प्रत्ययग्रहणवैयर्थ्यापत्ते , गोपायाञ्चकारेत्यादिभाष्यप्रयोगविरोधापत्तेश्च । कास्यनेकाच इति । कासिपदमनेकाज्धातुमात्रस्य यथा भवति तथा व्याख्येयमित्यर्थ । तथा हि

अर्थवत कास्शब्दस्य ग्रहण, न च चकास्शब्दे कास्शब्दोऽर्थवान् ॥ एव तर्हि [ ॥*॥ 'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' ॥*॥ ] 'कास्यनेकाच' इति वक्तव्यम्॥ किं प्रयोजनम् ? ॥ 'चुलुम्पाद्यर्थम्' । चुलुम्पाचकार दरिद्राचकार ॥

## इजादेश्च गुरुमतोऽनृच्छः ॥ ३।१।३६ ॥

॥*॥ गुरुमत आम्विधाने णिन्निमित्ताप्रतिषेधः ॥*॥ गुरुमत आम्विधाने णिन्निमित्ताद्गुरुमतः प्रतिषेधो वक्तव्य । इयेष उवोष । गुणे कृते 'इजादेश्च गुरुमतोऽनृच्छ' इत्याम् प्रसज्येत॥ गुरुमद्वचनमिदानीं किमर्थं स्यात् ?॥ ॥*॥ गुरुमद्वचनं किमर्थमिति चेण्णनुप्रमे यथादिप्रतिषेधार्थम् ॥*॥ गुरुमद्-

प्र ]इजादे । उवोषेति । नन्वनोवर्णदेशे विकल्पेनाऽऽमा भाव्यम् । अतआह । द्विवचनबहुवचनयोर्गुणाभावाद्गुरुमत्त्वाऽभावाद्विकल्प एवाऽऽम् इति यत्र गुरुमत्त्व तत्र नित्यमेवाम् प्राप्नोति । एतच्च 'विप्रतिषेधे पर'मिति, प्रतिपदविधेश्च बलवत्त्वमनाश्रित्य भाष्यकारेणोदाहृतम् । तत्र त्वाश्रिते विकल्प एव भविष्यतीति नैतद्दिष्टोपन्यसनीयम् । गुरुमद्वचनमिति । ईषतुरीषुरित्यत्रापि सवर्णदीर्घे गुरुमत्त्वादिजादेः सर्वत्र गुरुमत्त्वादामा भवितव्यमिति गुरुमद्वचनसामर्थ्यादुपदेशावस्थाया गुरुमत

उ ]'एकाचो धातोश्चेत्राम एवे'ति नियमपरतया सङ्ग्राहयेयमिति । एतच्च 'चकास उपसङ्ख्यान'मिति वार्तिक, सूत्रस्थप्रत्ययग्रहणच न कार्यमिति भाष्यतात्पर्यम् । यथाश्रुतवार्तिकेऽपि प्रत्ययप्रत्याख्यानेऽनेकाज्ग्रहण कर्तव्यमित्येव तात्पर्यमिति हरदत्तानुसारिण । अन्ये तु 'कासी'ति सप्तमी, कास्घटिते सूत्रे इत्यर्थ । अन्यथा समाहारद्वन्द्वे क्लीबापत्ति । इतरेतरयोगे तु द्विवचनापत्ति । प्रत्ययग्रहणाऽपनये च न मानम् । सूत्रे प्रत्ययग्रहणन्तु योगविभागनियमकल्पनाल्पगौरवपरिहारेण स्पष्टार्थमेव । एवञ्च 'क'शब्दादिभ्य आचारक्विपि 'काञ्चकार' इत्यादिरूपाण्येव, सत्यभिधाने इत्याहु । [ कास्प्रत्ययादाममन्त्रे] ॥

इजादेश्च। भाष्ये णिन्निमित्ताद्गुरुमत इति। गुरुमति णिन्निमित्तत्व गुणद्वारा बोध्यम् ।द्विवचनबहुवचनयोरिति। तयो किदादित्वादिति भाव । तत्र द्विवचनाद्यपेक्षया नित्यत्वादृकित्यपि आम् । णलि तु परत्वाद्गुणेन नित्य आम्प्राप्नोतीति दोष । एतेन 'अत्रापि सवर्णदीर्घे गुरुमत्त्वमस्तीति कथमनयो' इत्यपास्तम् । विप्रतिषेधे इति। यथासम्भवं विप्रतिषेध ,अस्ति चाऽत्रोभयो समकालप्रवृत्तिरित्युच्यते तदापि विकल्पविधिना 'उवोष'त्यस्य सिद्धिरिति भाव । प्रतिपदेति । अनवकाशत्वाऽभावेऽपि पूर्वप्रवृत्तावेव नियामकमिति भाव ।'उवोषे'ति कथंचिद्दीर्घान्तपाठ इत्यन्ये।ननु द्विवचनादौ किति गुणाऽभावे आमभावाय गुरुमद्वचन चरितार्थमत आह—ईषतुरिति।उपदेशेति । एतच्च

१ इद लुप्त । २ 'कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' इत्यन्ये पठन्ति । ३ 'प्राप्नोति'।

अथाऽभ्यासग्रहणेन ग्रहणम्–उरत्व, रपरत्व,हलादि शेषोऽत आदेरिति दीर्घ त्वमेतो लोप इटि चेत्याकारलोप–अतु उरिति वचनमेव श्रूयते । गुणे पुन सति गुणे कृते रपरत्वे च द्विर्वचन हलादि शेषोऽत आदेरिति दीर्घत्व तत सिद्ध भवति आरेतुरारिरिति । यथा आटतु आटुरिति ॥ किं पुन कारण सवर्णदीर्घत्व तावद्भवति न पुनररत्त्वम् ? । परत्वादुरत्वेन भवितव्यम् ॥ अन्तरङ्गत्वात् [ सवर्णदीर्घत्व प्राप्नोति ] । अन्तरङ्ग सवर्णदीर्घत्व, बहिरङ्ग उरत्वम् ॥ काऽन्तरङ्गता ? ॥ वर्णाश्रयत्वं सवर्णदीर्घत्वम्, अङ्गस्योरत्वम् ॥ उरत्व मप्यन्तरङ्गम् ॥ कथम् ? ॥ वक्ष्यत्येतत्प्रागभ्यासविकारेभ्योऽङ्गाधिकार इति । उभयोरन्तरङ्गयो परत्वादुरत्वम् । उरत्वे च कृते रपरत्व हलादि शेषोऽत आदेरिति दीर्घत्व परस्य रूपस्य यणादेश , सिद्ध भवति–आरतु आररिति ॥ अथापि कथ चिदनेनेति गुणेनाऽर्थ. स्यादेवमपि न दोष । ऋच्छत्यृतामि त्यृकारोऽप्यत्र निर्दिश्यते ॥ कथम् ? ॥ प्रश्लिष्टनिर्देशोऽयम् । ऋच्छति–ऋ–ऋ ताम्–ऋच्छत्यृतामिति ॥ इहापि तर्हि प्राप्नोति चस्कतुश्चस्कुरिति ॥ सयोगादि

प्र ]रुरत्वादिति । 'वर्णादाङ्ग बलीय' इत्येतत्तु समानाश्रयाङ्गवर्णविषयम्, यथा स्यदक श्यनमिति गुणवृद्धी भवतो यणादेशात् । इह तूरत्व लिङ्गाश्रय, वर्णद्वयाश्रय तु सवर्णदीर्घत्वमिति भिन्नाश्रयत्वमनयो । अथापीति । आसप्तमपरिसमाप्तेरङ्गाधिकारो यत्र चेत्यादिसिद्धय आश्रित इति भाव । ऋकारोऽपीति । बहुवचननिर्देशादिति भाव । इहापीति । 'ऋ' इति वर्णग्रहणात्तदन्तविधिसद्भावादिति भाव ।

सयोगादेरिति । अकेवलस्य । वर्णान्तरसहितस्येत्यर्थ । ततश्च धातोरेव ग्रहणमवगम्यते

उ ]परत्वात्कृतेऽपि गुणे द्विर्वचनेऽचीति रूपातिदेशात् ऋशब्दस्यैव द्वित्वमिति को विशेष इति चेत्, यत्राऽऽदेशो कृते एकाच्त्वादिव्याघातप्रयुक्त द्वित्वाऽप्राप्तिस्तत्रै वातिदेशप्रवृत्तिरित्याशयात् । इह तूरत्वमिति । आसप्तमनन्ताङ्गाधिकारादिति भाव । इदमग्रेऽपि कैयट आहेत्यनुपदमेव स्फुट भविष्यति । यत्र चेति । अत्राऽ न्यासे रेफस्य सम्प्रसारणे उरदत्वे तस्याऽऽङ्गाश्रितपरनिमित्तत्वेन 'न सम्प्रसारण' इति तत्र तन्निषेधे स्थानिवत्त्व सिध्यतीत्यर्थ । ऋकारनिर्देशे लिङ्गमाह– बहुवचनेति । धातोरेवेति । तन्मात्रस्य, न तु तदन्तविधिरित्यर्थ । अन्ये–तद न्तरेणाररिति । वार्णपरिभाषयैवेति भाव । सा समानाश्रयविषयत्वे तु न, नाना श्रयादिति भाव । ननु पूर्वमुर(द)त्वेऽपि हलादि शेषेऽत आदेरिति दीर्घ परस्य उ यणादेश बाधित्वाऽजो गुण इति प्राप्नोतीत्यभिप्रेत्य अह–अन्तरेण ऋच्छिग्रहण

१ 'उरदत्व' 'उरदत्वे' पा० । २ 'दीर्घत्वं तत्र नाना' पा० । ३ 'लोप' पा० । ४ 'श्रूयते' पा० । ५ इद क्वचिन्न । ६ इद वार्तिकमित्यन्ये ।

उ-'अनृच्छो दयायासश्चे'ति । [ इजादेश गुरुमतोऽनृच्छ ] ॥

## उपविदजागृभ्योऽन्यतरस्याम् ॥ ३।१।३८ ॥

॥*॥ विदेराम्वित् ॥*॥ विदेराम्विद्वक्तव्य । विदांचकार॥ न वक्तव्यः । विदिरकारान्त ॥ यदकारान्तो 'वेत्ती'ति गुणो न सिध्यति । "लिङ्गवियोगेन" ॥ एवमपि 'विवेदे'ति न सिध्यति ॥ एवं तर्हि "आम्संनियोगेन" ॥ भारद्वाजीया पठन्ति- ॥*॥ विदेराम्विनिपातनाद्वा गुणत्वम् ॥*॥ इति ।

## भीह्रीभृहुवां श्लुवच्च ॥ ३।१।३९ ॥

श्लुवदतिदेशे किं प्रयोजनम् ?॥ ॥*॥श्लुवदतिदेशे प्रयोजन द्वित्वेत्वे॥*॥ [ श्लुवदतिदेशे द्वित्वेत्वे प्रयोजनम् ] । बिभरांचकार ॥ [ भीह्रीभृहुवाम् ] ॥

## कृञ्चानुप्रयुज्यते लिटि ॥ ३।१।४० ॥

किमर्थमिदमुच्यते ?॥ अनुप्रयोगो यथा स्यात् ॥ नैतदस्ति प्रयोजनम् ।

---

प्र ]नहितया न सूत्रपाठ इति दर्शयति-अनृच्छो दयायासश्चेति । [ इजादेश ] ।

उपविद । विदिरकारान्त इति । सूत्रे अकारान्तत्वं विदेर्निपात्यत इति भाव । इतरो धातुपाठ एवाऽकारान्तत्वमनेन विदेरुक्तमिति मत्वाह-यदीति । गुणो न सिध्यतीति । इकारस्योपधत्वाऽभावादकारलोपाऽभावाच्च विदतीति स्यादित्यर्थ । आम्संनियोगेनेति । आम प्राधान्येन विधीयमानत्वात्तदनुयायित्वमत्रस्येत्यर्थ ।

भीह्री । द्विर्वचनमेव विधेयं किमतिदेशेनेति पृच्छति-श्लुवदतिदेश इति । 'न श्लुमताङ्गस्ये'ति गुणप्रतिषेधो न भवति । 'प्रत्ययलोप' इत्यस्या प्राप्तस्य निषेधो न चाऽप्राप्तो प्राप्तिरस्ति । [ भीह्रीभृहुवां श्लुवच्च ] ॥

कृञ्चानु । किमर्थमिति । अन्तरेणाऽपि सूत्रारम्भमनुप्रयोग सिद्ध काल-

---

उ.]नदह ऊर्णोतेरिति ॥ [ इजादेश गुरुमतोऽनृच्छ ] ।

उपविद । उपिजागृभ्यामहपर्यायोपरस्यैवदिन क्षादादिस्स्यैव विदेर्ग्रहणम् । अकारलोपाऽभावाच्चेति । गुणाऽसिद्धिर्दोषोपलक्षणमिति भाव । ननु लिटोऽप्युपस्थित्या तत्संनियोगेनाऽपि विधानं स्यादत आह-आमिति। निपातनाद्वेति भाष्ये। सूत्रेऽदन्तत्वनिपातनादित्यर्थ ॥ [ उपविदजागृभ्योऽन्यतरस्याम् ] ।

भीह्रीभृहुवां । न श्लुमतेति श्लुमच्छब्दवति कार्ये सत्यङ्गस्य कार्यं नेत्यर्थ इति मन्यते । प्रत्ययेति । श्लुमता शब्देन श्लौ प्रत्ययलक्षणेनाऽङ्गकार्यं नेति तदर्थ इति भाव ॥ [ भीह्रीभृहुवां श्लुवच्च ] ॥

कृञ्चाऽनु । अनुप्रयोगाभावाऽन्यथात्वनुप्रयोगस्य वारणायच सूत्रमावश्यकमित्यत आह—अन्तरेणाऽपीति।'लिड्परस्य कृञ' इत्यस्या'ऽनुप्रयोग सिद्ध' इत्यनेनाऽन्वय ।

१ अत्र ॥*॥ 'विदेराम्विद्द्विसंनियोगेन' ॥*॥इति तु वार्तिकमिति गौडा ।

आमन्तमन्यत्तपदार्थक, तेनाऽपरिसमाप्तोऽर्थ इति कृ वाऽनुप्रयोगो भविष्यति॥ अत उत्तरं पठति ॥*॥ कृञोऽनुप्रयोगवचनमस्तिभूप्रतिषेधार्थम् ॥*॥ कृञो ऽनुप्रयोगवचन क्रियते । [ किं प्रयोजनम् ? ॥ ] 'अस्तिभूप्रतिषेधार्थम्' । अस्तिभुवोरनुप्रयोगो मा भूदिति ॥*॥ आत्मनेपदविषयर्थं च ॥*॥ आत्मनेपद विषयर्थं च कृञोऽनुप्रयोगवचन क्रियते । आत्मनेपद यथा स्यात् ॥ उच्यमा नेऽप्येतस्मिन्नत्रस्यमात्मनेपदार्थो यत्न कर्तव्य । अस्तिभूप्रतिषेधार्थेन चाऽपि मार्थं ॥ ॥ इष्ट सर्वानुप्रयोग ॥*॥ सर्वेषामेव कृभ्वस्तीनामनुप्रयोग इष्यते । किमिष्यत एवाऽहो स्वित्प्राप्नोत्यपि ? ॥ इष्यते च प्राप्नोति च ॥ कथम् ? ॥ 'कृ'ञिति नेद धातुग्रहण ॥ किं तर्हि ? ॥ प्रत्याहारग्रहणम् ॥ क सन्निविष्टा

प्र ]आत्मनमङ्गलार्थ यत्नादिप्रतिपादनाय च्छिद्रस्य कृत । आमन्तादिर्हि नामविशेष एवा यमीयते न त्वर्थान्तर तत्र समानार्थस्य धातोरनुप्रयोगो न भविष्यति औपगवोदेति । उत्तरेणैव सर्वार्थाभिव्यक्तनादामन्तस्यानर्थकत्वप्रसङ्गात् । नापि भिन्नार्थस्य-ईक्षणमा चति। आमन्तसम्बद्धमाख्यातायमस्य नयात्। कृ तु सामान्यवचन । सामान्यविशेष वाचकत्वा प्रयोगाऽर्थविशेषप्रतिपादनेऽनुगुण इति भाव । अनुप्रयोग इति । यद्य प्यामन्तात्तत्कालार्थाभिव्यक्तिर्न भवति तथापि प्रकरणादिवशाद्भविष्यति तस्मादनुप्र योगमिद्ध्यर्थमिद वक्तव्यमिति भाव । आमन्तमिति । पूर्वं तत्तनामर्थेना प्रकरणा दिवशाद्गम्या प्रतिपत्तिरिति तदर्थाभिधानायानुप्रयोग सिध्यत्येवेति भाव । करो- तेरेवाऽनुप्रयोगो यथा स्यान्न त्वस्त्योर्मा भूदिति नियमार्थमेतदिति दर्शयितुमाह-कृञ इति । आत्मनेपदेति । सिद्धे कृञोऽनुप्रयोग पुनर्वचनमतिशयनाऽनुगुणत्वानुप्रयो गार्थं, तेनात्मनेपदप्रकरणामन्तमात्मनेपदान्त एव करोतिरनुप्रयुज्यत इत्यात्मनेपद विधिरिति सूत्र न कर्तव्य भवतीत्यर्थ । अवश्यमिति । परस्मैपदेनाऽपि कर्तर्यस्या वगमात्तदन्तस्याऽनुप्रयोग स्यादिति भाव । प्रत्याहारग्रहणमिति । एतच्चान्यन्त मतेऽत्यन्त कृ प्रदर्शनादुक्तमितरत्पर्यालोच्यते । सम्पदर्थार्थविरोधाच्च भविष्यत्यनुप्र

उ ] आमन्तादिर्हि क्रियाविशेष एवेति पाठ । कार्यविशेष' इति पाठे कालेन विशेष्यते स स विशेष इत्यर्थ । सामान्य इति । सामान्यस्याऽपि विशेषे पर्यवसानात्त दुपस्थितेरादिनाऽपि विशेषगम्यविशेषानुगतत्वगतेरित्यर्थ । अस्त्योरिति । तयोरपि सामान्यवाचकत्वादेति भाव । भाष्य दूषयति-उच्यमानेऽपीति । परस्मैपदेनाऽ पीति । सूत्रस्यात्मन लघुकरणेऽप्याऽग्रभदिति भाव । सम्पदर्थेति । चन 'म'- रहितपदस्यानर्थपीत्यर्थ । एतत् सम्पदो धातुत्वाऽभावात्प्रत्यायकत्वादेन प्रत्याहारे सन्निवेश इत्याशङ्कम् । सन्ध्यर्तिन सत्त्वनीत एव अप्रत्ययस्थे सत्ताऽभवाच्च ।

१ 'अम्भिभुवा' ।२ अत्र पाठो त्रुटः ।३ इद ग्रन्थिन । ४ 'विनियन्देव'।५ नैतत्'।

नः प्रत्याहारः ?॥ 'कृभ्वस्तियोग' इत्यतः प्रभृत्या कृञो ञकारात् ॥*॥ सर्वानुप्रयोग इति नेदशिष्यमर्थाऽभावात् ॥*॥ सर्वानुप्रयोग इति चेदशिष्य, कृञोऽनुप्रयोगवचनम् ॥ किं कारणम् ?॥ 'अर्थाभावात्' । आमन्तमव्यक्तपदार्थकं तेनाऽपरिसमाप्तोऽर्थ इति कृत्वाऽनुप्रयोगो भविष्यति ॥ इदं तर्हि प्रयोजनं 'कृभ्वस्तीनामेवाऽनुप्रयोगो यथा स्यात् पचादीनां मा भूदि'ति॥ एतदपि नास्ति प्रयोजनम् ॥*॥ अर्थाऽभावाच्चान्यस्य [ सिद्धम् ] ॥*॥ अर्थाऽभावाच्चाऽन्यस्य सिद्धमेतत् ॥ कुतः ?॥ कृभ्वस्तयः क्रियासामान्यवाचिनः, क्रियाविशेषवाचिनः पचादयः, न च सामान्यवाचिनोरेव विशेषवाचिनोरेव वा प्रयोगो भवति । तत्र विशेषवाचिन उत्पत्तिः सामान्यवाचिनोऽनुप्रयोक्ष्यन्ते ॥*॥ लिङ्गरार्थं वा ॥*॥ लिङ्गरार्थं तर्हि कृञोऽनुप्रयोगवचनं क्रियते । लिङ्गरस्यैवाऽनुप्रयोगो यथा स्यादन्यपरस्य मा भूदिति ॥ किंपरस्य पुनः प्राप्नोति ?॥ लङ्परस्य॥ न लङ्परस्यानुप्रयोगेण भूतकालो विशेषितः स्यात्॥निष्ठापरस्य तर्हि

प्र ]योगः । अशिष्यमिति । विधातिनिवृत्त्यर्थमपि नोपयुज्यते । प्रयुक्तानामन्वाख्यानात्तस्य चानुप्रयोगादर्शनात् । न चेति । द्वयोरेकार्थयोः प्रयोगाऽभावादिति भावः । न्यायप्रदर्शनार्थं च 'सामान्यवाचिनो'रित्युक्तम्, न तु सामान्यवाचिभ्यः कृभ्वस्तिभ्य आम्विधानमस्ति । सामान्यवाचिनश्चार्थं द्योतयितुं विशेषवचनो न शक्तः । प्रत्युत विशेषान्तरव्यावृत्त्या तदर्थविरोधी । लङ्परस्येति । भूतविशेषस्यामन्तेन प्रतिपादनाद्भूतस्याऽपि भूतपूर्वां वर्तमानतामाश्रित्य लङ्प्रयोगः स्यादिति भावः ।

न लङ्परस्येति।आमन्तार्थाभिव्यक्त्यर्थत्वादनुप्रयोगस्य विरुद्धकालाभिधायिलङनुप्रयोगो न भविष्यति। न च साम्प्रतिकवर्तमानतासम्भवे भूतपूर्वाश्रयो लङ्प्रयोग उपप-

उ ]द्यत इति। 'विद सत्ताया'मिति स्मरणादिति भावः। भाष्ये—अर्थाऽभावाच्चेति। 'एधा'मित्यादिना पच्यादेरन्वयाऽयोग्यत्वात् एधामित्यागमे सत्याऽनुप्रयोगोऽसम्भवी, तेनाप्यनः प्राप्ते । कृभ्वादिभ्यस्तु आम्प्राप्त्यभावादेव न तद्विषये तदनुप्रयोगः । तदाह भाष्ये—न [redacted] सामान्येत्यादिना। द्वयोरेकार्थयोरिति । आम्विषययोरित्यर्थः । द्वितीयप्रयोगेऽप्याम प्रसक्तेरिति भावः । न च 'पाचया'मित्युत्तरं पचेरन्तर्भावितण्यर्थस्य समानार्थतया प्रयोगः स्यादिति वाच्यम् उत्तरेणैव सिद्धे पूर्वस्य वैयर्थ्यापत्तेरिति भावः । ननु निवृत्तप्रेषणस्यो णिचि पाचयामित्यतः पचेरनुप्रयोगः स्यादिति सामान्यविशेषवाचिनोरित्यपि वक्तुं युक्तमत आह—सामान्यवाचिनश्चेति। वर्तमाननिर्दिष्टस्य लङ् कथं भूते प्रसक्तिरत आह—भूतपूर्वामिति । न च साम्प्रतिकेति।

१ इति क्वचित्। २ इद क्वचित्। ३ 'असिद्धम्'। सिद्धम्'।
४ 'वचना पचादय'।

मा भूत् [इति]॥ न लिट्परस्यानुप्रयोगेण युष्मदस्मदी विशेषितौ स्याताम्॥ लुङ्परस्य तर्हि मा भूत्॥ न लुङ्परस्यानुप्रयोगेणानद्यतनो भूतकालो विशेषित स्यात् ॥ लङ्परस्य तर्हि मा भूत् ॥ न लङ्परस्यानुप्रयोगेणानद्यतन परोक्षे काले विशेषित स्यात् ॥ अथ तर्हि भूते परोक्षेऽनद्यतने लट् विधीयते 'ह्शश्वतोर्लङ् चे'ति, तत्परस्य मा भूदिति ॥ एतदपि नास्ति प्रयोजनम् । "एकस्या आकृतेश्चरित प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भवति"। तद्यथा'गोषु स्वामी-अश्वेषु चे'ति न हि भवति'गोषु-चाश्वाना च स्वामी'ति। ॥*॥ अर्थवत्त्वेनानुप्रयोगो न स्यात् ॥*॥ अर्थवत्त्वेनानुप्रयोगो न स्यात् । आमन्तेनं परेण समासोऽयं इति कृत्वाऽनुप्रयोगो न स्यात् ॥ एतदपि नास्ति प्रयोजनम् । इदानीमेव युक्तमामन्तमस्वकपदार्थकं तेनाऽसमासोऽयं इति कृत्वाऽनुप्रयोगो भविष्यतीति ॥*॥ विपर्यासनिवृत्त्यर्थं वा ॥*॥ विपर्या-

प्र ]योग इत्यर्थ ।एकस्या इति । येऽल्लोकप्रसिद्धोऽय न्याय । तथा हि 'खादिरे बध्नाति' पालाशे बध्नाती'त्यादौ विकल्पितेषु साधनेषु येनैव साधनेनोपक्रान्ता क्रिया तेनैव निर्वाह्यते । तत्र यदि कदा चित्खदिरस्य श्रेयो भवति तदा तत्स्थाने यद्गुर समाप्त्यानन्तरेषु प्रतिनिधीयते,न तु पलाश परिगृह्यते । साधनभेदेन क्रियान्यत्वादुपक्रान्तक्रियाऽनिर्वाहप्रसङ्गात् । लोकेऽपि यदा स्वस्वामिभावप्रतिपादनाय 'गवा स्वामी'ति पश्युपक्रम्यते तदा 'अश्वाना चे'त्यत्रापि तत्प्रतिपादनाय सैव निर्वाह्यते । अन्यथा'ऽश्वेषु चे'त्युक्तेऽधिकरणप्रतिपत्तिरपि स्यादश्वेषु च तिष्ठतीति । तस्माद्योऽर्थो यया शब्दाकृत्या प्रतिपादयितुमुपक्रान्तस्तयैवाऽसौ निर्वाह्यो न त्वन्यया शब्दाकृत्येत्यर्थ । एव हि प्रतिपत्तिरुपायत्व भवति । अर्थसमासेनेति । आमन्त पद यावन्तमर्थमभिधातु शक्नोति तावानर्थस्तेनैव परिसमाप्त इत्यनुप्रयोगो न स्यादिति भाव ।एतद्वाक्यकारो दूषयितुमाह-एतदपीति । 'अनित्यसमासोऽयं'मित्युक्तत्वात् । विपर्यासनिवृत्त्यर्थं वेति । सिद्धे कृत्प्रयोगे देशनियमार्थं वचनम् । ननु खदिरस्य

उ ]र्तमानकालीनत्वे तदापि न विवक्षितमुख्यभूतत्वप्रतीति स्यादिति भाव ।खादिरे-खदिरविकारे यूपे । भाष्यस्थादिति । एवञ्च बहुखदिराऽनन्तरमालम्भयोगे-युद्ध्यमानेति तत्र खादिरमुख्यत्वेन खदिरारब्धैव क्रिया निर्वाहिता भवति । पालाशे तूपक्रान्ते तत्र खादिरमुख्यपदाद्गादिरेणोपक्रान्ता क्रिया ■ निर्वाहिता स्यादिति न तदुपादानमिति भाव । अश्वेषु चेति । एतच्च तथा प्रयोगेऽसाधुरिति वदन्ति । वस्तुतो 'वा'शब्दो निरुक्तार्थकोऽपि पूर्वोक्त प्रयोजनाना खण्डितत्वा-

१ 'लुङ्परस्य' पा० । २ 'अनद्यतन भूत' पा० । ३ 'परोक्षकाले' पा० । ४ 'परोक्षानद्यतने' पा०। ५ 'श्च भवितव्यो'। ६ इदं क्वचिन्न। ७ 'आमन्तेन च परि' पा०।

सनिवृत्त्यर्थं तर्हि कृञोऽनुप्रयोगवचनं क्रियते । ईहांचक्रे । चक्रे ईहामिति मा भूत् ॥४॥ व्यवहितनिवृत्त्यर्थं च ॥८॥ व्यवहितनिवृत्त्यर्थं च कृञोऽनुप्रयोग-वचनं क्रियते । अन्त्वेव चाऽनुप्रयोगो यथा स्यात् । ईहाञ्चक्रे । व्यवहितस्य मा भूत्[१] । ईहां देवदत्तश्चक्रे इति॥ " इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-महाभाष्ये तृतीयाध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥८॥

च्लि लुङि ॥ ३।१।४३ ॥

पाठप च्लि. श्रूयते ? ॥ न क्वचिच्छ्रूयते । एतस्य सिजादय आदेशा उच्यन्ते ॥ यदि न क्वचिच्छ्रूयते किमर्थस्तर्हि च्लेरुत्सर्गः क्रियते न सिजुत्सर्ग एव कर्तव्य ।तस्य क्सादयोऽपवादा भविष्यन्ति॥अत उत्तरं पठति॥४॥ च्च्युत्सर्गे सामान्यग्रहणार्थः ॥१॥ च्लिरुत्सर्गः क्रियते ॥ [किं प्रयोजनं ?]॥ 'सामान्यग्रहणार्थः ' ॥ क सामान्यग्रहणार्थेनार्थः ? ॥ 'मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेरि'ति। तत्राऽपरतस्त्रयाणां ग्रहणं कर्तव्यं स्यात् । चङङो.

प्र ]पश्चाद्वर्धन्वात्, तेनाऽऽमन्तस्य पश्चादेव कृञनुप्रयुज्यते न पूर्व नापि व्यवहितमित्यर्थसम्पत्तिः ॥ इति भाष्यप्रदीपे तृतीयस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥

च्लि लुङि । आदेशैः सर्वत्र बाधितत्वाऽस्य प्रयोग प्रयोजनं,नापि क्विबादीनामिव कार्यार्थता दृश्यते । ततोऽस्यानर्थकं विधानमिति पृच्छति–क्वायमिति । च्लिरुत्सर्ग इति । स्थानीत्यर्थः । स ह्यादेशेनाऽपोद्यते । सिजुत्सर्ग इत्यत्र तु सामान्यविधिरुत्सर्गशब्देनोच्यते । च्च्युत्सर्ग इति । च्लेरुत्सर्गो धातुमात्राद्विधानमित्यर्थः । तत्रापरत इति । त्रयाणां तावदस्त्रयं कर्तव्यं, जनेस्तु दीपजनेति तशब्दे

उ ]त्तर्थ भाष्यकृता व्याख्यायते–विपर्यासनिवृत्त्यर्थं तर्हीति । भाष्ये–अन्त्वेवेति । पश्चादव्यवधानेनेत्यर्थः ॥ [ कृञानुप्रयुज्यते लिटि ] ॥

इति श्रीनागेशभट्टकृते भाष्यप्रदीपोद्योते तृतीयस्य प्रथमे तृतीयमाह्निकम् ।४

च्लि लुङि । नन्वश्रवणेऽपि क्विबादिवत् कार्यार्थ स्यादत आह–नापीति । उत्सर्गपदस्याऽपवादप्रतियोगिन्येव प्रसिद्धेराह–स्थानीत्यर्थ इति । ननु च्च्युत्सर्ग इत्यनुपपन्नं, च्लेरन्यस्योत्सर्गस्याऽभावात् । कर्मधारये तूत्सर्गशब्दस्य पूर्वनिपातापत्तिरत आह–च्लेरिति । च्लिरुत्सर्ग इति भाष्यन्तु फलिताऽर्थपरम् । क्वचित्तु-भाष्येऽपि 'च्लेरि'त्येव पाठः । मन्त्रे' इति सूत्रे त्रयाणामपि चङ्घ्नि च्लिग्रहणेन लभ्यथा स्यादिति प्रयोजनं च्लिग्रहणस्य । अन्यथा सिच इत्यनुवर्तेतेति चङडोदोषः । क्लिप तु तेषां स्थानिवद्भावेन । अन्तरङ्गानपीति न्यायस्त्वत्र नास्ति, अनित्य-

१ 'च कृञोऽनु' पा० । २ 'भूदिति' पा० । ३ 'न श्रूयते' पा० । ४ 'किमर्थं च्लि' पा० ५ 'च्युत्सर्ग ' पा० । ६ अयं पाठः क्वचित् ।

मिचेश्चेति॥*॥ क्स्मविधाने चानिड्वचने च्लिप्रत्ययार्थं ॥१॥*॥ क्सविधाने चाऽनिड्वचने च्लिसंप्रत्ययार्थं च्लेरस्मर्ण क्रियते। च्लेरनिट् इति क्स सिद्धो भवति॥२॥ घस्लभावे च ॥*॥ घस्लभावे च च्लावेव कृते लृदित इत्यङ्सिद्धो भवति ॥

अथ च्लिकरणं किमर्थम् ?॥ ॥२॥ च्लेश्चिकरणं विशेषणार्थम् ॥३॥ च्लेश्चिकरणं क्रियते॥[किम्प्रयोजनं?]॥ 'विशेषणार्थम्'॥ क्व विशेषणार्थेनार्थः ॥

प्र ] विहितस्य च्लिणो मन्त्र यदि लुग्भवति तदा चतुर्थस्यापि ग्रहणं कर्तव्यमित्य थरन इत्युक्तम् । तत्र घसेराकारान्तत्वात् तदर्थं चङ्ग्रहणं कर्तव्यं, घस्लृगाम्यर्थं लङ्ग्रहणं, धात्वन्तरार्थं तु मिङ्ग्रहणमित्यर्थः । क्सविधान इति । 'अनिट्' इत्येतत् च्लेर्विशेषणं यथा स्यादित्यर्थः । तथा हि यद्यनिङ्ग्रहणेन धातुर्विशेष्यते 'यस्मादन्यनेडागमो न दृष्ट' इति विषयान्तरगतमनिट्त्वमाश्रयणीयम्, इडादेशाना मार्जनातुरत्वादि प्राप्त्यभावात् । ततश्च गुहादिभ्य क्सो न स्यात्, तेषां विक लितेनत्वात् । अथापि पाक्षिकेनेडभावेन तथामनिट्त्वं स्यात् तथापि नित्य क्स स्यात् । च्लौ तु विशेष्यमाणे यदा तत्रानिट् तदा क्सो भवति—'अघुक्ष'-दिति । यदा निड्भवति तदा सिच्—'अगूहीं'दिति । घस्लभावे चेति । हलि यदुक्तं तत्तदेर्घस्लभावो विधीयते । तत्र च्लौ परतो घस्लभावे सत्यङ्भवति। अन्यथा सिच्येव घस्लभावः स्यात् । ततश्च सिचः श्रवणं स्यात् । नहि श्रवणस्यो

उ ]त्वात् । तेन मन्त्रे 'अघान् 'अघु' इत्युभयमपि सिद्धि । तद्दुत्तरयत्राह—प्रयाणामिति। च्लेश्चिकरणं कर्तव्यं, येन सिचोऽनुबन्धः इति पदान्तरं कार्यमिति भाव । एतेन चङ्ग्रहणं व्यर्थं, धयतावेव हि तदुपयोग । तत्र सिचो लुकैव सिद्धमित्यशान्तम । 'अघान्' इत्यसिद्धावपि । अकारान्तत्वादिति,—'मन्त्रे घस' इति सूत्रप्राप्तिनिमित्तकथनम् । भाष्ये—च्लिसंप्रत्ययार्थं इति । अनिट्प्रति च्लेर्विशेष्यत्वेन य संप्रत्ययस्तदर्थं । यस्मादन्यत्रेति । अस्य 'तदीत्यादि । यस्माद्धातोरुत्पत्ति प्रत्यये इत्यर्थ । लुङि योऽनिट्त्वमाश्रयितुमशक्यमित्याह—लुङादेशानामिति । तत्रश्चेति । विषयान्तरगताऽनिट्त्वाश्रयणाच्चेत्यर्थ । अथापीति । इडाऽभावोऽनिट्, तस्मात्तत्र तत्र्याप्तिरिति भाव । यदा च्लिरिति । तदा निर्दिश्यमानपरिभाषया इड्विहितस्य निमित्यर्थं । 'घसो'रित्यस्य विहितविशेषणत्वाच्च श्रूयमाणनिर्दिश्यमानस्य च्लेरविहितत्वमिति न शङ्क्यम् । अगूहीदिति । 'ह्यन्ते'ति वृद्धिनिषेध । गुणे 'ऊदुपधाया' इत्यूत्वम्।आर्द्धधातुके विवक्षिते घस्लादेशविधानादाह—लुङीति।परसप्तमीत्यभिमानेनेदमिति भाव । ननु च्लिर्न कार्यं, चङ्सप्तम्यर्थ सिच स्थानेऽऽदेशा कार्या। 'च्ले'रित्यस्य स्थाने 'सिचः' इति ग्राह्यम्। 'मन्त्रे' इति सूत्रे च 'च्ल'रिति

१ 'सिच इति'। २ इति क्वचित्। ३ अयं पाठः प्रायो दृश। ४'गतार्थं'।

घेट्धातु शब्द प्राप्नोति । अदधत् अधात् अधासीत् । अदधादित्येतदपि प्राप्नोति । ॥*॥ न चङो लुकि द्विर्वचनम् ॥*॥ न चङो लुकि द्विर्वचनेन भवितव्यम् ॥ किं कारणम् ? ॥ 'चङी'त्युच्यते, न चाऽत्र चङं पश्यामः ॥ प्रत्ययलक्षणेन ॥ 'न लुमताऽङ्गस्ये'ति प्रत्ययलक्षणप्रतिषेधः ॥ बहुवचने तर्हि चानु शब्द प्राप्नोति। अदधन् अनु अधासिषु । अधानित्यपि प्राप्नोति ॥ नैष दोषः । 'आत' इति जुस्भावो भविष्यति ॥ न सिध्यति । सिज्ग्रहणं तत्राऽनुवर्तते॥सिज्ग्रहणं [ तत्र ] निवर्तिष्यते॥ यदि निवर्तते 'अभूव'न्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति॥एवं तर्हि लुग्विभक्त्यपवादो विज्ञास्यते ॥ यदि लुग्विभक्त्यपवादो विज्ञायते 'मा हि धाता माहि धाता'मित्यत्र 'आत्मनेपदेष्वनतः [ सिचो-

म ]इति।'विभाषा घ्राधेट्'इत्यत्र सिग्रहणाऽनुवृत्तौ मन्या ऐत्यादेशेषु कृतेषु स्थानिवद्भावाभि ग्रहणेन तेषां ग्रहणात् किं कृते चङ्क्रमिष्णु द्विर्वचनं प्राप्नोतीत्यदधादित्यपि स्यात् । ननु चङोऽस्य स्थानिवद्भावाद्वाकारलोपे सत्यधदिति भाष्ये, तत्कथमुच्यते 'अदधादिति प्राप्नोती'ति ?। नैष दोषः । 'विभाषा घ्राधेट्'इति लुका लुप्तस्य स्थानिवत्त्व-निषेधाच्च लुमताऽङ्गस्येति प्रत्ययलक्षणनिषेधाच्चाऽऽकारलोपाऽभावात् । आत इति । विध्यर्थमेतद्भविष्यति न तु नियमार्थमित्यर्थः । एवं तर्हीति । अङ्गस्यादेशेषु तदपवादो ऐरेव लुग्विज्ञास्यते, तेनाऽभूवन्निति जुस् भविष्यति । 'आत' इत्येतच्च

उ ]त्र्वर्हि 'अगु'रित्यादौ 'सिजभ्यस्ते'ति जुस् न स्यात्। 'मा हि धाता'मित्यादौ 'आदि सिचोऽन्यतरस्या'मिति इत्वश्च न स्यात्। तस्मादन्तरङ्गानपीति न्यायाऽनाश्रयणेनाऽऽदेशे कृते स्थानिवद्भावेन सिचो लुगेवेत्यन्य ।तदाह भाष्ये–घेट्धातु शब्द मिति । तद्ध्वनयन्नाह–ऐरादेशेष्विति । आकारलोपे इति । निषेधे हृष्ट्वादिलोपे भस्भावे चेत्यपि बोध्यम्।'अदधादिति भाष्य'मिति पाठः। 'अदधदिति भाष्य'मित्यपपाठः । नैष इति।अङ्गकार्यं त्वादेत 'न लुमते'ति निषेधो, न [illegible] द्वित्वे इत्यभिमानः । विध्यर्थमिति । 'चङो लुकी'ति शेषः । भाष्ये–अभूवन्निति । चङ्लुकि विध्यर्थत्वे सम्भवति नियमार्थत्वं न स्यादिति 'सिजभ्यस्ते'ति जुस्स्यादित्यर्थः । प्राप्तेष्वा-देशेष्विति। इत्यादेशेष्वित्यर्थः । अङ्गृतेष्वादेशेष्विति पाठान्तरम् । तन्येनमशुरि-त्यत्र जुस् स्यादत आह–आत इत्येतदिति । निरवकाशत्वाऽसम्भवादित्यर्थः । न च सन्नन्त्यस्मीति कार्यं,तेन चङ्लुक्यपि जुस्,सिज्यदलुग्रहणा 'आत' इत्यस्य नियमत्वा-दभूवन्नित्यपि सिद्धमिति वाच्यम् , 'अनुवन्' 'अनोच'न्नित्यादौ स्यादिभ्योऽपि परस्य जुसापत्तेः । तस्मादन्यत्र इति सूत्रार्थं चिन्त्यं कार्यं इति सिद्धम् । 'आम' इत्यत्राऽपि 'ऐ'रि यस्य नोपदेश ,प्रत्ययमात्रस्य तेन इत्विरतात् । ननु धातुरपि

१'दित्यपि'।'दित्यत्रापि'।२भाष्यमिदमित्यन्य।३'भाष्य'।४दृढकचित।५'विनतेन'।

न्यतरस्या'मित्येष स्वरो न प्राप्नोति। तस्माच्चैतच्छक्य वक्तुं–'लुक्सिजपवाद' इति ॥ न चेदु[1]च्यते–अभूवन्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति। तस्मा[3]दात इत्यत्र सिज्ग्रहणमनुवर्त्यं, तस्मिंश्चाऽनुवर्तमाने धेट्श्वातु'शाव्यं प्राप्नोति। तस्माद्गातिस्थाघुपाभूभ्य सिच परस्मैपदेष्वित्यत्र सिज्ग्रहणं[2] कर्तव्यम्। तस्मिंश्च क्रियमाणे तान्येव त्रीणि ग्रहणानि भवन्ति 'च्लि लुङि' 'च्लेः सिच्'–'ह्रे'रिति ॥ यदप्युच्यते–'कमविधाने चानिड्वचने च्लिसप्रत्ययार्थ'इति। धातुमेवाऽत्राऽनिट्त्वेन विशेषयिष्यामो–'धातोरनिट' इति ॥ कथं पुनर्धातुर्नामाऽनिट् स्यात्? ॥ धातुरेवाऽनिट् ॥ कथम्? ॥ अनिमित्त वा इटः,–अनिट्। न वा तस्मादिडस्ति सोऽयमनि[ट् अनि]डिति ॥ अथ धातौ विशेष्यमाणे[5] क योऽनिडिति विशेषयिष्यसि ?॥ किञ्चाऽतः?॥ यदि विज्ञायते 'निष्ठायामनिट्'[6] इति, भूयिष्ठेभ्य प्राप्नोति। भूयिष्ठा हि शलन्ता इगुपधा निष्ठायामनिटः। अथ विज्ञायते–'क्ङिति योऽनि'डिति, न कुतश्चित्प्राप्नोति, सर्वे हि शलन्ता इ-

प्र ]विध्यर्थं भविष्यति, अधुक्षुरधुक्षु रित्यादिसिद्ध्यर्थमिति भावः। तस्मादिति। स्वरसिद्धये सिजादेशो क्से लुङ्नेष्य इत्यर्थः। कथमिति। आर्द्धधातुकस्य हीड्विधीयते। तदेव तदभावादनिडिति व्यपदिश्यते, मत्वर्थे बहुव्रीहिविज्ञानादिति भावः।

अनिमित्तमिति। धातोरिटश्च निमित्तनिमित्तिभावोऽस्तीति नाऽनुपपन्न पञ्चम्यर्थे बहुव्रीहिरिति भावः। न वा तस्मादिति। 'अनिट' इति वचनसामर्थ्यात्पञ्चम्यर्थे बहुव्रीहिराश्रयिष्यत इत्यर्थः। क योऽनिडिति। असति च्लिविधाने विशरणेन पक्षेनाऽनिट्त्वाश्रयेण भाव्यम्। तत्राऽस्मिन् विषय इट प्राप्त्यभावाद्विषयान्तरमनिट्त्वस्याऽपेक्षणीयमिति प्रश्नः। निष्ठायामिति। यद्यार्द्धधातुकमात्र परिगृह्यते ततो गुहादिभ्य ऊदिद्भ्यो न स्यादिति निष्ठाश्रयणम्। तदाश्रये च गुहादिभ्यो नित्य क्स

उ ]'न विद्यते इडस्मा'दिति व्युत्पत्त्याऽनिड्वदवाच्योऽत आह–मत्वर्थे इति। अवयवाऽवयविभावादिरूपे पञ्चम्यर्थे इत्यर्थः। भाष्ये–अनिमित्त वा इटइति। न विद्यते इडार्थं यस्येत्यर्थः। पञ्चम्यन्तार्थेऽन्यपदार्थे बहुव्रीहिरिति पक्षान्तरमाह–न वाऽस्मादिति। तदाचष्टे–वचनसामर्थ्यादिति। मत्वर्थे इति। 'कर्मकर्तृवचनेनाऽप्रथमाया' इति च वार्तिकोक्तेरिति भावः। अस्मिन् विषये–लुङ्प्रयोगे विषये। तत्राऽनिट्त्वस्याऽव्यभिचारात्। विषयान्तरम्–प्रत्ययान्तररूपम्। ऊदिद्भ्यो नेति। आर्द्धधातुकमात्रादिविषये पक्षे सेट्त्वादिति भावः। नित्य. क्स इति। 'यस्य विभाषे'ति निष्ठायामनिट्त्वादिति भावः। इष्यते इति। अनेनैषोऽपि तत्र पक्षे दोष इति सूचितं। निष्ठाग्रहणपक्षे भूयिष्ठेभ्य

१ 'न चेदेवमुच्यते' पा०। २ 'सिचो ग्रह' पा०। ३ 'वाऽस्मात्'। ४ अयं पाठ क्वचित्। ५ विशिष्यमाणे'। ६ 'निष्ठायामिति' पा०।

गुरस्या लिटि भेद ॥ किं पुनः कारणं धातौ विशेष्यमाण एनयोर्विशेषयोर्विशेषयिष्यते न पुनर्यत्र सामान्येनैतौ विधिप्रतिषेधौ ? ॥ क सामान्येन ? ॥ वलादावार्द्धधातुके ॥

यदप्युच्यते 'घस्लृभावे चे'ति । आर्द्धधातुकीया सामान्येन भवन्त्यनवस्थितेषु प्रत्ययेषु । तत्रार्द्धधातुकसामान्ये घस्लृभावे कृते 'जक्षिन' इत्येट् भविष्यति । [ च्लि लुङि ] ॥

च्लेः सिच् ॥ ३।१।४४ ॥

किमर्थश्चकार ? ॥ ॥ * ॥ [चकारो] विशेषणार्थः ॥ * ॥ क विशेषणार्थेनार्थः ? ॥ 'सिचि वृद्धिः परस्मैपदेष्वि'ति ॥ 'सौ वृद्धि'रितीयत्युच्यमानेऽग्निर्वायुरित्यत्रापि प्रसज्येत ॥ नैतदस्ति प्रयोजनम् । 'परस्मैपदेष्वि'त्युच्यते न चाऽत्र परस्मैपद

प्र ]प्रसज्येत, विकल्पितश्चोच्यते। भूयिष्ठं ह्यांति। स्नुरिङ्गुश्विश्रुस्वादीनां च नित्यया मनिट्त्वात् तस्य प्राप्नोति । न पुनर्यत्रेति । गुरुदयो विकल्पितेट इट्टो भावाऽभावाभ्यां भिद्यन्ते, तत्र ये सेडन्तेभ्यः सिचा भविष्यति, अनिड्भ्यस्तु क्स इति न कश्चिद्दोषः । आर्द्धधातुकसामान्य इति । अङ्गस्यागमनार्द्धधातुकसामान्य इड्विशेषितमाश्रयिष्यत इत्यर्थः । यदि तर्हि च्लेः प्रत्याख्यायते तदा 'मन्त्रे घसे'ति सिचो लुगादि सिच इति स्वरः प्राप्नोति। नैष दोषः । तत्र हि छन्दसि क विदडाद्यौदात्तत्वेन भाव्यं, क चिन्नित्त्विधानेन । यत्र त्वडाद्यौन्नित्त्विधानस्य च निषेधः प्रत्ययस्वरश्चोच्यते स विषयश्छन्दसि नास्ति । एतच्च भाष्यकारेण च्लेः प्रत्याख्यानाद्विज्ञायते। 'मा हि स्मवी'-त्यादौ तु सिच एव चित्त्वेनाऽन्तस्याऽर्थेन चापवादनुदात्तत्व भविष्यतीति तदर्थोऽप्यनुबन्धासञ्जनार्थं च्लिर्न कर्तव्य । [ च्लि लुङि ] ॥

च्लेः सिच् । अग्निरिति । सौ च परस्मैपदेषु चेति समुच्चयो विज्ञायेत, तथा चात्रापि स्यात् । सावितिं च सिमुशब्दयो साधारणो निर्देश स्यात् । आगन्तुना चेत्कारेण सकारो निर्दिश्यतेति भावः । न चात्रेति । पृथग्विभक्तिनिर्देशा-

उ ]दिति सूचितं दोषमाह—इड्विवति। भाष्ये—वलाद्यार्द्धधातुक इति । अयं भावः,—अनिटो धातोरित्युक्ते हेति विषयविशेषाऽऽकाङ्क्षायां लुट्परत्वलयर्द्धधातुके यदा योऽनिटिति कार्यविशेषावच्छिन्नो विषयविशेषो गृह्यते लुङाऽनुरोधादिति । तदाऽऽह—गुहादय इति । समानत्वमिति । 'आर्द्धधातुक' इति विषयसप्तमीति भावः । यत्रेति । 'मा हि दाता'मित्यादौ । सिच एव चित्त्वेनेति । एतच्चोत्तरसूत्रे स्फुटम् ॥ [ च्लि लुङि ] ॥

च्लेः सिच् । साधारण इति । तन्त्रेणेति भावः । पञ्चान्तरमाह—आगन्तुना

१ 'विशेषनिमित्तानां' पा० । २ 'विशेष्यते' विशेषयिष्यमि' पा० ।
३ 'तत्र सवेत्यनि' । ४ इद क्वचित । ५ इद भाष्यमितन्ये ।

पश्याम ॥ स्वरार्थस्तर्हि ॥ 'चितोऽन्त उदात्तो भवती'त्यन्तोदात्तत्वं यथा स्यात् ॥ एतदपि नास्ति प्रयोजनम्, अनच्कोऽयं, तत्र नार्थः स्वरार्थेन चकारेणाऽनुबन्धेन ॥ इटि कृते साऽच्को भविष्यति ॥ तत्र प्रत्ययाद्युदात्तत्वेनेट उदात्तत्वं भविष्यति ॥ न सिध्यति । 'आगमा अनुदात्ता भवन्ती'त्यनुदात्तत्वं प्राप्नोति ॥ अत उत्तरं पठति-॥*॥ सिचश्चित्करणानर्थक्यं स्थानिवत्त्वात् ॥*॥ सिचश्चित्करणमनर्थकम् ॥ किं कारणम् ? ॥ 'स्थानिवत्त्वात्' । चितोऽयमादेशः स्थानिवद्भावात्सिद्धं भविष्यति ॥*॥ अर्थवत्तु चित्करणसामर्थ्यादीट उदात्तत्वम् ॥*॥ नैष दोषः । अर्थवत्तु सिचश्चित्करणम् ॥ कोऽर्थः ? ॥ 'सिचश्चित्करणसामर्थ्यादीट उदात्तत्वं' [ । सिचश्चित्करणसामर्थ्यादीट उदात्तत्वं ] भविष्यति । नाऽप्राप्ते प्रत्ययस्वरे आगमानुदात्तत्वमारभ्यते तद्यथैव प्रत्ययस्वरं बाधते एवं स्थानिवद्भावादपि या प्राप्तिस्तामपि बाधेत ॥

*॥ तस्मान्चित्करणम् ॥*॥ तस्माच्चकारः कर्तव्यः ॥

अथेदित्करणं किमर्थम् ? ॥*॥ इदित्करणं नकारलोपाऽभावार्थम् ॥*॥ इदित्करणं क्रियते । [ किं प्रयोजनं ? ॥ 'नकारलोपाऽभावार्थम्' ? ] ॥ नकार-

---

प्र ]द्भावाऽऽतिभावोऽत्र न तु समुच्चय इति भावः । स्वरार्थ इति। सिचोऽनच्कत्वेऽपि 'चितस्सप्रकृते'रिति वचनान्मा हि धाक्षीमित्यादौ धातोरुदात्तार्थं इत्यर्थः । अनच्कोयमिति । 'मा हि धाक्षी'मित्यादावादि' सिचोऽन्यतरस्यामिति पाक्षिकेणोदात्तत्वेन भाव्यमिति चित्स्वरस्याप्रमविषय इति भावः ॥ अर्थवदिति । च्लेश्चित्करणस्य सामान्यग्रहणाऽविघातार्थत्वान्मा हि लावीदित्यादौ स्थानिवद्भावप्राप्तं स्वरमागमानुदात्तत्वं बाधेत । तस्मादन्तोदात्तार्थं सिचश्चित्त्वमित्यर्थः । नैष दोष इति । 'सिचश्चित्करणानर्थक्य'मिति य उक्तः स नास्तीत्यर्थः । अत्र केचिदाहु -प्रत्ययस्वरस्य द्वावपवादौ-आगमानुदात्तत्वं यासुडित्यत्र ज्ञापितं तद्देशं, चित्स्वरश्च पाक्षिक । तत्रा-

---

उ.]चेति। तथा च सकारमात्रे तात्पर्यमिति भावः ।पृथगिति। अन्यथा 'सपरस्मैपदयो'रित्येव वदेत् । 'स'इति वर्णमात्रम् । स च परस्मैपदसाहचर्यादक्षाधिकाराच्च प्रत्यय एव ग्रहीष्यते । धातोरुदात्तार्थ इति । लादेशनिमित्तनिघाते जाते पुनरुदात्तार्थ इत्यर्थः । भाष्ये तत्र प्रत्ययाद्युदात्तत्वेनेति । सिज्विधायुरस्थितात्युदात्त इति शास्त्रस्याऽनच्कत्वात्तत्र वैयर्थ्येन तदुत्तरवाक्यमिटि स्वरविधायकमित्यर्थः । अनच्कविषये बाधेन लाघवात्तदसम्बन्ध एवेति 'धातो'रित्याचेरवान्यतापक्षेपनिघातो भविष्यतीत्युत्तरयति-आगमा इति।एवञ्च तद्बाधेनोदात्तं बाध चित्त्वं सार्थकमिति भावः ॥ स्थानिवद्भावप्राप्तमिति । 'स्थानिनि दृष्टस्यैवाऽतिदेश' इत्यत्र

---

१ 'स्थानिवत्त्वा' । २ 'करणे सान' पा० । ३ इद लुप्त सम्प्रति । ४ 'बाधने' ।

लोपो मा भूदिति। असत्स्व अमन्था। 'अनिदितां हल उपधायाः क्ङिती'ति।

॥*॥न वा हन्तेः सिच किरणे ज्ञापकं नकारलोपाभावस्य॥*॥न वैतत्प्रयोजनमस्ति ॥ किं कारणम् ? ॥ यदयं 'हन सिजि'ति हन्तेः सिच कित्त्वं शास्ति तज्ज्ञापयत्याचार्यो 'न सिजन्तस्य नकारलोपो भवती'ति ॥ नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥ किम् ? ॥ सिच्येव नलोपो यथा स्यात् परस्मिन्निमित्ते मा भूदिति ॥ क पुनरत्र विशेषः—सिचि वा नलोपे सति परस्मिन्वा निमित्ते? ॥ अयमस्ति विशेषः—सिचि नलोपे सति नलोपस्याऽसिद्धत्वादकारलोपो न भवति। परस्मिन्पुनर्निमित्ते नलोपे सत्यकारलोपः प्राप्नोति ॥ समानाश्रयमसिद्धं [ व्याश्रयं तु सिद्धमेव ]। व्याश्रयं चेदम् ॥ ननु च परस्मिन्नपि निमित्ते नलोपे सत्यकारलोपो न भवति ॥

प्र ]वचनादिति प्रतिपत्तिगौरवपरिहारः एव भविष्यति नाऽर्थं सिचः कित्त्वेनेति। नैतदस्ति। नहि प्रत्ययस्वरस्यैवापवादौ, प्रकृत्याद्युदात्तानुगादीनां तदप्रसङ्गात्। कुङ्गितादीनां च चितान्। 'स्थानिवद्'दित्यत्र च कार्यनिर्देश इति परत्वमपि चित्स्वरस्य नास्ति। आगमानुदात्तत्वेन चाऽविशेषात्सर्वं स्वरो बाध्य। तस्मात्तत्साधनार्थं सिचः कित्त्वं कर्तव्यमिति स्थितम्। परस्मिन्निति। सिचः परं यत्सार्वधातुकं तस्मिन्नित्यर्थः।

उ ]न भाव, किन्तु तत्र सम्भावितत्वाऽस्तीति भाव। स्थान्यादेशोऽनवदेशोऽन्तः कार्ये विधानात्स्वेन 'धाना'दित्येवमादनाद्यनेनापि निषेधलक्ष्येनाऽऽगमाऽनुदात्तत्वेन बाध्येतेति तात्पर्यम्। न च ङ्कोः कित्त्वसामर्थ्यादेव तद्वाध, 'मन्त्रे' इति सूत्रे 'ङे'रिति सामान्यग्रहणार्थत्वात्। अन्यथा नित्त्वे 'मन्त्रा'दत्यैव ग्रहणं स्यात् क्तिन्। तत्र 'आम' इति सूत्रे लेरित्यस्याऽसम्बन्ध स्यात्। तत्र परत्वाऽन्तरङ्गत्वा त्या नित्त्वादिपु सत्सु लुकि प्रत्ययलक्षणेन निषिद्धत्वादेवदत्त कारथानवारेत्यता ऽऽमन्तस्य निघात तत्र परस्य चाऽनिघात स्यादिति 'आम' इत्यत्र 'ल'रित्यनुवर्तनीयमिति तदभिप्राय। यदि त्वत्राऽऽनपीति न्यायेन निवृत्तिस्य पूर्वमेव लुग्वा न कर्तव्य प्रयोजनमिति तत्सामर्थ्यादेवाऽन्त्योदात्तत्व सिद्धम्। तस्मात्पूर्वाचार्यानुसारेण सिचि ङ्गौ वा चकारोच्चारणमिति सूत्रार्थ। अतएवाह विप्रतिषेधादिति। स्थानिवद्भावेन हि चित्त्वमाश्रितमिति, स्वरस्तु स्वशास्त्रेणैवेति भाव। न हि प्रत्ययस्वरस्यैतावितीति। एवं च 'नाऽप्राप्ते प्रत्ययस्वर' इत्यारभ्य 'स्थानिवद्भावादपि या प्रतिप्राप्तिरेव बाधेन'त्यन्तग्रन्थो भाष्यप्रवृत्तेषु ग्रन्थेषु ग्रन्थ इत्य मतोऽप्यप्रत्य इति भाव। आगमाऽनुदात्तत्वेनेति। बाध्यमानानचिन्तयेति

१ 'विकरण' पा०। २ 'नकारलोप' पा०। ३ 'लिङ्निमित्ते वा' पा०। ४ 'सति नकारलोपे कृतेऽकारलोपः प्रसज्येत' पा०। ५ इदं क्वचित्। ६ 'नकार'।

कथम् ?॥'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे इति॥तदेतद्धन्ते सिच किल्क रण ज्ञापकमेव 'न सिजन्तस्य न[कोर]लोपो भवती'ति॥*॥ इदिद्वा स्थानिव स्वात् ॥*॥ अथाऽप्यनेनेदितार्थं स्यात्। इदितोऽयमादेश स्थानिवद्भावा दिदिद्भविष्यति।॥*॥ स्पृशमृशकृपतृपदृपां सिज्वा ॥*॥ स्पृशमृशकृपतृपदृपां सिज्वेति वक्तव्यम्। स्पृश-अस्पृक्षत् अस्प्राक्षीत्। स्पृश ॥ मृश-अम्रृक्षत्। अम्राक्षीत्। मृश ॥ कृष-अकृक्षत् अक्राक्षीत्। कृष। तृप-अतृपत् अत्राप्सीत्। तृप ॥ दृप-अदृपत् अद्राप्सीत् ॥ किं प्रयोजनम्? ॥ सिज्यथा स्यात् ॥ अथ क्स सिद्ध ॥[कथ सिद्धे?॥] सिद्धे 'शल इगुपधाद निट क्स' इत्येव ॥ सिजपि सिद्ध ॥ कथम्? ॥ च्लेश्चिल्करण प्रत्याख्यायते, तत्र च्लायेव झलक्षणेऽमागमे कृते विहतनिमित्तत्वात्क्सो न भविष्यति॥

यद्येवमन्त्यस्य सिजादय प्राप्नुवन्ति ॥*॥ सिद्ध तु सिचो यादित्वात्॥*॥ सिद्धमेतत्॥कथम् ?॥'यादित्वात्'। यादि सिच्करिष्यते सोऽनेकादित्वात्सर्वस्य

प्र ] असिद्धमिति। बाह्यसार्वधातुकाश्रयस्य नलोपस्य बहिरङ्गत्वादसिद्धत्वमित्यर्थ। आर्द्धधातुकोपदेशे यदकारान्त तस्य लोप इत्येव वा हन्तेरतो लोपो न भविष्यति। तथा चोच्यते-'अवयवलोपिनामनो लोपो नास्ती'ति ॥ स्पृशेति। नित्ये क्से प्राप्ते, द्वाभ्यां पुनश्चक्रि पक्षे सिज्विधीयते। च्लेश्चित्करणमिति। ततश्च प्रयोजना ऽभावाच्चकारस्येत्संज्ञा नास्तीति च्लौ झलादौ पक्षेऽमागमे कृते सिच्। अमभावपक्षे तु

उ ]भाव।वस्तुतस्तु 'लविनव्य'मित्यादौ प्रत्ययसन्नियोगेनाऽऽद्युदात्तत्वे कृते पश्चादिड् जायमानोऽस्वरक स्यादिति सामान्येन स्वराऽप्राप्तिविषये तस्य चारितार्थ्यांद्बाध कत्वोक्तिश्चिन्त्या, सुतरां सर्वस्वरस्य। यदि लोपनिपातेन तथाऽनुदात्तत्वसिद्धिरित्यु च्यते तदा तद्वचनमेव व्यर्थं नास्ति चेति 'आद्युदात्तश्चे'ति भाष्ये ध्वनितम्। चित्त्वन्तु धातुस्वरेण प्रत्ययस्वरेण वैरवाक्यतापक्षोपनिपातेन प्राप्तानुदात्तत्व बाधनार्थं कार्यमेव। ननु सिचि जायमानोऽपि परस्मिन्निमित्त एव जायतेऽत आह- सिच परमिति। भाष्ये-नलोपस्याऽसिद्धत्वादिति। 'असिद्धवदत्राभा'दित्यने नेत्यर्थ। बहिरङ्गत्वादिति। ननु 'स'शब्दनिमित्तलोपे तस्य बहिरङ्गतयाऽसिद्ध त्वादाहतेत्यादौ 'हस्वादङ्गा'दिति न स्यात्। सिज्निमित्तत्वे त्वसिद्धत्वाऽभावान्नेत्य- र्तानि चेन्न,-त्रैपादिके ऽन्तरङ्गे बहिरङ्गपरिभाषाऽप्रवृत्ते। भाष्ये-अथाऽप्यनेनेत्येक देश्युक्ति ॥ एकदेश्येवाह-अथ च्लेरिति। ततश्चेति। स्वरस्य चिच्चित्वेनैव सिद्धिरिति भाव। भाष्ये-चित्करण प्रत्याख्यायत इत्यस्य इत्संज्ञा प्रत्याख्यायत

१ 'लक्षणे'ति क्वचित्। २ [illegible] पाठ क्वचित्। ३ 'इदित्वाद्वा' पा०। ४ 'दृप' पा०। ५ 'सिद्ध'इति क्वचित्।

ऽमागमो विभाषा । यस्य खल्वप्यमा [ ऽङो ] निमित्त न विहन्यते ■ स्यादेव । तस्मात्सूत्रमुच्यते–'स्पृशमृशकृषतृपदृपां सिज्वे'ति ॥ [ च्ले सिच् ] ।

## शल इगुपधादनिट: क्स ॥ ३।१।४५ ॥

॥*॥ क्सविधान इगुपधाभावश्च्लेर्गुणनिमित्तत्वात् ॥*॥

क्सविधान इगुपधस्याऽभाव ॥ किं कारणम् ?॥ 'च्लेर्गुणनिमित्तत्वात्' । च्लिर्गुणस्य निमित्तम् । तत्र च्लावेव गुणे कृते 'इगुपधा'दिति क्सो न प्राप्नोति ॥ ॥*॥ न वा क्सस्याऽनवकाशत्वादपवादो गुणस्य ॥ ॥ न वैष दोष ॥ किं कारणम् ?॥ 'क्सस्याऽनवकाशत्वात्' । अनवकाश क्सो गुण बाधिष्यते ॥*॥ अनिड्वचनमविशेषण च्लेर्नित्याऽनिट्त्वात् ॥*॥

---

प्र ]ग्न भवतीत्यमागमाऽभावात् क्स एव प्रसज्येतत्यर्थ । यस्य खल्वपीति । पुषादय । स हि कृतेऽप्यमागमे प्रवर्तते । [ च्ले सिच् ] ॥

शल इगु । क्सविधान इति । विशेषणाऽसंभवाल्लक्षणदोषमुद्भावयति । भूतपूर्वत्याश्रये विहितविशेषणाश्रये वा लक्ष्याऽसिद्धि । किरकरण तु क्सस्यार्चीति विशेषणार्थं वत्सा इत्यादौ लोपनिवृत्तये स्यात् ॥ न वा क्सस्येति । भूतपूर्वगत्या श्रये किरवमनर्थकं स्यादिति सानुबन्धकं रूपमनवकाशमित्यपवादत्वाद्गुणस्य बाध कमित्यर्थ । न च क्सस्यार्चीति विशेषणार्थं कित्त्वम् , प्रत्ययत्वादर्थवत्त्वाच्चास्यैव क्सस्य तत्र ग्रहणस्य सिद्धत्वात् । उणादीनामव्युत्पन्नत्वाद्वत्सा इत्यादौ प्रसङ्गाऽभावात् । अनिड्वचनमिति । अनिट इत्येतच्च्लेर्विशेषण यथा स्यादिति चिन्त्यलर्ग कृत

---

उ ]च्चैरेव वा प्रत्याख्यानमिति सूचितम् । च्लन्वेव झलादिलक्षणेऽपि 'अस्पार्क्षी'-दित्यस्याऽसिद्धिरूपं दूषणान्तरमाह–अपि चेति । तृपदृपादौ फल दर्शयति भाष्य-यस्य खल्वपीति ॥ [ च्ले सिच् ] ॥

शल इगुप। लक्षणदोषमिति । असम्भवरूपमित्यर्थ । भूतपूर्वेति । विशे-षणसामर्थ्याद्धि तदाश्रयणम् । लक्ष्याऽसिद्धिरिति । सर्वत्र गुणश्रवणापत्तिरित्यर्थ ।

ननु क्सस्य कित्त्वसामर्थ्यात्पूर्वमपि गुणो न भविष्यतीत्यत आह–कित्करण त्विति । वत्सो वदे ॥ औणादिक । क्सस्य गुणाऽपवादत्वे हेतुमाह–भूतेति ।

ननु भासाविन्यादावपि लोपापत्तिरत आह–प्रत्ययत्वादिति।'वत्सा'इत्यादौ दोष वारणायाह–उणादीनामिति । तृणमावित्यादौ दोषस्तु 'दुहवा दुहे'त्यत्रेत क्सपे-दाऽनुवृत्तेर्व्याधिकाराऽनुरोधेन दुहादिषु यस्य सम्भवस्तस्यैव पूर्वसूत्रेऽपि ग्रहणाद्वा रणीय । अत एव दृशो क्स तादृक्षानित्यादौ न दोष इति कित्त्वसामर्थ्याद्गुणो नेति ध्येयम् । 'दुधुक्षती'त्यादौ सन सानुब न्धत्वान्न दोष । एतद्विपरिये तृणग

---

१ दृश धविक्ष । २ 'दृप' पा॰ । ३ 'सपद' ।

अनिड्वचनमविशेषणम्॥ किं कारणम् ?॥ 'च्लेर्निन्यादिष्टत्वात्' । निर्यादिष्ट श्चिन्नं क्वचिदृश्यते । तत्र 'च्लेरनिटः' इति क्सो न प्राप्नोति । ॥*॥ न वा क्सस्य भिन्नत्वात्तस्य चानिडाश्रयत्वादनिटि प्रसिद्ध क्सविधि ॥*॥ न वैष दोषः ॥ किं कारणम् ? । 'क्सस्य भिन्नत्वात्' । भिन्नपदार्थः क्सः । स चाऽनिडाश्रयः । न चापवादविषये उत्सर्गोऽभिनिविशते । 'पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः'। 'प्रकल्प्य वाऽपवादविषयन्ततउत्सर्गोऽभिनिविशते'। तत्र तावदत्र कदाचिन् सिज्भवति,अपवाद क्स प्रतीक्षते। क्सस्य भिन्नपदार्थत्वात्तस्य चानिडाश्रयत्वादनिट्त्वं प्रसिद्धम्। अनिटि प्रसिद्धे क्सविधिः । अनिटि प्रसिद्धे क्सो भविष्यति ॥ सिज्विधानं क्व भविष्यति ? ॥*॥ दोषे सिज्विधानम् ॥*॥ दोषे सिज्विधानं भविष्यति । अकोषीत् अमोषीदिति ॥

श्लिष आलिङ्गने ॥ ३।१।४६ ॥

किमर्थमिदमुच्यते ?॥॥*॥ नियमार्थम् ॥*॥ [नियमार्थोऽयमारम्भः]– श्लिष आलिङ्गन एव क्सो यथा स्यात् । इह मा भूत्–उपाश्लिषज्जतु च काष्ठं च। समाश्लिषद्ब्राह्मणकुलमिति ॥ अत उत्तरं पठति—॥ ॥*॥ श्लिष आलिङ्गने

प्र ]त्युक्तम्। तत्राम्य सिचा नित्य भाव्यमितीडभावोपलक्षितस्य रूप न क्वचिद्दृश्यत इति च्लेरनिट इति विशेषणस्याऽप्रसिद्धिरित्यर्थः ॥न वा क्सस्येति । अत्र भाव – न्लिट् लिट् इति स्थिते सिचा न भाव्य,तस्याय विषय इति। क्सेनाऽपि न तावद्भाव्यं यावदस्याऽनिट्त्वं न ज्ञातम् । तत्र ल्कारस्यैवेट् प्राप्तौ तन्निषेधादनिट्त्वम स्तीति क्स सिद्ध –अलिक्षदिति । यत्र त्विट् प्रतिषेधो नास्ति तत्र सिज्व भवति– अकोषीदिति ॥ [ शल इगुपधादनिट क्सः ]

श्लिष आ ॥ किमर्थमिति । किं पुनर्विध्यर्थ उत प्राप्ते तद्वारणाय नियमार्थमिदम्, अथ पूर्वेण क्से सिद्धे नियमार्थमिति प्रश्न ॥ इतरो वक्ष्यमाणयोग विभाग मनसि कृत्वाह—नियमार्थमिति । उपाश्लिषदिति । प्रत्यासत्तावत्र

उ ]नाहक्षादेरनभिधानमिति कश्चित्।सिचा नित्यमिति।आदेशान्तराभावे तस्याऽवश्यम्भावादित्यर्थः । सिज्व भवतीति । निर्दिश्यमानपरिभाषया च्लेरेव स । 'धातो'रिति च विहितविशेषणमिति निर्दिश्यमानस्य त्र्यवहितत्वमिति भाव ॥

श्लिष आलिङ्गने। विधित्वसम्भवे नियमार्थत्वं कथमित्यत आह–इतर इति। प्रत्यासत्ति –सन्निधानम् । प्राणिकर्तृकतद्विशेषश्चाऽऽलिङ्गनमिति बोध्यम् । श्लिषतोऽप्राप्ते इति । परस्मैपदविषये विधित्व स्यादित्यर्थः । भाष्ये–आलिङ्गनेऽनालिङ्गने चेति । कर्मणि कर्मव्यतिहारे चाऽऽत्मनेपदनिमित्त इत्यर्थः । तत्राऽऽलिङ्गने

१ इद भाष्यमित्यन्ये । २ 'विषयमुत्स' । ३ 'दनिट्प्रसिद्ध' । ४ दत्तम् ।

नियमानुपपत्तिर्विधेयभावात् ॥*॥ श्लिष आलिङ्गन इति नियमस्यानुपपत्तिः ॥ किं कारणम् ? ॥ 'विधेयभावात्' ॥ कैमर्थक्याच्चियमो भवति? ॥ 'विधेयं नास्ती'ति कृत्वा ॥ इह चास्ति विधेयम् ॥ किम् ? ॥ पुषादिपाठादङ्प्राप्तस्तद्बाधनार्थं क्सो विधेय ॥ तत्राऽपूर्वो विधिरस्तु नियमो वेत्यपूर्व एव विधिः स्यात्र नियमः ॥ किञ्च स्याद्यद्य नियमो न स्यात् ?॥ आत्मनेपदेष्वालिङ्गने चाऽनालिङ्गने च क्स प्रसज्येत । यथैव च क्सोऽङं बाधत एवं चिणमपि बाधेत । उपाश्लेषि कन्या देवदत्तेनेति ॥ ॥*॥ सिद्धं तु श्लिष आलिङ्गनेऽचिण्विषये ॥*॥ सिद्धमेतत्॥ कथम् ?॥ 'श्लिष आलिङ्गनेऽचिण्विषये क्सो भवती'ति वक्तव्यम् ॥*॥ अङ्विधाने च श्लिषोऽनालिङ्गने॥*॥ अङ्विधाने च श्लिषोऽनालिङ्गने इति वक्तव्यम् ॥ सिध्यति । सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवास्तु। ननु चोक्त-'श्लिष आलिङ्गने नियमानुपपत्तिर्विधेयभावा'दिति । नैष दोषः । ॥*॥ योगविभागात्सिद्धम् ॥*॥ योगविभागः करिष्यते। 'श्लिषः' । श्लिषः क्सो भवति ॥ किमर्थमिदम् ? ॥ पुषादिपाठादङ्प्राप्नोति तद्बाधनार्थम् ॥ ततः '-आलिङ्गने' । 'आलिङ्गने च श्लिषः क्सो भवति' ॥ इदमिदानीं किमर्थं [स्यात्] ? । नियमार्थम् । 'श्लिष आलिङ्गने एव' ॥ क्व मा भूत् ? ॥ उपाश्लिषज्जतु च काष्ठं च, समाश्लिषद्ब्राह्मणकुलमिति ॥

यदप्युच्यते-यथैव क्सोऽङं बाधत एवं चिणमपि बाधेतेति। 'पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरा' नित्येवं क्सोऽङं बाधिष्यते, चिणं न बाधि

---

प्र.]श्लिपिर्वर्तते, नालिङ्गने॥अङ् प्राप्त इति। श्लिषेर्नाप्ते अपि क्सस्यारम्भाद्बाधकत्वमित्यर्थः । यथैवेति । विप्यर्थत्वे दोषान्तरोद्भावनम् । सिद्ध स्विति । पूर्वेण क्से सिद्धे नियमार्थमेतद्वचनं कर्तव्यम् । अचिण्विषय इति । अनेन नियमार्थत्वं समर्थ्यते । अन्यथा चिण्बाधनाय तद्विषये विध्यर्थमेतत्स्यान्न नियमार्थम् । अङ्विधान इति । तथाऽऽलिङ्गनेऽङ्प्रतिषेधात्-श्लिष आलिङ्गनेऽचिण्विषये इति नियमार्थं भवति, अन्यथा विध्यर्थमेतत्स्यात् ।

श्लिष क्स इति।श्लिष इत्यत्राऽनिट इत्यनुवर्तनाद्दाहार्थस्य सेटो ग्रहणाऽभाव ।

---

उ.]इष्टमेव, अन्यनापत्तिरेव दोष । दोषान्तरेति। बाध्यसामान्यचिन्तया पदद्वयविषयको विधिः स्यादिति भाव । नियमार्थमिति । अचिण्विषये श्लिष आलिङ्गन एवेत्यर्थ ।'अचिण्विषय' शब्देन भावकर्मार्थक 'त' शब्दभिन्नमात्मनेपदमुच्यते।अन्यथा विध्यर्थमिति । 'अचिण्विषय' इत्यनेन तद्भिन्नविषयमेव ग्रहणं स्यादित्यर्थ । तत्तु चिण्विषये विधिव्याहृत्यर्थं स्यादिति भाव । दाहार्थस्येति । अन्यथा तत्र चारितार्थ्यादस्य बाधो न स्यादिति भाव । सानुबन्धकत्वाद्वेति । 'श्लिषु दाहे' इति

प्यते । अथवा तत्र वक्ष्यति चिण्ग्रहणस्य प्रयोजनम्— चिणेव यथा स्यादन्यन्मा भूदिति ॥ [ श्लिष आलिङ्गने ] ॥

णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ॥ ३।१।४८ ॥

॥१॥ णिश्रिद्रुस्रुषु कमेरुपसङ्ख्यानम् ॥ २॥ णिश्रिद्रुस्रुषु कमेरुपसङ्ख्यानं कर्तव्यम् ॥

'नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः ।
अथ पत्काषिणो यान्ति येऽचीकमतभाषितम्' ॥इति॥

॥ ]माऽनुवर्तत इत्याह । तत्र पुषादित्वादङ्गमिनोऽङ् प्रत्ययः शिष्टेन क्सेन बाध्यते ॥

अथ वेति । समुदायापेक्षाया पुरस्तादपवादा इति परिभाषा नाश्रीयत इति परिहारान्तरोपन्यासः ॥ [ श्लिष आलिङ्गने ] ॥

णिश्रिद्रु। कमेरिति। आयादय आर्धधातुके वेति विकल्पेन णिङो विधानाद्णिङ्पक्षे णिचि प्राप्ते वचनम् । तत्राऽचकमतेति भवति। णिङ्पक्षे तु सन्वद्भावादचीकमतेति। 'सन्वल्लघुनि चङ्परे'ति वक्तव्ये परग्रहणसामर्थ्यादन्यपदार्थो णिराश्रीयते अन्यस्याऽसंभवात् । तेन चङ्परे णौ परतो यल्लघु धात्वक्षरं तत्र परतोऽभ्यासस्य सन्वत्कार्यं भवतीत्यर्थः ।नाकमिष्ट सुखमिति । नाकं स्वर्गमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः 'कमेर्णिङि किं रूपं भवती'ति पृष्टे 'अचकमते'त्युक्तम् । यैस्तु 'अचीकमते'त्युक्तं ते पत्काषिणो यान्ति । पत्भ्यां कषन्तीति पत्काषिणः पादचारिण इत्यर्थः । अन्ये त्वाहुः—अचकमतेति यैरुक्तं त एतावद्भिरचकमतेत्यनुकरणशब्देनोच्यन्ते । अनुकार्यानुकरणयोर्भेदस्याऽविवक्षितत्वाद्विभक्तिर्न कृता । त सुयुक्तैरपि वडवारथैर्गच्छन्त सुखं न

व ]प्नुयन् । अनुमित इति। न च क्सोऽचरितार्थः, तत्रादिषदर्शनसामर्थ्येनेतर पुषादिमात्रपरत्वमित्यभिमानः । पुषादिगणेऽपि स्पष्टार्थं । न चाऽन्यत्रैव पाठ्यः, अदोदोषनिवृत्त्यर्थत्वात् । वस्तुतः पुषादिगणसामर्थ्यादादिपदेन तत्र ग्रहणसामर्थ्याद्वाऽङ्क्सयोः परस्मैपदे आलिङ्गनाऽनालिङ्गनविषये सर्वत्र विकल्पे प्राप्ते, आत्मनेपदे चाऽऽलिङ्गनाऽनालिङ्गनयोरविशेषेण क्से प्राप्ते द्वितीयेन नियमः—'आलिङ्गन एवे'ति । एवञ्चाऽर्थान्तरे सावकाशोऽङ् आलिङ्गने क्सेन बाध्यते । तस्यैव चास्याऽनुवादो भाष्ये—तद्भावनार्थमिति । न चाऽऽलिङ्गने क्स एवे'ति विपरीतनियमापत्तिः, स्पष्टानुरोधात् प्रत्ययनियमस्यैवाऽङीकारादिति सूचनम् । योगविभागसामर्थ्याच्च नियमेन सर्वं 'क्स'प्राप्त्यर्थं ॥ [ श्लिष आलिङ्गने ] ॥

णिश्रिद्रुस्रुभ्य । ननु णिङ्मात्रपक्षेऽपि सन्वत्त्वं दुर्वारं, तत्र णावित्यनुवृत्तेरत आह—सन्वल्लघुनीति । अन्ये त्वाहुरिति । अत्राऽरुचिस्तु भाष्याऽननुगुण्यम् ।

१ 'सर्वत्र प्राप्ते' ।

॥*॥ कर्मकर्तरि च ॥*॥ कर्मकर्तरि चोपसङ्ख्यानं कर्तव्यम् । कारयति कटं देवदत्तः । 'अचीकरत कटः स्वयमेव'। उच्छ्राययति कटं देवदत्तः। 'उदशिश्रियत कटः स्वयमेवे'ति ॥ ॥*॥ न वा कर्मण्यविधानात्कर्तृत्वाच्च कर्मकर्तुः सिद्धम्॥*॥न वा कर्तव्यम्॥ किं कारणम् ? ॥ 'कर्मण्यविधानात्' । नहि कश्चित्कर्मणि विधीयते यश्चङं बाधेत ॥ कर्तृत्वाच्च कर्मकर्तुः सिद्धम् ॥ अस्ति च कर्मकर्तरि कर्तृत्वमिति कृत्वा चङ् भविष्यति॥ननु चायं कर्मणि विधीयते—'चिण्भावकर्मणो'रिति॥ प्रतिषिध्येते तत्र यक्चिणौ—'यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसङ्ख्यान'मिति॥यस्तर्ह्यहेतुमण्णिच्—'उदपुपुच्छत गौः स्वयमेव'॥अत्रापि यथा भारद्वाजीयाः पठन्ति तथा भवितव्यं प्रतिषेधेन,'यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाऽकर्मकाणामुपसङ्ख्यान'मिति ॥

अस्यतिवक्तिख्यातिभ्योऽङ् ॥ ३।१।५२ ॥

अस्यतिग्रहणं किमर्थम् ?॥ ॥*॥ अस्यतिग्रहणमात्मनेपदार्थं [ पुषादित्वा त् ]॥*॥अस्यतिग्रहणमात्मनेपदार्थं द्रष्टव्यम्॥ किमुच्यते आत्मनेपदार्थमिति, न पुनः परस्मैपदार्थमपि स्यात् ? ॥ 'पुषादित्वात्' । पुषादिपाठात्परस्मैपदेष्वङ् भविष्यति ॥*॥ कर्मकर्तरि च ॥*॥ कर्मकर्तरि चोपसङ्ख्यानं कर्त-

म.]प्राप्नुवन्ति,अपशब्दोच्चारणात्। ये लघीयमनभाषिणस्ते परत्रापि गोऽपि सुखं यान्तीति ॥ कर्मकर्तरि चेति । कर्तर्युच्यमानश्चङ् कर्मकर्तरि न प्राप्नोतीति वचनम् । उदपुपुच्छतेति । पुच्छमुदस्यति उत्पुच्छयते गौः, तत्र यदान्तर्भावितण्यर्थत्वादस्य गवा कर्मवत्त्व भवति तदा 'उत्पुच्छयते गा'मिति भवति । पुनर्गौरेव यदा सौकर्यातिशयेन कर्तृत्वं विवक्ष्यते भूतकालश्च तदैतदुदाहरणम् ॥ [ णिश्रिद्रुस्रुभ्य. ]

अस्यति । पुषाद्य आगणान्तात् । अन्तराले वृत्करणं रधादिसमाप्त्यर्थम् ,न तु पुषादिपरिसमाप्त्यर्थमिति प्रतिपादनाय सुहृद्भूत आचार्य आह—अस्यतिग्रहण-

उ.]वार्तिकोत्तरं पाठेन तत्तत्तुल्यार्थत्वस्य स्वरसतः प्रतीते । पूर्वव्याख्यायां विशेषलक्षणस्मरणप्रयुक्तोऽधिकगुरुप्राप्ति । 'कमेर्णिङि कीदृश रूप'मिति प्रश्ने स्वरसतः कम्प्रकृतिके णिङन्तेऽर्थके तस्य साधुत्वेऽप्यसमञ्जसोत्तरत्वान्न्यूनगुरुप्राप्ति । एवञ्च सामान्यशास्त्राऽनुगतलक्ष्यप्रयोगाऽपेक्षया विशेषलक्षणानुगतशब्दप्रयोगे धर्माधिक्यमित्यस्य भाष्यस्य तात्पर्यम् । कर्मकर्तरीति । कर्मवद्भावाच्चिण्वत् स्यादित्यभिमान । भाष्ये—कर्मणि विधीयते य इति । कर्मवद्भावप्राप्त इति भाव । उत्पुच्छयते गामिति। 'कर्तुरीप्सिततम'मिति कर्मत्वं बोध्यम्॥[णिश्रिद्रुस्रुभ्य कर्तरि चङ्]॥

अस्यतिवक्ति। ननु परस्मैपदेष्वङ्दर्शनादात्मनेपदार्थमित्ययुक्तमत आह—पुषा-

१ इदं क्वचिन्न ।

'पच्यन्ते ओदनाः' इति। भावे पुनरेकवचनमेव—आस्यते भवता, आस्यते भवद्भ्याम्, आस्यते भवद्भिरिति, केनैतदेवं भवति ?॥ कर्माऽनेकम्, तस्याऽनेकत्वाद्द्विवचनबहुवचनानि भवन्ति। भाव. पुनरेक एव॥ कथं तर्हीह

प्र ]यथा 'पश्य मृगो धावती'ति मृगकर्तृकाया सरणक्रियायाः॥ केनैतदिति। इह क्रियाप्रधानमाख्यातम्। सा च क्रिया साध्यरूपत्वान्निवृत्तभेदा। तदुक्तम्—'निवृत्तभेदा सर्वैव क्रियाऽऽख्यातेऽभिधीयते। श्रुतेरवाक्या भेदानां प्रविभागप्रकल्पना'-इति॥ ननु यथा साधनभेदात्कर्तृकर्माभिधायिनि लकारे द्विवचनबहुवचने भवतस्तथा भावाभिधायिन्यपि प्रसज्येते। अथैकपदवाच्यसाधनसङ्ख्याश्रये द्विवचनबहुवचने भवत इति पक्षस्तदा पाकौ पाका इत्यत्र न प्राप्नुतः, साधनस्य घञाऽनभिधानादिति प्रश्नः॥ कर्मानेकमिति। कर्मशक्त्याधारो द्रव्यमनेकम्। शक्तिशक्तिमतोश्च शब्देन भेदो न प्रतिपाद्यत इति शक्त्यभिधायिनाऽप्याख्यातेनौदनः पच्यत इति शक्तिमद्द्रव्यवाचिन ओदनशब्दस्य सामानाधिकरण्यं भवति॥ भावः पुनरिति। भेदाऽभावलक्षणमभेदैकत्वं भावस्य, न त्वेकत्वसङ्ख्याऽऽख्यातवाच्यस्य भाव-

उ ]सार्वधातुके यक्। इति कर्मणि विधानाद्बहुत्वात्तद्दर्शयति—वक्ष्यमाणस्येति। वाक्यार्थ—क्रिया। सा चेह येनैतदेवम्भवतीत्येतद्रूपा। सरणं—धावनम्। अध्याहृतधावनादिति। परोपस्थाप्यस्य कर्मत्वमित्यन्यत्रोक्तम्। ननु भावस्य क्रियारूपस्य सङ्ख्ययाऽयोगान्न द्विवचनादिकं भविष्यति। कर्मणि तु शक्तिशक्तिमतोरभेदोपचाराच्छक्तिगत्या सङ्ख्यायोगाद्द्विवचनादिकं सेत्स्यतीत्यत आह—इहेति। श्रुतेरिति। साधनादिभेदाद्भिन्नेऽपि श्रुतेराख्यातशब्दात् प्रविभागकल्पना भेदावगमरूपाऽशक्येत्यर्थः। कथं तर्हि द्विवचनादिकं, तत्राह—तत्रेति। साधनभेदादिति। साधनभेदकृतभेदारोपादित्यर्थः। अथैकेति। शब्दशक्तिस्वभावादिति भावः।

तदा पाकाविति। क्रियारूपस्य स्वतः सङ्ख्यासम्बन्धाऽभावादिति तात्पर्यम्। ननु कर्मपदस्य शक्त्यभिधायित्वाच्छक्तेश्च विभक्तिवाच्यायाः अस्वभूतत्वात्सङ्ख्यायोगाऽभावेना'नेक'मित्यनुपपन्नमत आह—कर्मशक्तीति। शब्देनेति। न हि 'पटस्य शुक्ल' इतिवत् 'पटस्य कर्मे'ति प्रयोगोऽस्तीति भावः। तदेवाह—सामानाधिकरण्यमिति। कर्मादिपदं शक्तिमदभेदमापन्नैव शक्तिरुच्यते। अत एव 'कर्मत्व'मिति भावप्रत्ययेन शक्तिरुच्यते। प्रवृत्तिनिमित्तेन व्यक्तेस्तादात्म्यसम्बन्धस्याऽङ्गीकारादिति तत्त्वम्। एवञ्च कर्मणि निर्धाक्वनाऽऽख्यातेनाऽपि तथैव शक्तिरुच्यत इति सामानाधिकरण्योपपत्तिरिति भावः। ननु भावस्यैकत्वयोगे द्वित्वादियोगोऽपि स्यादत आह—भेदाऽभावेति। परे तस्यैवैकत्वसङ्ख्या क्रियायाम्। असत्त्वनयतो-

१ इदं क्वचिन्न। २ 'लक्षणमेकत्वं'।

नस्तेऽपि बहव शब्दा सरूपाश्च। तत्र युक्त बहुवचनमेकशेषश्च ॥ तिङभि-

प्र ]धिकरण्याचेख्यातवाच्यभावभेदाद्यम्न्त इति बहुवचनमित्यर्थ ।इवशब्दप्रयोग-मन्तरेणाऽपि चेवार्थगतिर्भवति । तदयमर्थ —यादृशान्युच्चणमनेकप्रकाराण्शासनानि तादृशानि देवदत्तादिभि क्रियन्त इति॥ 'भवद्भिरासने' इत्यत्र त्वाश्रयभेदादाश्रितभेदस्य प्रतिपत्तत्वात् प्रयोजनाऽभावाद्भावो भेद नोपादत्त इत्येकवचनमेव भवति । यथा 'तत्र पलाशेषु बभूव राग' इति । न च सर्वत्राश्रयभेदादाश्रितभेदस्य प्रतीति , 'पदान् पचती'त्यादौ पाकस्याऽभिन्नत्वेनावगमात्॥ केचित्तूष्ट्रासिका आस्यन्त इति कर्मणि लकारमिच्छन्ति उष्ट्रासिकाऽभ्रणस्य भावस्य कर्मत्वात् । यथा 'गोदोहः सुप्यते' इति । एव ॥ विवक्षान्तरे भवत्येवेति भाष्यकारेण भावेऽपि लविधाने बहुवचनमुपपादितम् ॥ तेऽपि बहव इति । भिन्नकालत्वादेवेति भाव ॥ तत्र युक्त मिति । शास्त्रेणैकशेषे सत्येकस्याऽनेकार्थाभिधायित्वादन्तरेण वैकशेषारम्भ सह-

उ ]म्भव ,तत्प्रतिपादने फलाभावोऽर्थ । 'तत्सामानाधिकरण्याच्चे'ति पाठेऽप्ययमेवार्थ । उपमानोपमेययो सामानाधिकरण्यादित्यर्थ । ननु साम्यवाचकेवाद्यभावात्कथ तत्प्रतीतिरत आह—इवेति । 'परत्र परशब्द प्रयुक्त' इति न्यायादिति भाव । प्रयोज-नाऽभावादिति । प्रकृते तु साम्यप्रतीत्युपपादनमेव प्रयोजनमिति भाव । यथेति । पलाशरूपाश्रयाऽनेकत्वेऽपि 'राग' इत्येकवचनमेवेति भाव । वस्तुतस्तत्रैकजातीय रागप्रतिपादनार्थकवचनमिति बोध्यम् । विनाश्रयभेदादाश्रितभेदप्रतीतेरसार्वत्रिक-त्वादपि न सा भावाऽऽख्याते द्विवचनादिनियामिकेत्याह—न चेति।एवमासिका इत्यादि-क्रियाविशेषणमप्रथमान्तं। तिक्तविधिकारकस्थण्वुल तीत्वस्य सत्त्वेन'सामान्ये नपुसक'-मित्यस्याऽप्रवृत्त्या न क्लीबत्वम् । उपमानोष्ट्रासनाऽभिन्नान्यासनानीति बोध । बहु-त्वाऽवधारणाय नैकवचनमिति बोध्यम् । कर्मणीति । अत्र पक्षे आख्यानाऽयय-याऽऽमादे परिच्छेदकत्वनिरूपके आगमादौ वृत्ति । परिच्छेदकस्वरूपफलाश्रय त्वात्कर्मत्वम् , दृष्टान्ते व्याप्त्याश्रयादिव । परिच्छेदकत्वञ्च सादृश्येन । नाऽय भाष्यार्थ इत्याह—एवमिति । विवक्षान्तरे—आसे परिच्छेदत्वार्थरूपविवक्षा विशेषे । 'भावेऽपि लविधाने यदुपपादितं बहुवचनं भाष्यकारेण तच्चोपपादित स्या'दिति शेष । एवञ्च यथा पाकप्रकारानभिसमीक्ष्य पाकावित्यादि द्विवचनादेव मासनप्रकारानभिसमीक्ष्याऽऽस्यन्त इत्यादि भावे बहुवचनमिति भाष्यार्थ ।आख्यात-वाच्येऽसत्त्वे लिङ्गकारकाऽनन्वयितमेव बोध्यम् । भिन्नकालत्वादिति । भिन्न कालगर्भवाचकत्वादित्यर्थ । नन्वेकशेषमात्रेणाऽविद्यमानाऽनेकार्थोऽभिधानशक्ति कथमत आह—अन्तरेण चेति । तिङभिहिते चापीत्यादि भाष्ये । तिङन्तार्थे भावे

१ 'तत्साम्याच्च' ।

हिते चापि तदा भावेऽस्यास्त्यादेकशेषो न भवति—आसि, आस्यते, आसि ष्यते इति ॥ अस्ति खल्वपि विशेषः कृदभिहितस्य भावस्य तिङभिहितस्य च । कृदभिहितो भावो द्रव्यवद्भवति॥ किमिदं 'द्रव्यव'दिति?॥द्रव्यं क्रियया समवायं गच्छति ॥ क समवायं गच्छति ?॥द्रव्यं क्रियाभिनिर्वृत्तौ साधनत्वमुपैति। तद्वच्चाऽस्य भावस्य कृदभिहितस्य भवति–'पाको वर्तते' इति । क्रियावच्च भवति ॥ किमिदं क्रियावदिति ? ॥ क्रिया क्रियया समवायं न गच्छति–पचति पठतीति। तद्वच्चास्य कृदभिहितस्य न भवति–'पाको वर्तते' इति ॥ अस्ति खल्वपि विशेषः–कृदभिहितस्य भावस्य, तिङभिहितस्य च ।

प्र ]त्ययमेकस्यैव स्वभावतोऽनेकार्थत्वादिति भावः । तिङभिहित इति । ननु तिङन्तमनेककालभवप्रत्यायने समर्थं किंचिदस्तीति भिन्नकालसनक्रियाप्रत्यायनाय भिन्ना एव शब्दाः प्रयुज्यन्त इति भावः ॥ द्रव्यवदिति । द्रव्यत्वेन प्रसिद्धो यो घटादिस्तद्वदयं भावो भवति, लिङ्गसंख्याकारकसम्बन्धप्रतिपत्त्या । तत्र 'वस्तूप॰ लक्षणं यत्रे'ति द्रव्यलक्षणतोऽपि प्रसिद्धप्रसिद्धयोः उपमानोपमेयभावः ॥

क्रिया क्रिययेति । ननु 'भवति पचति' 'पश्य मृगो धावती'ति कर्तृकर्मभावेन क्रिया क्रियया सम्बध्यत एव । एवं तर्हि करणादिरूपेण समवायं न गच्छतीति विव क्षितम् ॥ ननु साध्यत्वात् क्रियायाः कथं क्रियान्तरं प्रति कर्मकर्तृभावः ? । विषय-भेदादेकस्याप्यर्थस्य साध्यमानत्वमसन्नत्वमभवाद्दोषः ॥ तदुक्तं हरिणा—'तत्र य प्रति साध्यत्वमसिद्धा त प्रति क्रिया । सिद्धा तु यस्मिन् साध्या च न तमेव पुन प्रति ॥ 'मृगो धावति पश्ये'ति साध्यसाधनरूपता । यथा विषयभेदेन स्मरणस्यावरुध्यते'॥ इति । तत्र कर्तृकर्मत्वसाध्यत्वात्तस्य भावस्य न विरुद्धम् ।

उ ]तयान्वयोऽपि कालभेदेन भवत्यसाम्यादेकशेषाऽभावेन न बहुवचनादीत्यर्थः । तदे-वोपपादयति–न ह्येकमिति । इत परं भिन्नद्रव्यास्यसाधनादिकृतभेदेन भेदावगम कृदन्तेऽस्मि,न तिङन्ते इत्यत्र बीजभूतं तयोर्वैषम्यमाह–अस्ति खल्वपीति भाष्ये । ननु लिङ्गसंख्यान्वयित्वेनैव द्रव्यत्वासिद्धेर्वतिरनुपपन्नोऽत आह–सत्वेति । भाष्ये क्रियया समवायमिति । क्रियानिरूपितकर्मादिसंज्ञासमानाधिकरणशक्तिभिः सम्बन्धं गच्छतीत्यर्थः । द्रव्यं क्रियाऽभिनिर्वृत्तौ साधनत्वमित्यस्य कारकशक्तिमत्त्वमि-त्यर्थः । करणादिरूपेणेति । कृदन्ते 'पाकेन वैर कृत'मित्यादौ तथान्वयादिति भावः । ननु साध्यत्वादिति । असिद्धस्य जनकत्वाऽसम्भवादिति भावः । सिद्धा त्विति । यन्निरूपितं सिद्धत्वं तमेव प्रति पुनः साध्यत्वं नेत्यन्वयः । एवञ्चाऽन्यनिरूपितसिद्ध-त्वेऽप्यन्यनिरूपितं साध्यत्वं सम्भवत्येवेति भावः । तथा विषयेति । तथा सति

१ 'तया' । २ इद क्वचिन्न ।

तिङभिहितेन भावेन कालपुरुषोपग्रहा अभिव्यज्यन्ते, कृदभिहितेन पुनर्न व्यज्यन्ते ॥ अस्ति खल्वपि विशेष –कृदभिहितस्य भावस्य, तिङभिहितस्य च–तिङभिहितो भावः कर्त्रा संप्रयुज्यते, कृदभिहितः पुनर्न सम्प्रयुज्यते। यावता किंचिच्च सामान्य कश्चिच्च विशेषो युक्तं यदयमपि विशेष स्यात्–

प्र ]तथा हि–भवतिक्रियापेक्षमेव तस्य कर्तृत्वम् । सर्वथार्थः स्वेन रूपेण भवतीति भवने कर्तृत्वमुपपन्नम् । एवं कर्मापि क्रियाफलत्वात् प्रधानमिति कर्म कनपि तस्यो पपद्यते । करणादीनि तु सर्वात्मना गुणभावमन्तरेण नोपपद्यन्त इति प्राधान्ये- नाऽत्यन्तविरोधात्तस्य नोपपद्यन्ते॥कालेति । पुरुषशब्देन तदर्थ , प्रैत्यक्परागभा वधोच्यते । उपग्रह –अनेकप्रकार स्वार्थपरार्थत्वादिक ॥कृदभिहित इति । ननु कृदभिहितस्यापि भावस्य भवति कर्त्रा योग , यथा 'ब्राह्मणानां प्रादुर्भाव' इति ॥ तत्राह् —एकपदवाच्येन कर्त्रा न युज्यते, यथा पचतीति कर्ता वाच्यो, नैवं पाक इति । शुद्धस्यैव भावस्य प्रत्यायनात् । अथ वा घञादिभि सिद्धरूपता भावस्या-

उ ]विषयभेदेनेत्यर्थ । क्रियाफलत्वादिति । अर्थ आयत्ता तद्रूपत्वादित्यर्थ । तस्य क्षाख्यानवाच्यभावस्याऽन्वयस्त्वीदृशो विपर्ययेऽन्यत्राऽऽग्रहश्चैव, 'ज्योतिष्टोमेन यजेते'त्यादौ करणत्वेनाऽन्वयमत्त्वेऽपि स्वघटितपदाऽवाच्यक्रियायां तत्त्वाऽभाव एवेति बोध्यम् । गुणभावमिति । इदं चिन्त्यं, कर्मण क्रियाफलाश्रयत्वादिव कर्तु क्रियाश्रयत्वादिव च प्राधान्यवत् करणस्यापि स्वव्यापाराऽव्यवधानेन फलोत्पादकत्व याऽन्यकारकापेक्षया प्राधान्यमस्त्येव। न हि कर्तृकर्मणो प्राधान्यमेवाभ्रयणीयं नेत- रस्येत्यत्रास्मिन्नन मानमिति । तस्मात्स्वभावत एव तदन्वयाऽभाव इति बोध्यम् । एवं करणत्वोद्देश्यत्वावधित्वैरन्वयित्वेन कृदभिहितो भावो द्रव्यधर्मैव, तिङभिहितस्तु तद्विरुद्ध एवेति बोध्यम् । अस्यैवार्थस्य साधकं वैधर्म्यान्तरं दर्शयति–कालपुरुषे त्यादि । असत्त्वभूताया एवैतत्सम्भव इति भाव । प्रत्यक् मुत्तमे, पराक् मध्यमे। प्रत्यक–स्वगतत्वं, पराक–मयोध्यगतत्वम् । युष्मदस्मदध्वनिरेवेणपि मध्यमोत्तमाभ्यां तद्बोध । स्वार्थत्वपरार्थत्वादिकमपि बोधविषय इति भाव । भाष्ये–कर्त्रा सम्प्र- युज्यत इति । तिङन्तवाच्यो भावो नियमेन कर्त्राकाङ्क्ष , कृदुपात्तस्तु न तथा । न हि 'पाको' 'राग' इत्युक्ते 'कस्ये'ति नियमेन कर्त्राकाङ्क्षा दृश्यते । नापि तस्य नियमेन प्रयोगो दृश्यते। इदमेव ध्वनयितु 'सम्' 'प्र' इत्युपसर्गद्वयोपादानमित्यर्थो मम भाति । यतश्च क्रियात्व सामान्यमुभयत्राऽपि, साध्यत्वसिद्धत्वकृतश्च पूर्वोक्तो विशेषो दृश्यते तथाऽयमपि । यत्तिङर्थस्य भावस्य लिङ्गवाच्यसाधनत्वसङ्ख्यायोग्यता, कृद- र्थस्य तु तद्योग्यतेति भाष्यार्थ । ब्राह्मणानामिति–कर्तरि षष्ठी । एकपदेति ।

१ 'ग्रहा व्यज्यन्ते' । २ 'प्रत्यनाऽपरभाव' । ३ 'एवञ्च' ।

भावकर्मकर्तारोऽपि ॥ सन्तु तर्हि विकरणार्थाः ॥४॥ विकरणार्था इति चेत् कृताऽभिहिते विकरणाऽभावः ॥५॥ विकरणार्था इति चेत्कृताऽभिहिते विकरणो न प्राप्नोति–धारय पारय इति ॥ किमुच्यते 'कृताऽभिहित' इति, न लेनाप्यभिधानं भवति ?॥ न शक्यं लेनाऽभिधानमाश्रयितुम् । पक्षान्तरमिदमाश्रितं 'भावकर्मकर्तारः सार्वधातुकार्था वा स्युर्विकरणार्था वे'ति, यदि च लेनाऽप्यभिधानं स्यात्नेदं पक्षान्तरं स्यात् ॥ कथमशक्यं यदा भवानेवाह–लः कर्मणि च भावे चाऽकर्मकेभ्य' इति?॥ एवं वक्ष्यामि 'लः कर्मणो भावाचाऽकर्मकेभ्य' इति ॥ यस्मिंस्तर्हि ले विकरणा न श्रूयन्ते कस्तत्र भावकर्मकर्तॄनभिधास्यति ? ॥ क च न श्रूयन्ते ? ॥ य एते लुग्विकरणा श्लुविकर-

प्र ]यते न तान्येवैकत्वादीन्यर्थः । अपि तु कर्त्रादयोऽपीत्यर्थः । कृताऽभिहित इति। क्वचिदेव कृति विकरणो विधीयते न सर्वत्रेति कृत एव 'कर्तरि कृ'दिति कर्तार्थो निर्दिश्यते, तेनैव च कर्तुरुक्तत्वात्तदभिधायी विकरणो न प्राप्नोति। तत्र 'धारय' इत्यादावमनि शपि गुणो न स्यात् । न लेनापीति। 'लः कर्मणि चे'ति वचनाल्लादेशैरपि कर्त्रादेरभिधानमिति तत्रापि विकरणाऽप्राप्तिः किं न चोद्यत इत्यर्थः । ततो 'लः कर्मणी'ति वचनात्कर्त्रादीनां विकरणार्थत्वं नैव सम्भवतीत्युक्तं भवति। एवं वक्ष्यामीति । व्याख्यास्यामीत्यर्थः । लः कर्मणीति । कर्मणि वर्तमानाद्विकरणादिति व्याख्यास्यत इत्यर्थः । तत्र कर्माभिधायी विकरणः 'कर्म'शब्देन भाष्य उक्तः । ननु सार्वधातुकनिमित्तो विकरणो न तु विकरणनिमित्तो लकारः, तत्कथमेवं व्याख्यायते?॥ एव

उ ]न तान्येवेति। न तानि एवाऽर्थो यस्येति विग्रह इत्यर्थः ।तत्पदार्थमाह–एकत्वादीनीति । तन्मानार्थत्वाऽभावादित्यर्थ इति तात्पर्यम् । ननु विकरणानां तदर्थत्वे 'कृताऽभिहित' इत्यनुपपन्नम् अाह–क्वचिदेवेति । एवञ्च सर्वत्र विकरणाऽभावात् कृतां तेषु शक्तिकल्पनाऽऽवश्यकीति भावः । विकरणार्थत्वपक्षे शङ्कते भाष्ये–किमुच्यते कृतेत्यादिना । इतर आह–न शक्यमिति । तत्र तदुक्तदूषणे 'कृते'त्ययुक्तम्, 'अभिहिते' इत्येव युक्तमित्याह–पक्षान्तरमिति । यदि चेति । यदि लेनाऽभिधानं स्यान्नेदम्पक्षान्तरं स्यादित्यर्थः । कथमिति । पक्षान्तरत्वाऽसम्भवेऽपि लेनाऽभिधानमाश्रयितुं कथमशक्यमित्यर्थः । तदाश्रयणस्य शक्यत्वमुपपादयति–यदा भवानेवेति । तथाचष्टे–ततो ल इति । अत एव लिङादिषु कर्त्राद्यर्थावगतिरिति बोध्यम् । इतरोऽशक्यत्वमुपपादयति–एवं वक्ष्यामीत्यादिना । 'लः कर्मणि' इति न्यासे गौरवं, सूत्रभेदश्च स्यादत आह–व्याख्यास्यामीति ।

उक्तेऽर्थे भाष्यं योजयति–तत्र कर्मेति । कृते लकारे इति। 'वर्तमाने लँ'डि-

१ 'अशक्यं' । २ 'भवानाह' ।

कृत्वैकपक्षीभूतमेवेद भवति–'सार्वधातुकार्था एवे'ति ॥ ननु चोक्त 'भाव-कर्मकर्तारः सार्वधातुकार्था इति चेदेकद्विबहुषु नियमानुपपत्तिरतदर्थत्वा'दि-ति ?॥ नैष दोष । ॥*॥ सुपा कर्मादयोऽप्यर्था सङ्ख्या चैव तथा तिङाम् ॥*॥ सुपा तिङा च सङ्ख्या चैवार्थ , कर्मादयश्च ॥*॥ प्रसिद्धो नियमस्तत्र ॥*॥ प्रसिद्धस्तत्र नियम । ॥*॥नियम प्रकृतेषु वा ॥*॥ अथ वा प्रकृतानर्थान-पेक्ष्य नियम ॥ के च प्रकृता ?॥ एकत्वादय । 'एकस्मिन्नेवैकवचन, न द्वयोर्न बहुषु' । 'द्वयोरेव द्विवचन, नैकस्मिन्न बहुषु ।'बहुष्वेव बहुवचन, नैकस्मिन्न द्वयो'रिति॥ ॥*॥ भावकर्मणोर्यग्विधाने कर्मकर्तर्युपसङ्ख्यानम्॥*॥ भावकर्मणो

प्र ]भेदो युक्त । एकस्मिस्तु पदे विरुद्धार्थयोर्विकरणसार्वधातुकयोर्विशिष्टार्थप्रतिपादने साहायकाऽभावात्परस्परानुपकारादप्रयोग एव स्यात् ।तथा हि–'पचती'ति क्रियाविशिष्ट कर्ताऽभिधीयते। 'पच्यते' इति क्रियाविशिष्ट कर्म । न त्वेकेन साधनद्वय क्रियाविशिष्ट प्रतिपादयितु शक्यते । एकपक्षीभूतमिति । एक एव पक्ष –सार्वधातुकार्था कर्मादय इत्यर्थ । पूर्वभागाऽपेक्षश्च चिवप्रत्ययनिर्देश । प्रसिद्धो नियम इति । अर्थनियम इत्यर्थ । कर्माद्यर्थान्तरनिर्देशात्तै प्रत्ययनियम प्रमाणसिद्ध । तत्रै कत्व एकवचनमेवेत्येवमेकत्वादिरर्थो नियम्यते न तु प्रत्यय इति तस्याऽर्थान्तरमपि कर्मादि न विरुध्यते । अथ वेति । कर्माद्यर्थविधानसामर्थ्यात्तुल्य नानीयसङ्ख्यापेक्ष एव नियम इत्यर्थ । कर्मकर्तरीति । 'कर्मव'दित्यनिर्देशेन स्वाश्रयस्य कार्यस्या-

उ ] अयम्भाव —'पच'तीत्यादौ'प्रत्ययार्थ प्रधान'मित्युत्सर्गरीत्या द्वयोरपि प्रत्ययार्थयो प्राधान्ये एकत्र विशेषणतयाऽन्वितप्रकृतेरपरत्र विशेषणतया सबन्धो व्युत्पत्तिविरुद्ध ,तदर्थाऽनालिङ्गितप्रत्ययार्थभानमप्युक्तव्युत्पत्तिविरुद्धमित्यय पक्षोऽसङ्गत इति भाव । विशिष्टार्थप्रतिपादने साहायकाऽभावादिति । 'प्रकृते'रिति शेष । परस्परेति । प्रकृतिप्रत्यययोरित्यर्थ ।पचतीति।आख्याते धात्वर्थविशिष्टक्रियाप्राधान्यादिद-चिन्त्यम्।भाष्यन्तु 'पचन्''पच्यमान' इत्याद्यभिप्रायकतया नेयम् । कैयटे 'पचती'-त्याद्यपि 'पच'तीत्यादेरुपलक्षण वा । 'सहायीभाव' इत्यत्र च्विरतद्भावे तस्या-समहायत्वादुपपन्न । केचित्तु–'क्रियाविशिष्ट'इत्यस्य क्रियासहित इत्यर्थ ।कर्तृविशेषणिका कर्मविशेषणिका चेति यावत् । एतेन चोभयविशेषणिका क्रिया न प्रतिपादयितु शक्येति भाष्यार्थमाहु । तच्चिन्त्यम् । न त्वेकेनेति । धातुनेत्यर्थ । अत्र केचित्–सुपामिव तिङामपि कर्मादिद्योतकत्वमेव, भाष्यमत्राऽपि सुयोजमेवेत्याहु'। निरूपितश्चैतद्विस्तरेण मञ्जूषायामाख्यातवादे । भाष्ये–प्रसिद्धो नियमस्तत्रेति । तत्र–अर्थविषये । यत सुपा तिङाञ्चाऽर्थद्वय दृश्यतेऽत प्रत्ययनियमाऽसम्भवा-

१ 'धांश्चेदेक' । २ श्लोकवार्त्तिकम् । ३ 'शक्नु न' । ४ 'तथा' । ५ 'सहा' ।

यंग्विधाने कर्मकर्तर्युपसङ्ख्यानं कर्तव्यम् । पच्यते ओदनः स्वयमेव । पच्यते विद्या स्वयमेव ॥ किं पुनः कारणं न सिध्यति ? ॥*॥ विप्रतिषेधाद्धि शपो बलीयस्त्वम् ॥*॥ विप्रतिषेधाद्धि शपो बलीयस्त्वं प्राप्नोति । शपोऽवकाशः –पचति पठति । यकोऽवकाशः –पच्यते ओदनो देवदत्तेन, पठ्यते विद्या देवदत्तेनेति । इहोभयं प्राप्नोति–पच्यते ओदनः स्वयमेव,पठ्यते विद्या स्वयमेवेति।परत्वाच्छप्प्राप्नोति॥*॥योगविभागात्सिद्धम्॥*॥योगविभागः करिष्यते–'चिण्भावकर्मणोः'। [ततः]'सार्वधातुके यक्' । सार्वधातुके यग्भावकर्मणोः । ततः 'कर्तरि' । कर्तरि च यग्भवति भावकर्मणोः ॥ यद्येवं तर्हि कर्मणि कर्तरि यग्भवत्येव भावे कर्तरि प्राप्नोति ।'एति जीवन्तमानन्दो नरं वर्षशतादपि' । 'नास्य किं चिद्रुजति रोगो इति॥द्वितीयो योगविभागः करिष्यते । 'चिण्भावे'। ततः 'कर्मणि' । कर्मणि च चिण्भवतीति । ततः –'सार्वधातुके यक्' । सार्वधातुके यग्भवति भावे च कर्मणि च ॥ ततः 'कर्तरि' । कर्तरि च यग्भवति । 'कर्मणी'त्यनुवर्तते, 'भाव' इति निवृत्तम् । ततः –'शप्' । शप् च भवति । 'कर्तरी'त्येव । 'कर्मणी'त्यपि निवृत्तम् । एवमप्युपसङ्ख्यानं कर्तव्यम् । [॥*॥ विप्रतिषेधाद्धि श्यनो बलीयस्त्वम् ॥*]॥विप्रतिषेधाद्धि श्यनो बलीयस्त्वं प्राप्नोति । श्यनोऽवकाशः –दीव्यति सीव्यतीति। यकोऽवकाशः –पच्यते ओदनो देवदत्तेन, पठ्यते विद्या देवदत्तेनेति । इहोभयं प्राप्नोति–दीव्यते स्वयमेव, साध्यते स्वयमेवेति । परत्वाच्छ्यन्प्राप्नोति ॥ ननु चैतदपि योगविभागेनैव सिद्धम् ॥ न सिध्यति । अनन्तरा या प्राप्तिः सा योगविभागेन शक्या

प्र ]ऽनानन्तर्ये कर्माभावविकरणप्राप्तौ वचनम्। विप्रतिषेधाद्धीति । यत्र शास्त्रातिदेशः पक्षस्तदा शपो बलीयस्त्वम् । कार्यातिदेशे तु यक एव बलीयस्त्वम् । ननु चेति ।

उ ]दिति भावः । नियम इत्यर्थ इति । प्रत्ययनियम इत्यर्थः । ननु कर्मवद्भावादेव यक् सिद्धोऽत आह–कर्मवदिति । स्वाश्रयस्य कार्यस्येति । परत्वेन श्यन्न इत्यर्थः । अतिदेशस्या सतिपक्षदीनेन पतिना चारितार्थ्य इति भावः । बलीयस्त्वमिति । 'कर्मवदिति सूत्रस्य परत्वादिति शेषः । वस्तुतः कार्यातिदेशेऽप्यतिदेश्यमान कार्याणामुपनिदेश एव देश इति प्रत्ययस्य तस्मिन्नोक्तरीत्या भाष्यं समञ्जसमेव । भाष्ये एवमप्युपसङ्ख्यानं कर्तव्यमिति । कर्मकर्तर्युपसङ्ख्यानमित्यर्थः ।[भाष्ये]–

१ इद क्वचिन्न । २ इति क्वचिन्न । ३ 'योगविभागात्सिद्धमेतत्' इत्येवमस्य व्याख्या युक्ता स्यात् । ४ 'ततः सार्वधातुके यक्' इति क्वचिन्न । ५'भावेऽपि'। ६ 'यक्प्राप्नोति' । ७ इद क्वचिन्न । ८ 'कर्मणीति' । ९ इदं वार्त्तिकं लुप्त प्राय । १० इति क्वचिन्न । ११ 'स्वदेव' । १२ 'शक्यते निवारयितुं' ।

बाधितुम् ॥ कुत एतत् ? ॥ 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे'ति ॥ परा प्राप्तिरप्रतिषिद्धा तया प्राप्नोति ॥ ननु चेयं प्राप्तिः परां प्राप्तिं बाधेत ॥ नोत्सहते प्रतिषिद्धा सती बाधितुम् ॥ एवं तर्हि शबादेशाः श्यनादयः करिष्यन्ते, शप् च यका बाध्यते।तत्र दिवादिभ्यो यग्विषये शबेव नास्ति कुतः श्यनादयः ? ॥ तर्हि शपो ग्रहणं कर्तव्यम् ? ॥ न कर्तव्यम् ॥ प्रकृतमनुवर्तते ॥ क्व प्रकृतम् ? ॥ 'कर्तरि श'बिति ॥ तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः ॥ 'दिवादिभ्य' इत्येषा पञ्चमी 'श'बिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति—'तस्मादित्युत्तरस्ये'ति॥ प्रत्ययविधिरयं, न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति ॥ नाऽयं प्रत्ययविधिः, विहितः प्रत्ययः, प्रकृतश्चानुवर्तते ॥

अथ वा—॥*॥ भावकर्मणोरित्यनुवृत्तेरेव सिद्धं सत्यनुवृत्तिर्वचो भावाय ॥*॥ इह सार्वधातुके यगित्यन्तरेण भावकर्मणोरित्यनुवृत्तिं सिद्धम्। सोऽयमेवं सिद्धे सति यद्भावकर्मणोरित्यनुवर्तयति तस्यैतत्प्रयोजनं 'कर्मकर्तर्यपि यग्यथा स्या'दिति ॥ ॥ कर्तरीति च योगविभागः श्यनः पूर्वविप्रतिषेधाऽवचनाय ॥*॥ कर्तरीति च योगविभागः कर्तव्यः,—श्यनः पूर्वविप्रतिषेधं मा वोचमिति ॥

अथ वा कर्मवद्भाववचनसामर्थ्याद्यग्भविष्यति॥ अस्त्यन्यत्कर्मवद्भाववचने

---

प्र.]सर्वा प्राप्तिर्योगविभागेन बाधिष्यत इति भावः। परा प्राप्तिरिति। परत्वाद्बलीयस्त्वादित्यर्थः। ननु चेयमिति। योगविभागप्राप्तिः पूर्वविप्रतिषेधेन बाधिका भविष्यतीत्यर्थः। नोत्सहत इति। न्याय्यविप्रतिषेधाश्रयणस्य युक्तत्वाद्दुर्बलो योगविभागप्राप्तिः इत्यर्थः। इहेति। 'सार्वधातुके यग्भवती'ति सामान्योक्तावपि कर्तरि शबाद्यपवादविधानाद्भावकर्मणोरेव यग्भविष्यतीति भावकर्मानुवृत्तिरधिको यत्न इति कर्मकर्तर्यपि यग्भविष्यतीत्यर्थः। अत्रापि व्याख्याने योगविभागः कर्तव्य एवेत्याह—कर्तरीति चेति। अन्यथा भावकर्मानुवृत्तिपक्षाच्छ्यन एवानन्तरस्य बाधः स्यान्न तु श्य-

उ.]परत्वाच्छ्यनिति। श्यन्यको स्वरे विशेषः। सर्वा प्राप्तिरिति। बाध्यसामान्यचिन्तयेति भावः। भाष्ये—अप्रतिषिद्धेति। अबाधितेत्यर्थः। नोत्सहते प्रतिषिद्धेति। 'अनन्तरस्ये'ति न्यायेन तद्विषयाधीना कृता सती तां बाधितुं नोत्सहत इत्यर्थः। तद्युक्तताद्यनि—न्याय्येति। परविप्रतिषेधेनेत्यर्थः। पूर्वविप्रतिषेधवचने मानमिति भावः। ननु कर्तर्यपि यक्प्राप्तौ कथं सिद्धमत आह—सार्वधात्विति। भाष्ये—कर्मकर्तर्यपीति। 'पच्यते स्वयमेवे'त्यादौ शबादीन् बाधित्वेति भावः। भाष्ये पूर्वविप्रतिषेधं मा वोचमिति। अनेन पूर्वविप्रतिषेधोऽपूर्ववचनसाध्य इति

---

१ 'श्यन्प्राप्नोति'। २ 'श्यनादयः'। ३ 'अथ'। ४ 'त्यनुवृत्त्यैव'। 'त्यनुवृत्तिं विना'। ५ 'भावकर्मग्रहणमनु'। ६ 'य'गिति क्वचित्। ७ इति क्वचित्। ८ 'षेधवचनया'।

प्रयोजनम् ॥ किम् ?॥ आत्मनेपदं यथा स्यात् ॥ वचनादात्मनेपदं भविष्यति॥ चिण् तर्हि यथा स्यात् ॥ चिणपि वचनाद्भविष्यति ॥ चिण्वद्भावस्तर्हि यथा स्यात्?॥ नैकं प्रयोजनं योगारम्भं प्रयोजयति । तत्र कर्मवद्भाववचनसामर्थ्या-च्चण्भविष्यति॥ अथ वाऽऽचार्यप्रवृत्तिर्ज्ञापयति—'भवति कर्मकर्तरि यं गिति,यदयं 'न दुहस्नुनमां यक्चिणौ' इति यक्चिणोः प्रतिषेधं शास्ति॥ [सार्वधातुके यक्]।

## यसोऽनुपसर्गात् ॥ ३।१।७१ ॥

अनुपसर्गादिति किमर्थम् ?॥ आयस्यति प्रयस्यति ॥ ॥ अनुपसर्गादिति शक्यमकर्तुम् ॥१॥ कथमायस्यति प्रयस्यति[ति] ?॥ 'शमामष्टा'नामेतन्नियमार्थं भविष्यति—'समुदाङ्भ्यो यमो नाऽन्यपूर्वा'दिति ॥ [ शमाश्च ] ॥

## क्र्यादिभ्यः श्ना ॥३।१।८१ ॥

किमर्थं शकारः ?॥ ॥*॥ [शकारः] सार्वधातुकार्थः ॥१॥ शित्सार्वधातुकमिति सार्वधातुकसञ्ज्ञा,'सार्वधातुकमपि'दिति ङित्त्व, 'क्ङिती'ति गुणप्रतिषेधो यथा स्यात्—भिनत्ति छिनत्तीति॥ नैतदस्ति प्रयोजनं, सार्वधातुकार्द्धधातुकयोरङ्गस्य गुण उच्यते। यस्माच्च प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गसञ्ज्ञं भवति। यस्माच्चात्र प्रत्ययविधिर्न तत्प्रत्यये परतो, यश्च प्रत्यये परतो न तस्मात्प्रत्ययविधिः ॥

इदं तर्हि प्रयोजनम्—'आर्द्धधातुकसञ्ज्ञा मा भू'दिति ॥ किं च स्यात्?॥ वलादिलक्षण इडागमः स्यात् ॥ एतदपि नास्ति प्रयोजनम्, वलादेरार्द्धधातुक

प्र ]स्यादीनाम्। योगविभागेन तु नाऽपि बाधकम्। वचनादिति। 'कर्तरि कर्मव्यतिहारे' इत्यत 'कर्तरी'ति योगविभागात्,तत्र च कर्मग्रहणानुवर्तनादन्तरेणापि नियमात्मनेपदं भविष्यतीत्यर्थः । चिण्यति। चिण्ग्रहणेऽनुवर्तमाने पुनश्चिण्ग्रहणमधिकविधानार्थ-मिति कर्मकर्तर्यपि चिण्भविष्यतीत्यर्थः । नैकमिति । अन्यथा 'दुहिस्नौतु' इत्यनेन 'कर्मणा तुल्यक्रिये कर्ता'ति वाच्यं स्यादित्यर्थः । [सार्वधातुके ]

क्र्यादि । भिनत्तीति । भिदादिभ्यस्तत्प्रत्ययनिबन्धनो गुणो मा भूदिति ङित्त्व कल्पितमर्थं । यस्माच्चेति । भिदुशब्दादेरित्यर्थं । तस्यैव इवादित्वात्, न [illegible] तद्-

इ ] सूचयति । भाष्य—कर्मवद्भाववचनसामर्थ्यादिति । तत्सामर्थ्यादनन्तरस्यैवेति न्यायो नाऽऽश्रीयत । किन्तु बाधसामान्यचिन्तेति भाव । [सार्वधातुके यक् ]।

यसोऽनु। इदं विस्पष्टेन इत्यन्विधायकम्। 'समुदाङ्भ्यो यम' इति सोपसर्गविषयो नियम इति भाव । एतेन एव नियम कल्पन स्यादित्याशयान्तम्। तदाह—नाऽन्यपूर्वादिति। [ यसोऽनुपसर्गात् ] ॥

१ 'कर्मकर्तरि यक्भवतीति'। २ इदं भाष्यमेव न वर्त्तिकमित्यन्ये। ३ इदं छत्र सम्यक्। ४ 'प्रत्यये परतोऽङ्ग'। ५ 'स्माच्च प्रत्यय'।

स्याऽङ्गस्येड्उच्यते। यस्माच्च प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गसंज्ञ भवति। यस्माच्चात्र प्रत्ययविधिर्न तत्प्रत्यये परतो, यच्च प्रत्यये परतो, न तस्मात्प्रत्ययविधि ॥

अत उत्तर पठति-॥*॥ श्नमि शित्करण प्वादिह्रस्वार्थम् ॥*॥ श्नमि शित्करण क्रियते। [ किं प्रयोजन ?॥ 'प्वादिह्रस्वार्थम्' ]। प्वादीनां शिति ह्रस्वत्व यथा स्यात्-पृणन्ति मृणन्तीति। ॥*॥ न वा धात्वन्यत्वात् ॥*॥ न वा कर्तव्यम् ॥ किं कारणम् ?॥ 'धात्वन्यत्वात्'। धात्वन्तरं पृणिमृणी॥ यत्तर्हि न धात्वन्तर-यत्र भूम्या पृणसे॥नैष श्नम्। श एतं ह्रस्वत्वम्॥यदि श्नो ह्रस्वश्च स्वरो न सिध्यति-पृणसे। 'अदुपदेशाल्लसार्वधातुकमनुदात्त भवती'त्येष स्वरो न प्राप्नोति। तस्माच्छ्नमेव ॥ यदि श्नम्, 'श्नसोरल्लोप' इति लोप प्राप्नोति। 'उपधाया' इति वर्ततेऽनुपधात्वाच्च भविष्यति॥

न स शक्य उपधाया इति विज्ञातुम्। इह हि दोष स्यात्-भनक्ति भञ्जन्तीति। तस्माच्छ्न एव ह्रस्वत्वम्॥ [यत्तेष] स्वर कथम् ?॥ ॥*॥ बहुल पित्सार्वधातुक छन्दसि ॥*॥सार्वधातुकस्य बहुल छन्दसि पिच्च वक्तव्यम्। पितश्चाऽपित्त्व दृश्यते,-अपितश्च पित्त्वम्। पितस्तावदपित्त्व,-मातर प्रमिणीमि जनित्रीम्। अपित पित्त्व-शृणोत ग्रावाण ॥तत्तर्हि [श्नो]ह्रस्वत्व वक्तव्यम् ?॥ अवश्य छन्दसि ह्रस्वत्व वक्तव्यम्-'उपगायन्तु मा पत्नयो गर्भिणयो युवतय' इत्येवमर्थम् ॥ विशेषणार्थस्तर्हि॥ क्व विशेषणार्थेनार्थ ?॥

[illegible] ] ययवाद्विशब्दा प्रत्ययविधानम्। पृणन्तीति। पृ मृ इति क्र्यादिषु पठितौ, ताभ्या व्यत्ययेन श्नम्प्रत्यय। धात्वन्तरमिति। तौदादिकावित्यर्थ। पृणस इति। 'पृ वरणे' इति क्र्यादिस्तस्माद्व्यत्ययेन श्नम्यासौ। श इति। छान्दसमिति भाव। भनक्ति इति। 'श्नसोरल्लोप' इत्यस्याऽसिद्धवदत्राभादित्यसिद्धत्वादकारस्योपधात्वाऽभाव। प्रमिणामीति। मीञो 'मीनातेर्निगमे' इति ह्रस्व। मिपोऽपित्त्वादित्त्वे

उ ] रुधादिभ्य श्नम्। भाष्ये-आर्द्धधातुकस्याङ्गस्येति। अङ्गसंज्ञानिमित्तस्यार्द्धधातुकस्येत्यर्थ। पृणो क्र्यादित्वात्तयो श्नम् दुर्लभोऽत आह—व्यत्ययेनेति। 'इति क्र्यादि रिति,'क्रैयादिक' इति वा पाठ। ननु श्नसशोरे उपधात्व सुम्भञ्न अह-असिद्धत्वादिति। भाष्ये-पिच्च वक्तव्यमिति। एवञ्च तनाऽनुदात्तत्व सिद्धमिति

१ प्रत्यये परतोऽङ्ग'। २ इद क्वचित्। ३ इद प्राचिकम्'। ४ 'वक्तव्य। ५ 'धात्वन्तरे'। ६ 'भूम्या'। ७ 'एवैनङ्ग'। ८ 'लोप प्रसज्यत'। ९ 'न शक्य सुत'। १० इति क्वचित्। ११ 'एवैनह्रस्व'। १२ 'छन्दसि बहुल'। १३ धैवाऽपित्त्व। १४ 'जनयित्रीं'। १४ 'अपितश्च पित्त्व'। १६ 'विशेषणार्थं'।

'भाव्यन्तेर' इति॥ 'नाव्लोप' इ[तीय]मुच्यमाने यज्वाना यज्वानामित्यत्रापि प्रसज्येत ॥ दीर्घत्वे कृते न भविष्यति ॥ इदमिह सम्प्रधार्यं दीर्घत्वं क्रियतां नलोप' इति, किमत्र कर्तव्यम्?॥ परत्वान्नलोपः स्यात्। तस्मादाकारः कर्तव्यः।

अथ क्रियमाणे ऽप्याकारे इह कस्मान्न भवति निघ्नानां प्रघ्नानामिति ? ॥ 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति ॥ [इथादिभ्य श्नम् ] ॥

## तनादिकृञ्भ्य उः ॥ ३।१।७९ ॥

अथ किमर्थं कृञः पृथग्ग्रहणं क्रियते न 'तनादिभ्य' इत्येवोच्येत ?॥ अन्यानि तनोत्यादिकार्याणि मा भूवन्निति ॥ कानि?॥अनुनासिकलोपादीनि ॥ नैतदस्ति किमुक्तम् ॥ अनुनासिकाऽभावादेवानुनासिकलोपो न भविष्यति ॥ इदं तर्हि—तनादिकार्यं मा भूत्तनादिभ्यस्तथासोरिति ॥ ननु च भवत्येवाऽत्र 'ह्रस्वादङ्गा'दिति ॥ तेनैव यथा स्यादनेन मा भूदिति ॥ कश्चात्र विशेषस्तेन वा सत्यनेन वा?॥तेन सति सिज्लोपस्याऽसिद्धत्वाच्चिण्वद्भाव सिद्धो भवति। अनेन पुनः सति चिण्वद्भावो न स्यात् ॥ अनेनाऽपि सति चिण्वद्भावः सिद्धः । कथम् ?॥ विभाषा लुक्। यदा न लुक्तदा तेन लोपः । तत्र सि

प्र ]सर्वान्तम । परत्वादिति। यत्तु सुपि च त्व दीर्घ च तत् साकाशानत्वरणपरिभाषा वशान्न प्रवर्तते । यत्त्वन्यत्रोक्तं 'नामि दीर्घात्परत्वात् सुपि चेति भवितव्य'मिति तल्लक्षितानपरिभाषाया अनित्यत्वाश्रयेणेति न विरोधः । लक्षणेति । लाक्षणिकस्या ऽनुमीयमानत्वात्प्रतिपदोक्तस्य तु प्रत्यक्षत्वादिति भावः । [ इथादिभ्य श्नम् ]॥

तनादि । विभाषा लुगिति। ननु यत्र नाप्राप्ति न्यायेन लुक्स 'ह्रस्वादङ्गा'दिति

उ ]न्य। अनित्यत्वाश्रयणमिति। ननु तन्मूत्रविषय तत्परिभाषाया 'कष्टाय'रसा दिनिर्देशेनानित्यत्वादयन्त्वनाऽऽन्विषयेऽपि तत्त्वमाश्रित्य न प्रत्याख्येय इति चेन्न, नलोपविषयकत्वाऽवयवश्रुत परस्य नस्य लोपं इत्यर्थे निमित्तत्वाऽनपेक्षत्वेन, 'सुपि चे'त्यस्य परनिमित्तत्वेन बहिरङ्गत्वेन तस्याऽसिद्धतया नलोपप्राप्तेरित्याहु यात् । भाष्ये-परत्वादिति । अन्तरङ्गत्वस्याऽप्युपलक्षणम् । किञ्च 'सुपि चे'त्यतो 'भानी'ति नित्य विनेयाऽभावेऽपि शास्त्रप्राप्ते सत्त्वात् । ध्वनितञ्चेदं मायादन्' इति सूत्र 'इको यणचि'त्यत्र च भाष्ये इति वदन्ति ॥ [ इथादिभ्य श्नम् ] ॥

तनादिकृञ्भ्य । भाष्ये-अनेन माभूदिति । अन्यथा तस्याऽसिद्धत्वादनेनैव स्यादिति भावः । ननु येन नति । न च 'ह्रस्वादङ्गा'दित्यस्याऽसिद्धत्वात्कथं तत्र

१ नाव्लोप' । २ 'भावाऽपि' । ३ 'अ'इति क्वचिन्न । ४ 'करोत पृथग्ग्रहणं तनादिकार्याभावार्थ'मिति वार्तिकं क्वचिदत्र भवत् । ५ 'च पुनस्तत्र' । ६ 'सिद्धश्चिण्वद्भाव' । ७ 'तदा सिज्लोप' ।

ल्लोपस्याऽसिद्धत्वाच्चिण्वद्भावे सिद्धो भवति ॥

॥*॥ तनादिभ्यस्कृञ सिद्ध मिज्लोपे च न दुष्यति ॥
चिण्वद्भावेऽयं दोष स्याल्लोऽपि प्रोक्तो विभाषया ॥८॥

**धिन्विकृण्व्योर च ॥ ३।१।८० ॥**

क्वायमकार श्रूयते [1]॥ न क चिच्छ्रूयते, लोपोऽस्य भवयेतो लोप आर्द्धधातुक इति ॥ यदि न क चिच्छ्रूयते किमर्थमन्वमुच्यते न लोप एवो च्येत ॥ नैव शक्य, लोपे हि सति गुण॰ प्रसज्येत । अत्वे पुन. सति अकार॰ लोपस्य स्थानिवद्भावाद्गुणो न भवति ॥ ननु च लोपेऽपि सति 'न धातु॰ लोप आर्द्धधातुके' इति प्रतिषेधो भविष्यति ॥ आर्द्धधातुकनिमित्ते लोपे स प्रतिषेधो, न चैव आर्द्धधातुकनिमित्तो लोपः । अपि च प्रत्यारयायते स योग । तस्मिन्प्रत्याख्याते गुण स्यादेव । तस्मादत्व वक्तव्यम् ॥

अथ किमर्थं नुमनुषक्तयो[धिन्विकृण्व्यो]र्ग्रहणं क्रियते न 'धिविकृव्यो'रित्ये॰ वोच्येत ?॥ 'धिविकृव्यो'रित्युच्यमानेऽत्वे कृतेऽनिष्टे देशे नुम् प्रसज्येत॥ इद॰ मिह सम्प्रधार्यमत्वं क्रियतां नुमिति, किमत्र कर्तव्यम् [1] ॥ परत्वान्नुमागम. ॥ अन्तरङ्गमत्वम् ॥ काऽन्तरङ्गता ? ॥ प्रत्ययोत्पत्तिसंनियोगेनाऽत्वमुच्यते ।

म ]लोपो बाध्यत इति पक्ष तुगभावपक्षे लोप स्यात् । नैष दोष । यत्र पक्षे लुक् प्रवर्तते तत्राऽसौ लोपस्य बाधको न त्वप्रवर्तमान । [ तनादिकृञ्भ्य उ ] ।

धिन्वि । आर्द्धधातुकनिमित्त इति । 'धातुलोप' इति बहुव्रीह्याश्रयणादिति भाव । न चैव इति । सन्नियोगशिष्टत्वान्निमित्तनिमित्तिभावाऽभेदात् । अन्ये त्वत॰

उ.]येननाप्राप्तिन्याय',तनादिपाठस्तु निरवकाशः स्यात् विकल्पोऽपि तनादौ चरितार्थ इति वाच्यम्, असिद्धत्वेऽपि यदीद न स्यात्तदा स्यादेव 'रस्वादङ्गादित्यस्य प्राप्ति'॰ रित्याशयात् । यदुत्सर्गप्रवृत्तौ विकल्पेनैवाऽयं स उत्सर्गोऽपवादाऽभावपक्षेऽपि न प्रवर्तत एवेत्युत्तराशय । भाष्ये–सोऽपि प्रोक्त इति । लुक्, चिण्वद्भावश्चेत्यर्थ । एवञ्च सूत्रे कृञ्ग्रहणप्रत्याख्यानम् । एतेन कृञ्ग्रहण गणकार्यस्याऽनित्यत्वज्ञापनार्थम्, तेन 'न विश्वसे दित्यादिसिद्धिरित्यपास्तम् । 'न विश्वसे'दित्यस्यसाधुत्वेन ॥

धिन्विकृण्व्यो।भाष्ये–ननु च लोपे सति न धातुलोपेति।मनुष्यदादिपदे एकस्मिन्नपि लोपस्याऽपरस्मिन्नपि तदभावात्तदर्थमनुवर्तनीयमिदमतः 'द्विर्वचनेऽची'ति च तद्भावभाविनामात्रेणाऽऽर्द्धधातुकनिमित्तो लोप॰ । तद्भावभाविना च सम्पाल॰

1 'वो वा भविष्यति' । 2 'भावे न दो' । 3 'भविष्यतो' । 4 'मय-मुच्य' । 5 'इत्येवो' । 6 'भविष्यति' । 7 'राच्यति स योग ' । 8 'पक्षयोर्ग्रहण' । 9 इदं क्वचित्र । 10 'इतीदनु' । 11 'नुम्भवनामन्यतीति' । 12 'भावाऽभाव.' ।

शा स्थानिवद्भावाच्छित स्युः । सार्वधातुकादेशेऽनुबन्धा न स्थानिवद्भवन्तीति नेमे ङितो भवन्ति ॥*॥ तस्य दोषो मिप आदेशे पिद्भावः ॥*॥ तस्यैतस्य लक्षणस्य दोषो मिप आदेशे पितोऽभावः। अचिनवम् असुनवम्, अकरवम्। पितोऽयमादेशः स्थानिवद्भावात्पिद्भवति, सार्वधातुकादेशेऽनुबन्धा न स्थानिवद्भवन्तीति नाथ पित्स्यात्॥अन्यत्पमिदमुच्यते 'मिप आदेश' इति। ॥*॥ति सिम्मिपामादेशा इति वक्तव्यम्'॥*॥ । वेद वेत्थ॥*॥ विदेर्वसो शित्त्वम् ॥*॥ विदेरुत्तरस्य वसो शित्त्वं वक्तव्यम् । शितोऽयमादेशः स्थानिवद्भावाच्छिद्भवति । सार्वधातुकादेशेऽनुबन्धा न स्थानिवद्भवन्तीति नाऽयं शित्स्यात् ॥

॥*॥ित्त्वकरणाद्वा॥*॥[ित्करणाद्वा सिद्धम्]॥ अथ वाऽवश्यमत्र सामान्यग्रहणाऽविघातार्थं ककारोऽनुबन्धः कर्तव्यः ॥ क सामान्यग्रहणाविघातार्थ-नाऽर्थ ?॥'वसोः सम्प्रसारण'मिति । तेनैव यत्नेन गुणो न भविष्यति॥ अस्य ज्ञापकस्य सन्ति दोषाः सन्ति च प्रयोजनानि । समा दोषा भूयांसो वा । तस्मान्नार्थोऽनेन ज्ञापकेन॥कथ यानि प्रयोजनानि?॥ नियन्ते न्यास एव॥एवमपि भवेत्पित्करणसामर्थ्यात्पित्कृत स्यान्ङित्करणसामर्थ्यान्ङित्कृतम्, यत्तु खलु पिति ङित्कृत प्राप्नोति ङिति च पित्कृतं तेन तथ स्यात् ? ॥ तस्माद्वक्तव्यम्— 'पिच्च ङिद्वतो'ति,'ङिच्च न पिद्वर्तो'ति ॥ न वक्तव्यम् ।एवं वक्ष्यामि ['सा-

प्र.]तिङा ङिनामादेशा विधीयन्ते ते तयादय ।एवमपीति। पित्त्वनिमित्तमनुदात्तत्वं, नत्तु मूलाप्रवानीनीत्यागमथ। ङित्त्वनिमित्तश्च गुणवृद्धिप्रतिषेध इत्यर्थ । पिच्चेति । अपिदिति प्रसज्यप्रतिषेध आश्रीयते । पिद्वत् ङिन्न भवतीत्यर्थ । योगविभागाद्या च यावती सार्वधातुकस्य ङित्त्वप्राप्तिस्सर्वाऽसौ निषिध्यते।असयोगादिति ।अत्र ङिद्-पिदिति वर्तते।तेन ङिद्वत् पिन्न भवतीति तानङ स्थानिवद्भावप्राप्त पित्त्वं निषिध्यते।

उ ]पिच्च नेति । अपिद्ग्रहण न कार्यमित्यर्थ । दृश्यते—पितोऽयमिति । उत्तरयति—सार्वधातुकादेश इति। तङादिषु च ङित्त्व न प्रतिषेध्यमिति भाष्ये । ङित्त्व-प्रतिषेधाय पित्व न कार्यमिति भाव । तयादिष्विति निर्धारणे सप्तमी । न च स्थानिवत्त्वप्रयुक्तङित्त्ववारणेऽपि स्थानिवद्भावेन सार्वधातुकत्वात् 'सार्वधातुकमपि'दिति ङित्त्वप्रतिषेधाय पित्त्वमावश्यकमिति वाच्यम्, एतदाशयेनैव 'म्रियन्ते न्यास एवे'ति वक्ष्यन् इत्यदोषात् । हेरपित्त्वमनुदात्तत्वे स्थाने आन्तरतम्या प्राप्तस्यानुदात्तस्य वारणार्थमावश्यकमिति तानङोऽपि ङित्त्वमन्त्यादेशार्थमावश्यकमिति च तद्भाव । [भाष्ये—]अवश्यमत्रेति । उदाह दत्ततरत्वेऽपि

१ 'भविष्यन्ति'।२ इद क्वचित्र ।'सिद्ध'मिति वार्तिकेऽपि पठन्ति। ३'तानि म्रियन्ते'। ४ 'पिन्न भवतीति'। इति क्वचित् । इदं वार्तिकं वा । ५ अयं पाठे युक्त स्यात् ।

इवासते । मधुन इति प्राप्ते । कालव्यत्यय –श्वोऽग्नीनाधास्यमानेन।श्वः सोमेन यक्ष्यमाणेन । आधाता यष्टेत्येवंप्राप्ते । पुरुषव्यत्यय –अधा स वीरैर्दशभिर्वियूयाः । वियूयादिति प्राप्ते । आत्मनेपदव्यत्यय –ब्रह्मचारिणमिच्छते । इच्छतीति प्राप्ते। परस्मैपदव्यत्यय –प्रतीपमन्य ऊर्मिर्युध्यति । युध्यत इति प्राप्ते ।

॥१॥ सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥२॥

## लिङ्याशिष्यङ् ॥ ३।१।८६ ॥

अयमाशिष्यङ् विधीयते तस्य किं प्रयोजनम् ? ॥१॥ आशिष्यङ्प्रयोजनं स्थागागमिवचिविदय' ॥२॥ [आशिष्यङः प्रयोजनं स्थागागमिवचिविदय.] ॥ स्था–उपस्थेयं वृषभं तुग्रियाणाम् । स्था ॥ गा–अञ्जसा सत्यमुपगेयम् । गा ॥ गमि–यत्नेन प्रतिष्ठां गमेयम् । गमि॥ वचि–मन्त्रं वोचेमाग्नये । वचि॥विदि–विदेयमेनां मनसि प्रविष्टाम् । [नि दि] ॥३॥ शकिरुहोश्च ॥१॥ शकिरुहोश्चेति वक्तव्यम् । शकेम त्वा समिधं [साधया धियं] । अक्षवन्तीमारुहेमा स्वस्तये ॥२॥ दृशेरक् पितरं च दृशेयं मातरं च [दृशेयम्]॥३॥ दृशेरग्वक्तव्य. । [किं प्रयोजनम्?]॥ पितरं च दृशेयं मातरं च दृशेयमित्येवमर्थम्।इह उपस्थेयामेत्यादेपि वक्तव्यो न ह्यटैव सिध्यति॥न वक्तव्य.॥ सार्वधातुकत्वात्सिद्धे॰सलोप आर्धधातुकत्वादेत्वम् । तत्रोभयं लिङ्गात्सिद्धम् ॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याऽध्यायस्य प्रथमे पादे चतुर्थमाह्निकम्॥

## कर्मवत्कर्मणा तुल्यक्रियः ॥ ३।१।८७ ॥

वत्करणं किमर्थम् ? ॥ स्वाश्रयमपि यथा स्यात्–भिद्यते कुसूलेनेति ।

प्र.] लिङ्याशि । दृशेरगिति । ऋदृशोऽङि गुणः स्यात् । उपस्थेयामेति । स्था, लिङ्, मस्,यासुट्,अङ्, आकारलोप ,सलोपश्च।'अतो येय' इति इय् । सत्याङागम वार्थोऽन्यथा वलोपे सति उपस्थेमेति स्यात् ॥ इति श्रीमदुपाध्यायजैयटपुत्रकैयटविरचिते भाष्यप्रदीपे तृतीयस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ॥

कर्मवत्कर्मणा । वत्करणमिति । निनापि वतिना परार्थे शब्दप्रयोगात्तदर्थ-

उ ] लक्षणयोन्यं ने ॥ [ व्यत्ययो बहुलम् ] ॥

लिङ्याशिष्यङ् । गास्थोरङभावे 'अतो येय'इति न स्यात् । ऋदृशोऽङि गुण इति। 'ऋदृशो ङि' इत्यनेनेति भाव' । भाष्ये–आङपीति। 'मस्ये'ति लोप । आकारलोप इति।अङमाश्रित्य'आतो लोप इटि चे'त्यालोप । भाष्ये आर्धधातुकत्वादेत्वमिति ।

१ इद प्राचेज । २ इद व्याख्याभाष्य त्रुटित स्यात् । ३ 'लोश'। इद वार्तिक प्रायो लुप्तम् । ४ 'मेत्यादपि' । ५ 'वलान्तलोप' । ६ 'भयाज्ञत्वा' ।

अकर्मकाणां भावे लो भवतीति भावे यथा लो स्यात्॥ कर्मणेति किमर्थम् ?॥ करणाधिकरणाभ्यां तुल्यक्रियः कर्ता मा भूत्, साध्वसिश्छिनत्ति

प्र ]लभ इति भावः। स्वाश्रयमपीति। असति वत्करणे कर्तुः कर्मसंज्ञा विज्ञायेत। ततश्चाऽकर्मकव्यपदेशाऽभावाद्भावे लो न स्यात्। वत्करणे तु सति कर्माश्रयाणि कर्तुरतिदिश्यन्ते न तु स्वाश्रयं कार्यं निवार्यत इति भावे लस्सिद्धो भवतीति लडे-शेन कर्तुरनभिधानात्तृतीया भवति,-भिद्यते कुसूलेनेति। न चाऽसत्यपि वत्करणे लान्तस्य कर्तेति वक्ष्यमाणेन भावे लस्सिध्यति। यस्माद्भावे लविधिर्लान्तस्य कार्यमिति स्वाश्रयनिवारणं स्यादेव। कर्मणेति किमिति। धातुवाच्या क्रिया कर्तृकर्मणोरेव समवेता, तत्र कर्मस्थया क्रियया तुल्यक्रियः कर्ता न सम्भवतीति कर्मस्थैव क्रियाऽऽश्रयिष्यत इति भावः। साध्वसिश्छिनत्तीति। ननु करणादिव्यापारो धातुना नाऽभिधीयते, यदा त्वभिधीयते तदा तथा कर्तृत्वमेव, न तु करणादिरूपता। न च कर्तृकर्मव्यतिरेकेण कारकान्तरगतस्य क्रियाया उपपत्तौ। नैष दोषः।

उ ]'वाऽन्यस्यानर्थकत्वे' इत्यनेन। स्भावाऽपि छान्दसत्वादिति बोध्यम्। उभयलिङ्गत्वादिति। 'छन्दस्युभयथे'त्यनेनोभयसंज्ञत्वादित्यर्थः॥

इति श्रीनागेशभट्टविरचिते भाष्यप्रदीपोद्योते तृतीयस्य प्रथमे चतुर्थमाह्निकम्॥

कर्मवत् ॥ 'तेन तुल्य'मिति वतिः, उपमेये प्रथमादर्शनात्। कर्मणेति परिभाषितस्य कर्मणो ग्रहणं, कृत्रिमत्वात्, सामर्थ्याच्च 'तुल्यक्रिय' इत्यनेनान्तर्क्रियया तुल्यत्वस्य लाभात्। न हि निरूढा क्रिया तुल्या भवति। ननु वत्यर्थलाभे स्वाश्रयमपि अतिदिश्यमानत्वात् आह्-असतीति। तदभावे तत्रभ एव न भवतीति भावः। मजेति। 'अभिधी'ति निवद्धिति भावः। अकर्मकव्यपदेशाऽभावादिति। तत्स्थानीयकर्मस्थस्याऽस्वातिदेशेव सकर्मकत्वमिति भावः। ननु भावे ले कर्तरि चा ल सो निषेधोऽत आह्-लादेशेनेति। तृतीया भवतीति। कर्तरि लादेशे तु ता दुर्लभेति भावः। न चाऽसत्यपीति। लान्तस्य कर्ता कर्मवदित्यर्थे सत्या शङ्का। तत्रश्च यावत्कर्मणि न लस्तावत्कर्मसत्त्वाऽभावादकर्मकत्वेन भावे लेऽपि सिध्यतीत्यर्थः। 'लान्तस्य कार्ये कर्तव्ये कर्ता कर्मवत्'इत्यर्थं मत्वोक्तं नेति-यस्मादिति। तत्रश्च भावे लेऽपि कर्तव्ये कर्ता कर्मेव स्यात्। तत्रश्चाऽकर्मकत्वाऽभावाद्भावे लो न स्यादिति भावः। 'ल कर्मणी'ति विधेर्विप्रत्युत्पत्त्या धातुनाऽऽक्षेपस्यान्तरार्थस्य बोध्यम्। वस्तुतो स्वाश्रयस्यैव कर्तुः कर्मवत्त्वेन भेद कर्ते प्रयोजनम्। 'नमते दण्ड' इत्यादौ शपादिसिद्धिस्तु मुख्यं प्रयोजनं वक्ष्यति। धातुवाच्येति। प्रत्यासत्त्या धातुवाच्यक्रियायोगे एव तुल्यक्रियत्वस्य ग्रहणमिति भावः। प्रत्यासत्ति-

१ इदं क्वचिन्न। २ 'स्थानत'। ३ 'क्रियेत'।

साधु स्थाली पचतीति ॥ 'तुल्यक्रिय' इति किमर्थम् ? ॥ पचत्योदनं देवदत्तः ॥ 'तुल्यक्रिय' इत्यप्युच्यमानेऽत्र प्राप्नोति । अत्रापि हि कर्मणा तुल्यक्रियः कर्ता।

प्र ]यद्यपि करणादिव्यापारो धातुवाच्यो न भवति तथापि स्वव्यापारं कुर्वन्ति करणादीनि प्रधानक्रियां साधयन्ति । तत्राऽवस्य तुल्यक्रियत्वं कर्तुराश्रयितुमवस्थान्तरमपेक्षणीयम्–'अवस्थाऽन्तरयुक्तक्रियया तुल्यक्रियः कर्ते'ति। ततश्च कर्मावस्थावत्करणाद्यवस्था अप्याश्रीयेरन्। प्रधानव्यापारश्च कर्तृकर्मणोरेव स्थितो न तत्रान्तरव्यापारोऽपि, तस्य सर्वस्यैव कारके व्यवस्थानात्। यद्यपि स्वव्यापारे कर्तृत्वं तस्य तथापि प्रधानक्रियापक्षलब्धकरणादिव्यपदेशवस्तुव्यवस्थितक्रियातुल्यत्वग्रहणनिवारणाय 'कर्मणे'ति कर्तव्यमेव । यद्यपि करणादिव्यापारस्य धातुवाच्यत्वं नास्ति, तथापीह सूत्रे धातुवाच्यत्वस्य शब्देनाऽनाश्रयणाद्वस्तुसद्भावाश्रयेण प्रसङ्गः स्यादेव। साधु स्थाली पचतीति । स्थाल्या अधिकरणत्वे यादृशी धारणसंभवनादिरूपा क्रिया तादृश्येव कर्तृरूपेऽपीति स्यात्कर्मवत्त्वम् । तुल्यक्रिय इति किमर्थमिति । कर्मणेति तृतीया तुल्यशब्दाध्याहारेण व्याख्यास्यते । तुल्यक्रियत्वाच्च कर्तुस्तुल्यत्वमिति प्रश्नः । अथवा क्रियमाणेऽपि तुल्यक्रियग्रहणेऽतिप्रसङ्ग इति प्रश्नः। पचत्योदनमिति । सहार्थेऽपि तृतीया विज्ञायेत, तेन कर्मणा सह यः कर्ता प्रतिपाद्यत इति भावः । अकर्मकनिरपेक्षार्था कर्मश्रुतिः स्यादास्ते शेत इति । अत्रापीति । तुल्यशब्दस्य साधा-

उ ]रण्यमाश्रित्य शङ्कते–नन्विति। कारकान्तराश्रयं कमिति। कारकान्तरस्याश्रयत्वेनाश्रयणमित्यर्थः । व्याप्तिन्यायाश्रयेणोत्तरयति–नैष दोष इति । स्वव्यापारमिति । स्वव्यापारावेशं विना क्रियासाधनत्वाऽयोगादिति भावः । तत्राऽवस्यमिति । एकाऽवस्थायां भेदनिबन्धतुल्यत्वाऽसम्भवादिति भावः । करणाद्यवस्था अपीति । व्याप्तिन्यायादिति भावः । प्रधानव्यापारः–धात्वर्थव्यापारः । कर्तृत्वमिति । आश्रयतामात्रमित्यर्थः । तत्रिरूपितकरणत्वाऽभावप्रतिपादनपरञ्चैतत् । प्रधानक्रियापेक्षो लब्धः करणादिव्यपदेशो येन वस्तुना तत्र व्यवस्थिता या क्रिया त तुल्यत्वग्रहणनिवारणायेत्यर्थः । यदि तु लक्ष्याऽनुरोधात्प्रत्यासत्त्या धातुवाच्यक्रिययैव तुल्यक्रियत्वं विवक्ष्यते, प्रत्यासत्तिस्तु यस्य धातोर्यत्कर्म तत्रत्यक्रियया तस्यैव धातोः कर्ता यदि तुल्यक्रिय इति वक्ष्यमाणार्थलाभार्थमादरणी, तदा नेदम्प्रयोजनम् । अतो 'यत्र कर्मणि क्रियाकृतविशेषस्तदर्थ'मिति प्रयोजनान्तरं वक्ष्यते । ननु कर्मकर्त्रोः साधनयोरत्यन्तभेदात्कथं तुल्यत्वमत आह–तुल्यक्रियत्वाच्चेति । अतिप्रसङ्ग इति प्रश्न इति । इतिं व्युत्पादयितुं प्रश्न इत्यर्थः । साधारणेति । यथा 'एतौ तुल्यधना'वित्यत्रेत्यर्थः । कर्तृकर्मसाध्यत्वाच्चेति। 'जन्यत्वेनोभयोः साधारणी क्रिये'-

१ । 'पचतीति' । २ 'कर्मवद्भाव' । ३ 'श्रयण' ।

न तुल्यक्रियग्रहणेन समानक्रियं कर्माभिधीयते॥ किं तर्हि?॥ यस्मिन्कर्मणि कर्तृभूतेऽपि तद्वत्क्रिया लक्ष्यते, यथा कर्मणि, स कर्मणा तुल्यक्रियः कर्ता कर्मवद्वर्तत इति ॥*॥ कर्मवदकर्मकस्य कर्ता ॥*॥ अकर्मकस्य कर्ता कर्मवद्वर्तत इति वक्तव्यम् ॥ किं प्रयोजनम्? ॥ सकर्मकस्य कर्ता कर्मवन्मा भूदिति। भिद्यमानः कुसूलः पात्राणि भिनत्तीति। तथा—॥*॥ कर्म दृष्टश्चेत्समान-

प्र ]णवचनत्वात् कर्तृकर्मसाधारण्यवाचाभावात् क्रियाया इति भावः। समानक्रियमिति। साधारणक्रियमित्यर्थः। एतच्च तुल्यक्रियग्रहणादेव लभ्यते। अन्यथा 'कर्मवत्कर्मणे'त्येव ब्रूयात्। यस्मिन्निति। सादृश्यवाची तुल्यशब्द आश्रीयत इत्यर्थः। कर्तृभूत इति। स्वविकल्पेन विधानादनाऽभावः। कर्तरि सति इत्यर्थः। अथ वा 'भू प्राप्ता'वित्यस्यात्मनेपदिनो णिचो विकल्पनाद्रूपमेतत्। तेन कर्तृत्वं प्राप्त इत्यर्थः। उत्पत्तिविषये कर्तृशब्दः कर्तृत्वे वर्तते। कर्तृकर्मावस्थाभेदाच्च एकस्या अपि क्रियाया भेदाश्रयं सादृश्यमुपपद्यते। कर्मणेति। कर्मस्थया क्रियेत्यर्थः। साध्यमानतयो रत्यन्तभेदादतुल्यत्वाऽसम्भवात् कर्मस्था क्रिया कर्मशब्देनोच्यते। भवति हि ताच्छ्यात्ताच्छब्द्यं यथा 'मञ्चाः क्रोशन्ती'ति। तत्र पचत्योदनमित्यत्र कर्तृकर्मव्यापारयोरत्यन्तभेदात्सादृश्याऽभावात्कर्मवद्भावाभावः। 'लूयते केदारः स्वयमेवे'त्यत्र केदारस्य तु द्विधाभवनलक्षणा कर्मावस्थायां यादृशी क्रिया तादृश्येव कर्तृत्वावस्थायामपीति भवति कर्मवद्भावः। भिद्यमान इति। पात्राण्यपि द्विधा भवन्ति कुसूलस्यापीति प्राप्नोति कर्मवद्भावः। कर्म दृष्ट इति। समाने एकस्मिन् धातौ कर्ता कर्म तत्र यदि दृष्टो

उ ]इत्यर्थः। समानशब्दे सदृशवाचकत्वस्याऽपि सत्त्वादाह—साधारणेति। एतच्चेति। 'किन्तर्हीं'त्यादि चेत्यर्थः। सादृश्यवचनतुल्यशब्दस्य प्रसिद्धतरत्वाच्चेत्यपि बोध्यम्।

इत्यत्रेति। सहार्थयुक्ततृतीयया एकक्रियान्वयस्वरूपसाहित्यलाभेन लघुत्वार्थलाभादिति भावः। णिजभावे कर्तृशब्दे ङीप् स्यादत आह—ण्यन्तेरिति। ननु ण्वेदमानेऽकर्तरि कर्तरि भूते इत्येवोचितम्प्रकृतविवृतिभावप्रतीतेरत आह—अथ वेति। भाष्ये—यथा कर्मणीति पूर्वान्वयि। ननु विक्लित्तिद्विधाभवनरूपाया क्रियाया एकत्वात्कथम्भेदनिबन्धनसादृश्योपपत्तिरत आह—कर्तृकर्मेति। तत्तत्कालभरूपाऽवस्थाभेदादाश्रयस्य भेदाऽवभासे तन्मूलकः क्रियाया भेदाऽवगमः इति सादृश्योपपत्तिरिति भावः। लक्षणाया हेतुमाह—साध्येति। साध्या—क्रिया। साधनकारकम्। व्यापारयोरिति। व्यापारशब्देन धात्वर्थ उच्यते। तद्वाच्यधर्मत्वस्य सादृश्य न विवक्षितम्। किन्तु सामर्थ्यादवान्तरसादृश्यमेव विवक्षितमिति तात्पर्यम्।

भाष्ये-कर्ता कर्मवदिति। 'कर्तरि शर्'इत्यतोऽनुवृत्तस्य कर्तरीत्यस्य प्रथमया

१ 'मभिसम्बध्यते'। २इति क्वचित्। ३ 'इध्यन्त तु केदारस्य'। ४'धात्वर्थो तु'।

धातौ ॥ ७ ॥ कर्म दृष्टेऽसमानधाताविति वक्तव्यम् । इह मा भूत्-पचत्योदनं देवदत्तः । राध्यत्योदनः स्वयमेवेति । तथा-॥ ८ ॥ कर्मस्थभावकानां कर्मस्थक्रियाणां च ॥ ॥ [ तथा ] कर्मस्थभावकानां कर्मस्थक्रियाणां वा कर्ता कर्मवद्भवतीति वक्तव्यम् । कर्तृस्थभावकानां कर्तृस्थक्रियाणां वा कर्ता कर्मवन्मा भूदिति । [कर्मस्थभावकानाम्—आसयति देवदत्त, शाययति देवदत्त, स्थापयति देवदत्तम् ॥ कर्मस्थक्रियाणाम्—ग्राममवरुणद्धि, करोति कटम् । कर्तृस्थभावकानाम्—चिन्तयति, मन्त्रयते । कर्तृस्थक्रियाणाम्—गच्छति धावति हसति ] ॥ एतावदुच्यते-अकर्मकस्य कर्ता कर्मवद्भवतीति वक्तव्यमिति

प्र ] भवति यदा कर्मवद्भावो, यदा त्वन्यस्मिन्धातौ कर्मोऽन्यस्मिंश्च कर्ता तदा मा भूत्कर्मवद्भाव इत्यर्थः । पचत्योदनमिति । ओदनस्य कर्मत्वे यादृशी क्रिया विक्लित्तिलक्षणा तादृश्येव कर्तृत्वेऽपि । राध्यतेर्विक्लित्तिवचनत्वात् । न चास्य वाक्यद्वयस्य युगपत्प्रयोगः । कर्मस्थक्रियातुल्यत्वप्रतिपादनाय तु वाक्यद्वयोपन्यासः । अन्यथा सत्यनधातावपि व्याख्यातृभिः कथं तुल्यक्रियत्वं प्रदर्श्यते । यथैव लुनातौ केदारस्य कर्मत्वमिति लवयतः केदारः स्वयमेवेति कर्मवद्भावो न स्यात् । अत्र केचिदाहुः-'लुनातिरेव णिचि लवि समपद्यत इत्यस्ति समानधातुत्वम्'। अन्ये त्वाहुः-'लावयनातेव केदारस्य कर्तृत्वं कर्मत्वं चेति दोषाऽभावः' । कर्मस्थभावकानामिति । अपरिस्पन्दनसाधनसाध्यो धात्वर्थो भावः । सपरिस्पन्दनसाधनसाध्यस्तु क्रिया । यत्र च क्रियाकृतविशेषदर्शनं तत्रस्था क्रियोच्यते । ततश्च 'पचति राजा स्वयमेव' 'आरोहति हस्ती स्वयमेवे'ति

उ ]विपरिणाम इति भावः । पाकाणामपीति । एवञ्च भिदेः कर्मसु काष्ठेषु या क्रिया सा तत्कर्तरि कुसूलेऽपीति भावः । समानशब्दः साधारणपर्याय एकस्मिन्नित्यर्थे पर्यवस्यतीत्याह-एकस्मिन्निति । ननु युगपत्सामान्याधारत्वयोर्विरुद्धत्वात्कथमप्यनयोर्वाक्ययोर्युगपत्प्रयोगोऽत आह-न चास्येति । प्रतिपादनायेति । तत्प्रयोगे या कर्मस्था साऽत्र प्रयोगे कर्तृस्थेति प्रदर्शनायेत्यर्थः । लुनाताविति । 'लुनाति केदारं देवदत्त' इति प्रयोग इत्यर्थः । लावयते केदार इति । 'णिश्रन्थी'ति यक्चिणोः प्रतिषेधः । कर्मवद्भावफलन्त्वात्मनेपदमेव । 'णिचश्चे'त्यनेन तु न सिद्धिः, क्रियाद्देश्यफलस्य कर्तृगामित्वाऽभावात् । आहुरिति । अनादरबीजन्तु ण्यन्तस्य धात्वन्तरत्वम् । लावयताविति । निवृत्तप्रेषणपक्ष इति भावः । अन्यत्र भावक्रिययोरभेदेन व्यवहारादाह-अपरिस्पन्दनेति । इदञ्च प्रकृताऽभिप्रायेण । 'भावे घ'ञित्यादौ तु सिद्धावस्थापन्नो धात्वर्थो भाव इति बोध्यम् । यत्र चेति । यथा छिदिरादौ कर्मणि क्रियाकृतविशेषदर्शनात्तत्स्था सा । 'पचती'त्यादौ रागादिदर्शन

१ इदं क्वचिन्न । २ केचित्तु वार्त्तिकद्वयं तथेत्याहुः । ३ इति क्वचिन्न ।

न वक्तव्यम्। वक्ष्यत्येतत्[१] 'सकर्मकाणां प्रतिषेधोऽन्योन्यमाश्लिष्यत' इति। यदप्युच्यते—'कर्म दृष्टश्चेत्समानधातावि'ति वक्तव्य'मिति। न वक्तव्यम्। धातोरिति वर्तते। धातोः कर्मणः कर्तुरस्य कर्मवद्भावोऽतिदिश्यते। तत्र सम्बन्धादेतद्गन्तव्यं 'यस्य धातोर्यत् कर्म तस्य चेत् कर्ता स्या'दिति। तद्यथा—धातोः कर्मण्यभवतीति, तत्र सम्बन्धादेतद्गम्यते—यस्य धातोर्यत्कर्मेति। इह मा भूत्—'आहर कुम्भम्' 'करोति कट'मिति। यदप्युच्यते—

प्र ] कर्मवद्भावाऽभाव। सकर्मकाणामिति। अन्योन्यमाश्लिष्यत इत्युदाहरणमात्रमेतन्न तु व्यतीहारविशिष्टक्रियाविषयकर्मवद्भावप्रतिषेधप्रतिपादनार्थमित्यर्थः। धातोः कर्मण इति। कर्मणः सतः कर्तुरित्यर्थः। कर्मणेति चोपादानादयमर्थो लभ्यते,—'यस्य धातोर्यत्कर्म तस्य क्रियया तुल्यक्रियः कर्ता तस्यैव धातोर्यदि भवति तदा कर्मवद्भवति'। आहर कुम्भमिति। समर्थपरिभाषोपस्थानमन्तरेणापि भवत्येवेष्टमिति

उ ] कर्मस्थत्वं हर्षादिरूपफलविशेषदर्शनात्तत्त्वमिति भावः। न चैवं पच्यादिकर्तर्यपि श्रमादिरूपविशेषस्य दर्शनादिदमयुक्तम्, किञ्च पश्यत्यादीनां कर्तृस्थभावकत्वेऽनापत्तिः, कर्तरि क्रियाकृतफलाऽभावादिति वाच्यम्, येन धातुना कर्तृकर्मसाधारणं फलं शब्देन प्रतिपाद्यते स कर्तृस्थभावकः। यथा 'पश्यति', 'गच्छती'त्यादौ। तत्र विषयतासम्बन्धाभ्यां ज्ञानमुभयनिष्ठम्। संयोगश्चोभयनिष्ठः। एवं ह्रासोऽपि। यत्र तु कर्त्रसाधारणं फलं स कर्मस्थभावकादिः। यथा भिदादिरित्यत्र तात्पर्यात्। भाष्ये—वक्ष्यत्येतत् सकर्मकाणामिति। अत्र भावः—वाक्यादिभिरकर्मकाऽसाधारणानामन्यत्राऽकर्मकस्य प्रयोगस्य प्रयोगदर्शनादन्याऽपि तथात्वापत्तौ 'भासम्पचन्त्योदनः स्वयमेवे'त्यादौ कर्मवत्कर्मणस्त्यादि वचनेन कर्मवत्त्वं प्राप्नोतीति 'सकर्मकाणां प्रतिषेध' इत्यावश्यकमिति। अन्यथा वचनेन वचनप्रत्याख्याने लाघवं न स्यात्। न त्विति। उदाहरणं यत्तान्न विषय एव प्रतिषेध इति न भ्रमितव्यमिति भावः। अन्ये त्विदमुदाहरणचिन्त्यम्, आश्लेषः—संयोगविशेषाऽनुकूलव्यापारः। तत्र संयोगाश्रयत्वेन तयोः कर्मत्वं, व्यापाराश्रयत्वेन कर्तृत्वम्। तत्र संयोगाऽनुकूलक्रियायाः कर्तृत्वोपयोगित्वेऽपि व्यक्तिभेदोऽवश्यमङ्गीकार्यः। अन्यथोभयोरपि कर्तृत्वमेव स्यात्। 'इमावाश्लिष्यत' इति यथा। भेदे तस्याश्रयान्यस्य कर्मत्वमुपपद्यते। एवञ्च कर्मत्वोपयोगिक्रियया तुल्यक्रियस्य तदीयकर्तुरभावात् कर्मवत्त्वाऽप्राप्तेरित्याहुः। तत्त्वमग्रे वक्ष्यते। ननु 'कर्मण' 'कर्तु'रिति तुल्याधिकरणमत आह—सत इति। कर्मणेति चोपादानादिति। प्रत्यासत्त्येति भावः। समर्थपरिभाषयैवेदं सिद्धमत आह—समर्थेति। एतच्च इत्यन्त एकदेशयुक्तिरिति ध्वनितम्। क्रियया कर्तुरुपमा

१ 'कर्मण सत'। २ 'द्वाव उच्यते'। ३ 'तुपपत्ति'।

'कर्मस्थभावकानां कर्मस्थक्रियाणां यो कर्ता कर्मवद्भवतीति वक्तव्यं । कर्तृस्थभावकानां कर्तृस्थक्रियाणां यो कर्ता कर्मवन्मा भू'दिति ॥ न वक्तव्यम् । कर्मस्थया क्रिययाऽस्य कर्तारमुपमिमीते, न च कर्तृस्थभावकानां कर्तृस्थक्रियाणां वा कर्मणि क्रियाया प्रवृत्तिरस्ति ॥

किं पुनः कर्मकर्तरि कर्माश्रयमेव भवत्याहो स्विल्कर्त्राश्रयमपि ?॥ किं चातः ॥ यदि कर्माश्रयमेव,—चङ्शाप्कृद्विधयो न सिध्यन्ति॥ चङ्—अचीकरत कटः स्वयमेव [ इति ]। चङ्[1] ॥ शप्—नमते दण्डः स्वयमेव । शप्[2] ॥ कृद्विधि –भिदुरं काष्ठं स्वयमेव॥ अथ कर्त्राश्रयमपि सिद्धमेतद्भवति। किं तर्हीति। ॥*॥ आत्मनेपदशबादिविधिप्रतिषेधौ ॥*॥ आत्मनेपदं विधेयं, शबादीनां च प्रतिषेधो वक्तव्यः ॥ उभयं क्रियते न्यास एव ॥

प्र ]रिति प्रदर्शनायोपन्यासः । कर्तारमिति। कर्तृस्थां क्रियामित्यर्थः । किं पुनरिति । विभनिर्देशेन स्वाश्रयं निवर्त्यते आहो स्विन्नेति प्रश्नः । यद्यपि स्वाश्रयमपि यथा स्यादित्यत्र निर्णयः कृतस्तथापि दोषान्तरोद्भावनाय पुनर्विचार्यते । अचीकरतेति । यक्चिणो प्रतिषेधेऽपि स्वाश्रयौ चङ्शपौ न प्राप्नुतः । भिदुरमिति । कर्तरि कुरच्न प्राप्नोति । 'लःकर्मणि च भावे चाकर्मकेभ्यः' ... न तावत्स्थापितमिति कृद्विधेरसिद्धिरुक्ता । उभयमिति। कर्तैव यः कर्ता तत्र परस्मैपदमिति परस्मैपदाभावादात्मनेपदं भवति । कर्तरि शबित्यत्र कर्तरीति योगविभागेन शबादीनां यका बाधनं भवति । कार्यातिदेशा-

इ ]ऽसम्भवादाह–कर्मस्थामिति।भाष्ये–न च कर्तृस्थेति। तेषां धातूनां वाच्याया फलरूपक्रियायाः कर्ममात्रे प्रवृत्तिर्नास्तीत्यर्थः । करणादिष्वन्यक्रियेऽनिष्टव्याप्तिवारणस्य प्रयासस्यैव सिद्धा 'कर्मणे'त्युपादानसामर्थ्यात्कर्ममात्रनिष्ठफलरूपकर्मस्थक्रिया लभ्यत इति भावः । यथाश्रुतप्राचीनकैयटरीत्या व्याख्याने तु जानात्यादिकर्तर्यपि क्रियाकृतविशेषाऽनुपलम्भेन 'चिन्तयती'त्याद्युपकर्मणैतदुक्तमिति । एतेन क्रियायाः क्रियाकृतविशेषाणामित्यर्थ इत्यपास्तम् । तदुक्तं हरिणा–'विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता । क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥' इति । अन्येषामिति । 'मते' इति शेषः । इदमेव मतं युक्तम्, उपयुक्ते ।

दोषान्तरेति । तदुद्भावनपूर्वकं मुख्यपक्षप्रदर्शनायेत्यर्थः । प्रतिषेधेपीति । 'न दुहे'ति 'णिश्री'ति च। शपाविति। नमतिविषयकमिदं । कर्तैवेति। 'शेषा'दिति सूत्रे 'कर्तरि कर्मव्यतिहारे' इत्यतः कर्तरीति पदानुवृत्त्याऽयमर्थो लब्ध इति भावः । योगविभागेनेति । इदञ्च यग्विधायके निरूपितम् । कार्यातिदेशो वाऽयमिति । एवञ्च परत्वादात्मनेपदविधिः शब्बाधश्च सिद्ध इत्यर्थः । नन्वेवं स्वाश्रयनिवृत्तिरेव

१ 'च' । २ इदं क्वचित्। ३ 'कृद्विधि' । ४ 'प्रतिषेध' ।

किमर्थं पुनरिदमुच्यते ? ॥*॥ कर्मकर्तरि कर्तृत्वं स्वातन्त्र्यस्य विवक्षितत्वात्॥*॥ कर्मकर्तरि कर्तृत्वमस्ति ॥ कुतः ?॥ स्वातन्त्र्यस्य विवक्षितत्वात्¹। स्वातन्त्र्येणैवाऽत्र कर्ता विवक्षितः॥ किं पुनः सतः स्वातन्त्र्यस्य विवक्षा, आहोस्विद्विवक्षामात्रम् ?॥ 'सतः' इत्याह॥ कथं ज्ञायते?॥ इह भिद्यते कुसूलेनेति,-न चान्यः कर्ता दृश्यते क्रिया चोपलभ्यते ॥ किं च भो विग्रहवतैव क्रियायाः कर्त्रा भवितव्यं, न पुनर्वातातपकाला अपि कर्तारः स्युः ॥ भवेत्सिद्धं यदि वातातपकालानामन्यतमः कर्ता स्यात् । यस्तु खलु निवाते निरभिवर्षेऽचिरकालकृतः कुसूलः स्वयमेव भिद्यते तस्य नाऽन्यः कर्ता भवत्यन्यदतः कुसूलात् ॥ यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्राऽन्यः कर्ता नास्ति इह तु कथं न स्यात्-लूयते केदारः स्वयमेवेति, यत्राऽसौ देवदत्तो दात्रहस्तः समन्ततो विपरिपतन् दृश्यते ? ॥ अत्रापि याऽसौ सुकरता नाम तस्या नान्यः कर्ता भवत्यन्यदतः केदारात् ॥ अस्ति प्रयोजनमेतत् ? ॥ किं तर्हीति ॥*॥ तत्रे लक्षणे कर्म-

प्र ]दिशो वाऽयमार्थीयते। यद्वाऽविरुद्धमतिदेशेन स्वाश्रयं तद्भवति न तु विरुद्धमिति यगादिपरस्मैपदाभावः । स्वातन्त्र्यस्येति । पच्यते ओदनः स्वयमेवे'ति विक्लित्तिमात्रवाची पचिः । तत्र चौदनस्य कर्तृत्वमेव । 'लूयते केदार' इति द्विधाभवनवाची लुनातिस्तया च केदारस्य कर्तृत्वम्। क्रिया चेति । विशरणक्रियेत्यर्थः। किञ्च भो इति। कारणाऽभावे विशरणाख्यकार्याभावाद्वस्य केन चिद्वातादिना कारणेन भाव्यमिति भावः । अन्यदत इति । कुसूलस्यैव विशरणक्रियायाः कारणत्वोपपत्तावदृश्यमानशरणान्तरकल्पनाया अयुक्तत्वादिति भावः । सुकरतेति । द्विधाभवनलक्षणक्रियेत्यर्थः । अन्यथा पतनमपि देवदत्तो कुर्यादिति भावः । लक्षणस्य कर्त्तेति ।

उ ]पर्यवमन्यत आह-यत्वेति।अतिदेशेन-तदाश्रयकार्येण। एवञ्च 'नमते दण्डोऽर्थीकरते'त्यादौ यक्चिणोरभावे चण्डार्थो भवतोऽन्यत्र च न भवत इति भावः । भाष्ये-किमर्थं पुनरिदमुच्यत इति । कर्मणः कर्तृत्वाऽसम्भवात् सूत्रं व्यर्थमिति प्रश्नः । तत्सम्भवप्रदर्शयति-कर्मकर्त्तरीति । स्वातन्त्र्यञ्च प्रधानधात्वर्थाश्रयत्वम् । तच्च कर्मव्यापारमात्रस्य धात्वर्थत्वे सम्भवतीत्याह-पच्यत इति । कुसूले क्रियाऽदर्शनादाह-विशरणेति । भाष्ये-विग्रहवतैवेति। सशरीरेण चेतनेनैवेत्यर्थः। निरभिवर्षे इति । अनातपे इत्यर्थः । ननु सुकरता यदि प्रयोक्तृव्यापारस्तर्हि तस्य देवदत्तः कर्तेति, 'नाऽन्य' इति भाष्यमनुपपन्नं स्यादत आह-द्विधेति । सुकरताविषयक्रिया सुकरताशब्देनोच्यत इत्यर्थः । कर्मगतसौकर्यं निरीक्ष्यैव देवदत्तादेः कर्तृत्वम् , नाऽन्यथेत्याह-अन्यथेति । एवञ्च सौकर्यातिशयविवक्षया विद्यमानोऽपि

१ इदं क्वचित्र । २ 'कथं स्यात्' । ३ इदं वार्त्तिकद्वहिरित्यन्ये ।

वदनुदेश ॥भा॥ तत्र लान्तस्य कर्मवदनुदेश. कर्तव्य । 'लान्तस्य कर्ता-कर्मवद्भवती'ति वक्तव्यम् ॥वा॥ इतरथो हि कृत्यक्तखलर्थेषु प्रतिषेधः ॥वा॥ अक्रियमाणे हि लग्रहणे कृत्यक्तखलर्थेषु प्रतिषेधो वक्तव्यः स्यात् । कृत्य-भेत्तव्य कुसूल इति कर्म । यदा स्वातन्त्र्येण विवक्षित-स्तदाऽस्य कर्मवद्भाव· स्यात् । तस्य प्रतिषेधो वक्तव्यस्तस्मिन् प्रति-षिद्धेऽकर्मकाणा भावे कृत्या भवन्तीति भावे यथा स्यात् । [ भेत्तव्य कुसू-लस्य ] भेत्तव्य कुसूलेनेति । कृत्य ॥ क्त-भिन्न. कुसूल इति कर्म । स यदा स्वातन्त्र्येण विवक्षितो भवति तदाऽस्य कर्मवद्भाव· स्यात्तस्य प्रतिषेधो वक्तव्य , तस्मिन् प्रतिषिद्धेऽकर्मकाणां भावे क्तो भवतीति भावे क्तो यथा स्यात्-भिन्न कुसूलेनेति । क्त ॥ खलर्थे—ईषद्भेदः कुसूल इति कर्म । स यदा स्वातन्त्र्येण विवक्षितो भवति तदाऽस्य कर्मवद्भाव. स्यात्, तस्य प्रतिषेधो वक्तव्य.। तस्मिन्प्रतिषिद्धेऽकर्मकाणां भावे खल्भवतीति भावे खल्यथा स्यात्,-

---

प्र ]लान्तवाच्यो य कर्ता स ल्यन्तधात्वर्थ एव कर्मवद्भवतीत्यर्थ ।तेन कर्मणि विधीय-माना. कृत्यादयोऽनिदेशात्कर्मकर्तरि न भवन्तीति भाव एवोत्पद्यन्ते । ततश्चैते कर्तु-रनभिहितत्वात्कर्तृविभक्तौ षष्ठीतृतीये भवत —भेत्तव्यं कुसूलस्य भेत्तव्यं,भेत्तव्यं कुसूले-नेति।'भिद्यते कुसूल'इत्यत्र च द्वितीया न भवति। लग्रहणस्याऽन्यत् प्रयोजनं न दृश्यते।

---

उ.]कर्तृव्यापारो न विवक्ष्यते । रिन्ततनेवार्थस्याक्षातुर्ना कर्मनिष्ठव्यापारमात्रपरता तदा कर्मण कर्तृत्व । 'कर्मणा तुल्यक्रिय' इत्यत्राऽवस्थान्तरीयकर्मणा तुल्यक्रियत्व-मित्येवार्थो विवक्षित इति दिक् । 'ल्यन्तस्ये'ति षष्ठी वाच्यवाचकसम्बन्धे, निमित्त-निमित्तिभावे चेत्याह—लान्तेति । 'ल्यन्तवाच्य' इत्यर्थस्य फलमाह—तेनेति । षष्ठीतृतीये इति । 'कृत्यानां कर्तरि वे'ति वचनादिति भाव । यद्यपि स्वाश्रयाऽ-निवृत्तेर्भावे सिध्यन्त्येते तव्यादयस्तथापि 'भेत्तव्य कुसूल स्वयमेवे'त्यपि स्यादिति दोष । भाष्यस्यापि—'भेत्तव्यं कुसूलेने'ति भाव एव कृत्यो यथा स्यादित्यर्थो बोध्य । लान्तकार्यं एवेत्यस्य फलमाह—भिद्यते कुसूल इति । कर्तरि लेऽपि कर्मवद्भा-वेन द्वितीया स्यादिति भाव । ननु यक्चिण्विषयमेतत्, कर्मत्वेनाऽनभिहितत्वेन च । तत्राऽनिदेशेन कर्मत्वेऽपि अभिहितत्वात्कथं द्वितीयेति चेत्, कार्यातिदेशोऽनेनैव द्वितीया विधीयते।तत्र चाऽनभिहिताऽधिकाराऽभाव इत्यभिमानात्।वस्तुत 'कर्मव'-दित्युक्ते कर्मणि यत्कार्यं येनोपाधिना यथा भवति तथा कर्तर्यपीत्यर्थादभिहितत्वेन द्वितीयावारणस्य सुकरत्वाल्लान्तस्य कार्ये इति चिन्त्यमेतत्।अत्र-'भिन्न कुसू-

---

१ 'अनिदेश.' । २ 'अन्यथा' । ३ नास्तीदं क्वचित् ।
४ 'भावे कृत्यो' । ५ 'क्षितस्तदाऽस्य' । ६ 'कुसूल' ।

भिद्यते कुसूलेनेति ॥ तर्हि उपग्रहणं कर्तव्यम् ? ॥ न कर्तव्यम् । क्रियते न्यास एव । द्विलोऽशिष्यदिति द्विलकारको निर्देशः ॥*॥ सिद्धं तु प्राकृतकर्मत्वात् ॥२॥ सिद्धमेतत् ॥ कथम् ? ॥ 'प्राकृतकर्मत्वात् । प्राकृतमेवैतत् कर्म । यथा—कटं करोति, शकटं करोतीति ॥ कथं पुनर्ज्ञायते—'प्राकृतमेवैतत्कर्मे'ति ? ॥*॥ आत्मनेपदेऽकर्मकर्तुः कर्मदर्शनात् ॥*॥ आत्मसमवायोऽकर्मकर्तुः कर्म दृश्यते ॥ क्व ? ॥ हन्त्यात्मानं, हन्यत आत्मेति ॥ विषम उप

प्र.]यथा दुग्धं पयः इत्यत्र गन्तव्यं ग्रामः इत्यादि ।तथा भावकर्मकर्त्राऽऽत्मनेपदं कर्मवदिति वचनात् कर्तरि भवितव्यमेव तेन,—भिद्यते कुसूलः स्वयमेवेति । तथा च भिनत्तेर्मांसकर्मकर्तृकस्यापि वक्ष्यमाणे भिनत्ति ग्रामं स्वयमेवेति च कर्तुरुदाहरिष्यते । सिद्धं त्विति । प्राकृतं स्वाभाविकमवैतत्कर्म न स्थानिदेशिकमित्यर्थः । आत्मसमवाय इति । एकस्यैव वस्तुनो भेदेनाऽऽत्मा कर्मत्वेन कर्तृत्वेन च विवक्षित इत्यर्थः । तदुक्तम् 'एकस्य बुद्ध्यवस्थाभिर्भेदे च परिकल्पिते । कर्मत्वं करणत्वं च कर्तृत्वं चोपजायते' । इति । कर्म दृश्यत इति । कर्मत्वं दृश्यत इत्यर्थः । विषम उपन्यास इति । अयं भावः—हन्त्यात्मानं इत्यात्मशब्देन प्रतिपादितत्वादुक्तं कर्मत्वम् । इह तु 'लूयते केदारः' 'पच्यते ओदनः' इत्यादौ यदा 'स्वयमिति शब्दो न प्रयुज्यते, तदाऽऽत्मनोऽविवक्षया कर्मत्वाऽभावात्कर्तृत्वमेव द्विधाभवनादौ केदारादीनामिति कर्मवदतिदेशः कर्तव्य एव । 'नमते दण्डः' इत्यादौ च प्राकृतकर्मत्वे

उ.]त्ते'त्यत्र । अत्र कर्मत्वस्याऽभावेऽपि अकर्मकत्वनिबन्धनकर्तृत्वमादाय 'भिद्यते कुसूलः' इत्यस्य दुर्वारत्वेन तदग्रहणप्रयत्नोऽनर्थक इति भावः । तद्ध्वनि—यथा द्वीपादिना । यथा दुग्धमिति। अत्र गौः कर्मत्वे 'अप्रधाने दुहादीनामि'ति वचनात्कर्मण्येव कर्मणि च स्यात् । तदभावे तु कर्मान्तराऽभावादपादान एव कर्मणि क्ते 'गवा दुग्धं पयः' इति भवतीत्यर्थः । वस्तुतस्तु कर्मत्वाभावेन कर्मणि क्ते 'परशुभिन्नः कुसूलः' इत्यादौ तृतीयान्तं पूर्वपदं कर्मवाचकक्तान्त उत्तरपदे प्रकृतिस्वरमित्यर्थक तृतीया कर्मणीत्यनेन पूर्वपदप्रकृतिस्वरं प्राप्नोति, कर्तरि तु नेति फलं विशेषस्य स्पष्टतया चिन्त्योऽयं केयट । कर्मणि प्रत्ययेनैव प्रयोगाणां सिद्धे सूत्रं व्यर्थमित्याशङ्क्य भाष्ये—सिद्धं त्विति । आत्मसमवाय इति । आत्मवाचकपदसमभिव्याहारे इत्यर्थः । अकर्मकर्तुरिति । कर्मभिन्नस्य कर्तुरात्मनः सत्त्वेऽपि कर्म दृश्यत इत्यर्थः । तथा 'भिद्यते कुसूल' इत्यादावपि आत्मनः कर्तृत्वात्कर्मण्येव लकारेण सिद्धम् । अत एव 'आत्मने'त्यर्थकं 'स्वयमेवे'ति कर्मकर्तुरुदाहरणेषु प्रयुज्यत इति तात्पर्यम् । समाधत्ते—विषम इति । तत्र हन्त्य वैषम्यं दर्शयति—दृष्टान्त इति ।

१ 'लित्या' । २ 'कर्मकर्तु' । ३ 'हन्यत आत्मनेति' 'आत्मना हन्यते इति' ।

न्यास । 'हन्त्यात्मान'मिति कर्म दृश्यते कर्ता न दृश्यते । आत्मना हन्यत इति च कर्ता दृश्यते कर्म न दृश्यते ॥*॥ पदलोपश्च ॥*॥ पदलोपश्चात्र द्रष्टव्य । हन्त्यात्मानमात्मा । आत्मना हन्यत आत्मेति ॥ क पुनरात्मान हन्ति को धाऽऽत्मना हन्यते ? ॥ द्वावात्मानौ, अन्तरात्मा शरीरात्मा च । अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदु खे अनुभवति । शरीरात्मा तत्कर्म करोति येनान्तरात्मा सुखदु खे अनुभवति । ॥*॥ सकर्मकाणा प्रति

प्र ]यक्चिणो प्रतिषेधे शप्चलौ न स्याताम् । 'भिद्यते कुसूलेने'ति च सकर्मकत्वा द्धातोर्भावे लो न स्यात् कर्म दृश्यतइति । 'आत्मान'मिति द्वितीयान्तवाच्य कर्म । कर्ता न दृश्यत इति । 'हन्ती'ति कर्तरि लकारोत्पत्तावपि कर्तृविशेषानुपादाना दिति भाव । कर्ता दृश्यत इति । तमन्तरेण क्रियाया अभावादात्मनेत्येनद्वाच्य इति भाव । कर्म न दृश्यत इति । कर्तृविशेष्यव्यतिरेकेणाऽन्यस्याऽत्र कर्मणो दुरु पपादत्वादिति भाव । पदलोपश्चेति । गम्यमानार्थत्वादप्रयोग पदस्येत्यर्थ । यत्तु लूयते केदार स्वयमेवे'ति वृत्तिकारैरुदाहियते तत्र कर्त्रन्तराऽभावप्रतिपादनेन केदारस्यैव कर्तृत्वप्रतिपादनाय स्वयशब्द प्रयुज्यते, नत्वेतत्कर्मवद्भावस्योदाहरण, स्वयशब्दस्यात्मनेति तृतीयान्तार्थे वर्तनादात्मन कर्तृत्व केदारस्य प्रकृतकर्मत्व सद्भावात् । द्वावात्मानाविति,–करणावित्यत्र व्याख्यातमिति तत एवावधार्यम् । आक्षिप्यत इति । क्रियान्तरस्य सयोगस्य कर्मणि दर्शनात्कर्मस्थक्रियत्वमत्र द्रष्ट-

उ ]भावे ल इति । इदमुपलक्षण तव्यादीनाम् । एतेन 'भिद्यते कुसूलेनात्मे'ति कर्म ण्येवाऽयम्प्रयोग इत्यपास्त, भेत्तव्यमात्मनेदमित्याद्यसिद्ध्यापत्ते । न च तत्राऽपि कर्मणि, नियमेन नपुसकप्रयोगाऽनापत्ते । इत्थमुक्त वैषम्य विघटयति भाष्ये– हन्त्यात्मानमित्यादिना । एवञ्चात्र शब्देन प्रतिपादनाऽभावेऽपि यथा कर्मत्व तथा प्रकृतेऽपि भविष्यतीति भाव । वैषम्यमुपपादयति–पदलोपश्चेति । तथाचष्ट– गम्यमानेति । एवञ्च इन्तिग्यध्याहारसम्भवादात्मस्यैकदेशन्यायेन बोधसम्भवाच्च तत्राऽऽत्मभेदस्य शब्देन प्रतिपादनमिति वैषम्यमस्त्येवेति भाव । ननु कर्म वद्भावविषयेऽपि 'स्वय'मित्यस्य प्रयोग उदाहरणेषु दृश्यत इति तत्राऽप्यस्त्वेव भेदस्य शब्देन प्रतिपादनमत आह–यत्त्विति । न त्वेतदिति । 'आत्मने'त्यर्थक 'स्वय'पदघटित विवक्षितात्मकर्तृकमित्यर्थ । नन्वेकस्यैव वस्तुन कथ शब्दभेदमात्रेण भिन्नधर्मतेति शङ्कते भाष्ये–क पुनरिति । आत्मान हन्ति य आत्मा स क इत्यर्थ । औपाधिकभेदेन भेदमारोप्य भिन्नधर्मतेत्युत्तराशय । सयो- गस्य कर्मणीति । अन्योन्यसयोगकृतदर्पादिकारणस्येत्यर्थ । ननु सयोगस्य तत्कृत

१ 'इद द्रष्टव्य' । २ 'आत्मना' । ३ 'शरीरात्मा अन्तरात्मा च' ।

यथाऽन्योन्यमाश्लिष्यत इति ॥*॥ सकर्मकाणां प्रतिषेधो वक्तव्यः ॥ किं प्रयोजनम्[1] ॥ [ 'अन्योन्यमाश्लिष्यत इति' ][1] ॥ अन्योन्यमाश्लिष्यत अन्योन्यं संस्पृशत अन्योन्यं गृह्णीत इति ॥*॥ तपेस्तपःकर्मकस्य वचनं नियमार्थम्॥५॥ तपेस्तपःकर्मकस्य वचनं नियमार्थं भविष्यति– तपेरेव सकर्मकस्य नान्यस्य सकर्मकस्येति॥ तस्य तर्ह्यन्यकर्मकस्यापि प्राप्नोति–उत्तपति सुवर्णं सुवर्णकारः । उत्तप्यमानं सुवर्णं सुवर्णकारमुत्तपति ॥ ॥*॥ तस्य च तपःकर्मकस्यैव ॥*॥ तस्य च तपःकर्मकस्यैव कर्ता कर्मवद्भवति नान्यकर्मकस्येति ॥

---

प्र ] व्यम्। तपेरिति।तपः इति योगविभागेन नियमः क्रियत इति भावः। ननु तप्यते तपस्तापसः इत्यत्र कर्मस्थक्रियया तुल्यक्रियत्वं कर्तुर्नास्ति, उपवासादेस्तपसः कर्तृत्वे तपतेः स्वार्थत्यागात्तापसस्य तु कर्तृत्वेऽनर्थत्वात्। नैष दोषः। शरीरसन्तापलक्षणायाः क्रियायास्तु तपस्तापसस्थाद्वयेऽपि शरीरसन्तापरूपमेवार्थं तापसस्य धत्ते

---

उ ] पूर्वदिश कर्तर्यपि सत्त्वेनोत्तरत्वात्कथं कर्मस्थत्वमिति चेन्न हृदयरूपविशेषस्य धात्वर्थकर्मत्वकृतत्वेन कर्मस्थत्वमवधारणात्। यद्यप्युक्तरीत्या नेदमुदाहरणं तथाप्ययमत्र भाष्यार्थः, कर्मपदेन तत्स्थक्रिया लक्ष्यते 'मञ्चाः क्रोशन्ती'तिवत्। अन्यतरस्मिन्निया प्रति कर्मण्यन्यतरस्मिन् या संयोगानुकूलक्रिया तादृश्येवाऽपरस्मिन् कर्तरीति स्यादेव प्रसङ्गः। यद्यपि 'देवदत्तादयः पचन्ती'त्यादाविव धातुना भेदस्याऽप्रतीतिस्तथाप्यर्थभेदकृत सामान्यभेदमादाय तुल्यत्वाऽस्तीति। 'कर्मत्वोपयोगिकर्मस्थक्रियया कर्तृत्वोपयोगिक्रिया तुल्या यस्य कर्तु'रित्यर्थे तु न मानमिति बोध्यम्। एकयोगे नियमद्वयाऽलाभादाह–योगविभागेनेति। भाष्ये–किमिदं तप इति। सूत्रे 'तपः कर्मकस्ये'त्यत्र तपः' पदेन किमुच्यत इति प्रश्नः। 'धात्वर्थः सन्ताप' इत्युत्तरम्। [illegible]त्वार्थत्वादिति। 'तापसं तपस्तपती'त्यत्र तु त्यजतीत्यर्थावगमात्। अर्जनार्थत्वादिति। 'तापसस्तपस्तप्यते' इत्यत्रोऽर्जयतीत्यर्थावगमादिति भावः।

शरीरेति। शरीरसन्तापलक्षणायाः क्रियायाः स्थलद्वयेऽपि तुल्यत्वात्, यत शरीरसन्तापलक्षणमर्जनमेव तापसस्य व्यापारो नाऽन्य इत्यन्वयः। अथ भाव 'तपति तापसं तपः' इत्यस्य सन्तापविशेषस्तापसं तपतीत्यर्थः। तपतिरत्राऽन्तर्भावितण्यर्थः। तापसवृत्तिशरीरसन्तापसामान्यानुकूलव्यापारानुकूलव्यापारः सन्तापविशेषवृत्तिरिति बोधः। तदनुकूलो व्यापारश्च सन्तापविशेषस्वरूपावस्थानरूप एव। तापसः शरीरसन्तापसामान्यानुकूलव्यापारश्च सन्तापविशेषस्वीकार एव। स्वार्थत्याग तापसस्य कर्तृत्वम्। 'तापसस्तपः सन्तप्यते' इत्यत्र सन्तापविशेषाऽभिन्नशरीरसन्तापाऽनुकूलव्यापारस्तापसकर्तृक इति बोधः। कैयटे शरीरसन्तापपदेन

---

१ इदं लुप्तं स्यात्। २ 'संगृह्णीत'। ३ पुनः सकर्म। ४ इति क्वचिन्न।

किमिदं तप इति [१] ॥ तपेरयमौणादिकोऽस्कारो भावसाधन ॥ क प्रकृत्यर्थ क प्रत्ययार्थ ? ॥ स एव सन्ताप ॥ कथ पुन स एव नाम प्रकृत्यर्थ स्यात्स एव प्रत्ययार्थ ॥ सामान्यतपेरवयवतपि कर्म भवति । तद्यथा स एतान्पोपानपुषत्,—गोपोषमश्वपोष रैपोषमिति सामान्यपुषेरवयवपुषि कर्म भवति । एवमिहापि सामान्यतपेरवयवतपि कर्म भवति । ॥*॥ दुहिपच्योर्बहुल सकर्मकयो ॥*॥ दुहिपच्यो सकर्मकयो कर्ता बहुल कर्मवद्भवतीति वक्तव्यम्। दुग्धे गौ पय [स्वयमेव]। तस्मादुदुम्बर लोहित फल पच्यते ॥ बहुलवचन किमर्थम् ? ॥ 'परस्मैपदार्थम्' ॥ यद्येव नार्थो

प्र ]व्यापार । क प्रत्ययार्थ इति । तापसेन तपस्तप्यत इति कर्मणि लकारोत्पत्तौ प्रकृत्यर्थस्यैव क्रियारूपस्य प्रत्ययार्थत्व दृश्यते । क्रियाकर्मणोश्च साध्यसाधनभावा-द्भेदेन भाव्यम् । इह भेदाऽभावात् प्रकृतिप्रत्ययार्थानुपपत्ति । अथ वा 'तप कर्मकस्ये'ति वचनात् प्रकृत्यर्थस्यैव कर्मत्वमाश्रित, तच्च विरुद्धमिति भाव । अव यवतपिरिति । विशेषतपिर्ज्ञानलक्षण तप इत्यर्थ । दुग्धे गौरिति । गौर्मुञ्चति पय इत्यर्थ । दुहद्विकर्मकत्वात्कर्मस्थक्रियातुल्यक्रियत्वेऽपि सकर्मकत्वादप्राप्ते वचनम् । 'फल पच्यत' इत्यत्र वृक्षस्य कर्तृत्वविवक्षायामत्यन्तमप्राप्ते वचनम् । अन्ये

उ ]स व्यापार एव। तदेव चाऽर्जनमिति बोध्यम्।तत्र क्रियाविशेषणत्वात्'स्तोकमेधते' इत्यादाविव तपस कर्मत्वमिति । भाष्ये–तपेरयमौणादिकोऽस्कारो भावसाधन इति । इदमुणादीनां व्युत्पन्नत्वमिति मते उक्तम् । अव्युत्पन्नत्वमिति पाणिनिसम्मते पक्षे तु 'तप 'शब्दस्य सन्तापोऽर्थ इति बोध्यम् । एतदेव परसम्मताऽन्वाख्याने न दर्शितम् । ननु प्रकृतिप्रत्यययोरप्रकृत्वात्प्रश्नाऽनुपपत्तिरत आह–तापसेनेति।प्रकृत्यर्थस्यैवेति । सन्तापस्येत्यर्थ । तस्यैव तप पदार्थत्वादिति भाव । प्रत्ययार्थत्वम्। लिङ्प्रत्ययार्थकर्मरूपत्वम् । यद्यपि क्रियाविशेषणरूपे कर्मणि लकारो न, कर्तृसादृश्येन धात्वर्थे भेदेनान्वयिकर्मण एव तत्र ग्रहणात्, तथाऽपि भाष्यप्रामाण्यात्सामान्यविशेषभावेनान्वयिनि क्रियाविशेषणे कर्मणि लकारो भवत्येव । अत एव 'स्तोक'मित्यादे क्रियाविशेषणस्यैकत्वनपुंसकत्वे अपि । 'एतान् पोषानपुष'दित्यादौ पुंस्त्वबहुवचने इति बोध्यम् । ज्ञानलक्षण तप इति । ज्ञानजनकोपवासादिरूप मित्यर्थ । स एव सन्ताप इति भाष्यस्य–स एव सन्तापविशेष इत्यर्थ । विशेषेऽपि सामान्यसत्त्वात् 'स एव'त्यस्य नाऽनुपपत्ति । भाष्ये 'एतान् पोषा'नित्यस्य विशेषसमर्पकाणि 'गोपोष'मित्यादीनि घमन्तानि बोध्यानि । अत्यन्तमप्राप्त इति ।

१ 'प्रत्ययार्थ स्यात्स एव प्रकृत्यर्थ' । २ 'अपुष्यत्' । ३ 'कर्मवद्बहुल भवतीति' । ४ इदं क्वचिन्न । ५ अत्र–'बहुलवचन परस्मैपदार्थम्' इति वार्तिकमासीदित्यन्ये ।

युज्यते ब्रह्मचारी योगम् ॥*॥ करणेन तुल्यक्रिय: कर्ता बहुलम् ॥*॥ करणेन तुल्यक्रिय: कर्ता बहुलं कर्मवद्भवतीति वक्तव्यम्। परिवारयन्ति कण्टकैर्वृक्षम्। परिवारयन्ते कण्टका वृक्षमिति ॥*॥ स्रवत्यादीनां प्रतिषेधः ॥*॥ स्रवत्यादीनां प्रतिषेधो वक्तव्य:। स्रवति कुण्डिकोदकं, स्रवति कुण्डिकाया उदकम्। स्रवन्ति वल्मीकान्युदकं, स्रवति वल्मीकेभ्य उदकमिति ॥ स तर्हि प्रतिषेधो वक्तव्य:?॥ न वक्तव्य:। 'तुल्यक्रिय' इत्युच्यते। क्रियान्तरं चाऽत्र गम्यते। इह तावत्स्रवति कुण्डिकोदकमिति,—विसृजतीति गम्यते।'स्रवति कुण्डिकाया उदक'मिति,—निष्क्रामतीति गम्यते। 'स्रवन्ति वल्मीकान्युदक'मिति,—विसृजन्तीति गम्यते।स्रवति वल्मीकेभ्य उदकमिति,—पततीति गम्यते ॥*॥ भूषाकर्मकिरादिसनां चाऽन्यत्रात्मनेपदात् ॥*॥ भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्प्रतिषेधो वक्तव्य:। भूषयते कन्या स्वयमेव। अलंभूषत कन्या स्वयमेव।

प्र.]प्रक्षेपाद्यापनायेत्यर्थ:। युज्यत इति। योगो ब्रह्मचारिणं युनक्ति, सम्बध्नातीत्यर्थ:। ततो ब्रह्मचारिण: कर्तृत्वविवक्षायां 'युज्यते ब्रह्मचारी योग'मिति भवति। करणेनेति। बहुलग्रहणात्साध्वसिश्छिनत्तीत्यादौ न भवति। स्रवति कुण्डिकेति। निष्क्रामदुदकं निष्क्रामयतीत्यस्मिन्नर्थे तुल्यक्रियत्वात् प्राप्त: कर्मवद्भावो निषिध्यते। विसृजतीति गम्यत इति।तथा च लोके कथ्यते 'कृपणोऽसौ न किञ्चित् स्रवती'ति। विसर्गश्च दानमुच्यते इति तुल्यक्रियत्वाऽभाव:। भूषाकर्मेति। कर्मशब्द: क्रियावाची। भूषाफलं च शोभाख्यं कर्मणि दृश्यते इति कर्मस्था भूषा। अण्यन्तार्थं च भूषाग्रहणं,ण्यन्तानां च वक्ष्यमाणेन यक्चिणो: प्रतिषेधस्य सिद्धत्वात्। तेन अलं-

उ.]विशेष:। प्रक्षेपाद्यापनायेत्यस्य 'ह्यास्त्वि'त्यादि। योगो ब्रह्मचारिणमिति–पूर्वं षष्ठेयम्। 'सम्बध्नाती'त्यस्य सम्बन्धानुकूलव्यापारवान् भवतीत्यर्थ:। तत इति। प्रतियोगित्वावच्छिन्न: सम्बन्धो युजेरर्थ:।प्रतियोगिताश्रयत्वाच्च योगस्य कर्मत्वम्। यत्तु 'योग'मिति प्रतियोगे द्वितीया। एवञ्चाऽकर्मकत्वात्कर्मवद्भावे सिद्धे यगाद्यभावाय ह्यन्मानविधानार्थमिदमिति, तन्न, 'सृजियुज्यो'रिति वार्तिके 'सकर्मकयो'रिति भाष्यविरोधापत्ते:। भाष्ये परिवारयन्ते कण्टका इति। न च 'णिचश्चे'त्यनेनैवात्मनेपदं सिद्धम्, यक्चिणौ तु 'णिश्रन्थिग्रन्थी'ति प्रतिषिद्धावेवेति व्यर्थमिदमिति वाच्यं, कर्तृगामित्वाऽभावेऽप्यात्मनेपदार्थं चिण्वद्भावार्थञ्च वार्तिकस्याऽऽवश्यकत्वात्। स्रवति कुण्डिका उदकमित्यस्य निष्क्रामयतीत्यर्थ:। स्रवति कुण्डिकाया इत्यस्य निष्क्रामतीत्यर्थ:। तदाह–निष्क्रामदिति। ननु विसर्गोऽपि विभागाऽनुकूलव्यापारो निष्क्रमणादनतिरिक्तोऽत आह–विसर्गश्च दानमिति। मुख्यदानपदार्थस्याऽत्राऽऽ-

१ 'यति'। 'वृक्ष'। २ इद प्रक्षिप्त।

मण्डयते कन्या स्वयमेव। अममण्डत कन्या स्वयमेव। किरादि—अवकिरते हस्ती स्वयमेव। अवाकीर्ष्ट हस्ती स्वयमेव। [गिरते ग्रामः स्वयमेव। अगीर्ष्ट ग्रामः स्वयमेव]। सन् चिकीर्षते कटः स्वयमेव। अचिकीर्षिष्ट कटः स्वयमेव॥

न दुहस्नुनमां यक्चिणौ ॥ ३।१।८९ ॥

॥*॥ यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानम्॥*॥ यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानं कर्तव्यम्। णि—कारयते कटः स्वयमेव। अचीकरत कटः स्वयमेव। णि॥ श्रि—उच्छ्रयते दण्डः स्वयमेव। उदशिश्रियत दण्डः स्वयमेव। श्रि॥ ब्रूञ्—ब्रूते कथा स्वयमेव। अवोचत कथा स्वयमेव॥ भारद्वाजीयाः पठन्ति ॥*॥ 'यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम्' ॥*॥ इति ॥ [न दुहस्नुनमां]॥

---

प्र ] कुरुते स्वयमेव कन्या, अलमकृत स्वयमेव कन्येति भवति। अवकिरत इति। हस्तिनं कश्चित्पांस्वादिनाऽवकिरति, तत्र सौकर्यात्कर्तृत्वेन हस्ती विवक्ष्यते। चिकीर्षत इति। करोतिक्रियापेक्षमत्र कर्मस्थक्रियत्वम्, इच्छा तु कर्तृस्थैव, अर्थाच्च करोतेः प्राधान्यं, तद्गतत्वादिच्छायाः। [कर्मवत्कर्मणा तुल्यक्रियः]॥

न दुहस्नु। यक्चिणोरिति। आत्मनेपदविधावकर्मका ये धातवो निर्दिष्टास्ते यदान्तर्भावितण्यर्थाः सकर्मका भवन्ति तदा कर्मवद्भावात् प्राप्तौ यक्चिणौ प्रतिषिध्येते। यथा 'विकुर्वते सैन्धवाः'। वल्गन्तीत्यर्थः। तान्यदा अन्यो वल्गयति तदा तेषां कर्म

---

उ ] त्वेन इति भावः। सिद्धत्वादिति। वक्ष्यमाणेन यक्चिणोः प्रतिषेधे सिद्धेऽपि स्नातेर्निषेधे चिण्वद्भावाऽभावाय ण्यन्तस्यापि एतत्प्रयोगेऽवश्यकः, 'अन्यत्रात्मनेपदा'दित्यनेन तस्याऽप्यत्र निषेधात्। 'णिश्रन्थी'त्यनेन तु न सिद्धिः, न हि चिण्निषेधेन चिण्वद्भावनिषेधो लभ्यत इति चिन्त्यमेतत्। कर्तृत्वेन हस्त्येति। अवकिरते—व्याप्तो भवतीत्यर्थ इति भावः। आत्मनस्तम् विशेषेण व्याप्तं करोतीत्यर्थः। भाष्ये—अवाकीर्ष्टेति। 'अन्यत्रात्मनेपदा'दित्युक्तेश्चिण्वद्भावोऽपि नेति भावः। अत एवेदं वार्तिकं 'न दुहे'त्यत्र न पठितम्। चिकीर्षेरिच्छावाचकत्वात्कर्मस्थक्रियत्वाऽभावमाशङ्क्याह—करोतिक्रियापेक्षमिति। ननु सनः परत्वात्तस्य कर्मवद्भावस्तत्प्रधानार्थस्य न कर्मस्थत्वमित्यत आह—अर्थाच्चेति। [कर्मवत्कर्मणा]॥

न दुहस्नुनमां। अकर्मकाणां कर्मस्थक्रियया तुल्यक्रियत्वाभावात्कर्मवत्त्वाऽप्राप्तौ निषेधो व्यर्थोऽत आह—आत्मनेपदेति। सकर्मका भवन्तीति। 'तन्नो व्यापारनिवृत्तौ यदा कर्मकर्तृत्व'मिति शेषः। व्यक्तपतेति। अत्र 'चिण्वद्भावोऽपि नेति' वैयाकरणमाहु केचित्। 'कृत' इत्यनुवर्तमाने 'वे शब्दकर्मणः' 'अकर्मकाच्चे'त्यत्राऽस्य निर्दिष्टः। परे तु पक्षे चिण्वद्भावे 'व्यतारिपते'त्यपि

## कुषिरजो प्राचां श्यन्परस्मैपदं च ॥ ३।१।९० ॥

॥*॥ कुषिरजो श्यन्विधाने सार्वधातुकवचनम् ॥*॥ कुषिरजो श्यन्विधाने सार्वधातुकग्रहणं कर्तव्यम् ॥*॥ अवचने हि लिड्लिटो प्रतिषेधः ॥*॥ अक्रियमाणे हि सार्वधातुकग्रहणे लिड्लिटो प्रतिषेधो वक्तव्यः स्यात्। चुकुषे पादः स्वयमेव। रराजे वस्त्रं स्वयमेव। कोषिषीष्ट पादः स्वयमेव। रञ्जिषीष्ट वस्त्रं स्वयमेव। क्रियमाणे चापि सार्वधातुकग्रहणे—कैतीह कुष्णाना पादौ इत्यत्रापि प्राप्नोति। श्यना च स्यादीनां बाधनं प्राप्नोति। कोषिष्यते पादः स्वयमेव। कोषिता पादः स्वयमेव। अकोषि पादः स्वयमेव। रङ्क्ष्यते वस्त्रं स्वयमेव। अरञ्जि वस्त्रं स्वयमेव ॥ रङ्क्ता वस्त्रं स्वयमेव।

प्र ]वम्।पुनः सौकर्यातिशयात्कर्तृत्वविवक्षया—'विकुर्वते सैन्धवाः स्वयमेव' 'व्यङ्कयन्ते सैन्धवाः स्वयमेवे'ति यक्चिणो न भवतः। 'उत्पुच्छयते गौ'रित्यत्राप्यन्तर्भावितण्यर्थं वाक्कर्मवद्भावाद्यक्चिणौ प्राप्तिः। मृते कर्मेति। वचनं शब्दप्रयोजनफलं वाक्कर्मस्थम्। [ न दुहस्नुनमां यक्चिणौ ] ॥

कुषिरजो। यकि प्राप्ते श्यन्विधीयते, तेन श्यनि 'नित्यादि'रित्याद्युदात्तं पदं भवति। 'शप्श्यनोर्नित्य'मिति नित्यश्च नुमागमः,—'कुष्यन्ती जङ्घे'ति। सार्वधातुकवचनमिति। सार्वधातुके विषयभूते श्यन्परस्मैपदे भवत इत्यर्थः। कुष्णाना इति। 'ताच्छील्यवयोवचने'ति चानश्। तत्र श्यन् प्राप्नोति, परस्मैपदं चान्वाचयशिष्टं मन्यते। श्यना चेति। विशेषविहितत्वादिति भावः। यक्प्रतिषेधस्य

उ ] बोध्यम्। यदि चिण्प्रतिषेधे चिण्वद्भावप्रतिषेधोऽपीष्टः स्यात्तर्हि 'भूषाकर्मे'ति पूर्ववार्तिकमप्यत्रैव कुर्यात्। एतद्वा तत्रैव कुर्यात्। विभेदेन करणाच्च चिण्वद्भावस्य प्रतिषेधोऽनेन नेति ध्वनयति। चिण उदाहरणमेकवचने बोध्यमित्याह्। भारद्वाजीयानां 'हेतुम'त्पदत्यागे बीजमाह—उत्पुच्छयतेति। अत्र यगादिकं न। मृते कर्मेति। 'अते'ति शेषः। प्रधानपरकं वचनं मूलोऽर्थः, प्रधानस्य कर्मेणान्निष्पन्नात्स्वदेः प्रधानान्तरनिवेशपदर्शनाय कर्मस्थत्वं बोध्यम् ॥ [ न दुहस्नु ]।

कुषिरजो। यकश्यनोर्विशेषं दर्शयति—नित्यादिरित्यादिना। परस्मैपदस्य सार्वधातुके विधानाऽसम्भवादाह—विषयेति। लिड्लिटो प्रतिषेध इति। तत्र नित्यात्मनेपदस्यैवेष्टत्वादिति भावः। ननु 'कुष्णाना' इत्यत्र परस्मैपदाऽप्राप्तेस्तत्सहचरितं श्यनपि नेत्यत आह—परस्मैपदञ्चेति। विशेषविहितत्वादिति। लुङ्, लुङ्व्यतिरिक्ते श्यनधारिताद्यादिर्दिचिन्त्यम्। 'परत्वाद्बाध' इत्युचितमिति कश्चित्।

१च क्वचिन्नास्ति।२'इहापि प्राप्नोति कतीह कुष्णाना पादा इति'।३'इद क्वचिन्न'।४इत पर 'रङ्क्ष्यते' इत्याद्युदाहरणं क्वचित्। ५ इत परम्–'अरञ्जी'त्याद्युदाहरणं क्वचित्।

यत्तावदुच्यते "सार्वधातुकग्रहणं कर्तव्य"मिति। न कर्तव्यम्। प्रकृतमनुवर्तते ॥ क्व प्रकृतम् ? ॥ 'सार्वधातुके य'गिति ॥ यदि तदनुवर्तते पूर्वस्मिन्योगे किं समुच्चयो–ले च सार्वधातुके चेति, आहोस्विल्लग्रहणं सार्वधातुकविशेषणम् ? ॥ किं चातः ? ॥ यदि समुच्चयः 'कर्मवद्भिन्दानाः कुसूल' इत्यत्रापि प्राप्नोति । अथ लग्रहणं सार्वधातुकविशेषणम्,–चिण्णिषेधेन सिध्यति–बिभिदे कुसूलः स्वयमेव, भित्सीष्ट कुसूलः स्वयमेवेति ॥ अस्तु लग्रहणं सार्वधातुकविशेषणम् ॥ ननु चोक्तं 'चिण्णिषेधेन सिध्यती'ति ॥ चिण्ग्रहणमपि प्रकृतमनुवर्तते॥ क्व प्रकृतम् ?॥ 'कास्प्रत्ययादाममन्त्रे लिटि' 'चिण्च शिष्य'दिति चै । एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तं–'कर्तरि कृष्यमाणः पादः कृष्यतेऽपि प्राप्नोती'ति अत्रोऽपि लविशिष्टं सार्वधातुकग्रहणमनुवर्तते ॥

यदप्युच्यते–'श्यना च स्यादीनां बाधनं प्राप्नोती'ति । यक्प्रतिषेधमनन्येन श्यनं वक्ष्यामि । 'न दुहस्नुनमां यक्चिणौ' । ततः 'कुषिरञ्जोः प्राचाम्' । कुषिरञ्जोः प्राचां यक्चिणौ न भवतः । ततः 'श्यन्परस्मैपदं चे'ति ॥ यद्येवं तर्हि यक्चो निषये श्यन्नसम्येव चिणोऽपि विषये प्राप्नोति–अकोषि पादः स्वयमेव, अरञ्जि नख स्वयमेव ॥ एवं तर्हि द्वितीयो योगविभागः करिष्यते [नदुहस्नुनमः] । न दुहस्नुनमां चिण्भवति । ततो 'यक्'। 'यक् न भवति दुहस्नुनमाम् । ततः 'कुषिरञ्जो प्राचां' । [कुषिरञ्जोः प्राचां] यक्न भवति । ततः 'श्यन्परस्मैपदं चे'ति । अथ वाऽनुवृत्तिं करिष्यते–'स्यतासी ललुटो' च्लि लुटि च्ले सिज्भवतीति। 'कर्तरि शप्'।स्यतासी ललुटो च्लि लुटि च्लेः सिज्भवतीति । 'दिवादिभ्यः श्यन्' । स्यतासी ललुटो च्लि लुटि च्लेः सिच् भवतीति। 'कुषिरञ्जोः प्राचां श्यन्परस्मैपदं च' । स्यतासी ललुटो च्लि लुटि च्लेः सिज्भवतीति ॥ अथ वाऽन्तरङ्गाः स्यादयः ॥कान्तरङ्गता ?॥ लकारावस्थायामेव स्यादयः । सार्वधातुके श्यन् ॥ [ कुषिरञ्जो प्राचां श्यन् ] ॥

]न्धनेति। ननु यत्र यक् प्राप्तस्य प्रतिषेधस्तत्र श्यन्परस्मैपदे भवतः नान्यत्रेति स्यादि विषये न भवतः ।लकारावस्थायामेवेति। अकृतव्यूहा व्यवस्थेषु विशेषविहिता स्यादयो

द ]भाष्ये–पूर्वस्मिन्योग इति। 'कर्मवत्कर्मणा तुल्यक्रियः' इत्यत्र ले च सार्वधातुके चेति। सार्वधातुकयोर्वान्यत्वेन स्थित कर्मवदित्यर्थः । भिन्दाना इति । शानच् । स्थाऽपि लेति । 'कुषिरञ्जो' इत्यत्रापि। लादेशसार्वधातुकविषय इत्यर्थः इति भाव । प्रकृतेन्वेव लादेशेष्विति । निरवकाशत्वाऽभावेऽपि विशेषविहितत्वस्य पूर्वप्रवृत्ति

१ 'कुसूल' । २ च क्वचिन्न । ३ 'इति प्राप्नोति' । ४ 'स्थापि' । ५ इदं क्वचिन्न । ६ इति क्वचिन्न । ७ 'व्यवस्था' ।

## धातोः ॥ ३।१।९१ ॥

आ कुतोऽय धात्वधिकार ?, किं प्राग्लादेशाहो स्विदा तृतीयाध्यायपरिसमासे ॥१॥*॥ धात्वधिकार प्राग्ल्यदेशात् ॥*॥ प्राग्लादेशाद्धात्वधिकार ॥ ॥*॥ लादेशे हि व्यवहितत्वादप्रसिद्धि ॥*॥ अनुवर्तमाने हि लादेशे धात्वधिकारे व्यवहितत्वादप्रसिद्धि स्यात्॥ किं च स्यात्?॥*॥ आद्ये योगे न व्यवाये तिङ स्यु ॥*॥ आद्ये योगे विकरणैर्व्यवहितत्वात्तिङो न स्यु । पचति पठतीति। इदमिह सम्प्रधार्यं विकरणा क्रियन्तामादेशा इति, किमत्र कर्तव्यम् ? ॥ परत्वादादेशा ॥ नित्या विकरणा । कृतेष्वप्यादेशेषु प्राप्नुवन्त्यकृतेष्वपि प्राप्नुवन्ति । नित्यत्वाद्विकरणेषु कृतेषु विकरणैर्व्यवहितत्वादादेशा न प्राप्नुवन्ति ॥ अनवकाशास्तर्ह्यादेशा ॥ सावकाशा आदेशा ॥ कोऽवकाश ? ॥ य एते लुग्विकरणा, श्लुविकरणाश्चे, लिङ्लिटौ च॥*॥न स्यादेत्व टेष्टिना यद्विधत्ते॥*॥ यच्च टित्मनस्त्रर्नेना 'टेरेत्व विधत्ते तच्च विकरणैर्व्यवहितत्वादादेशानां न स्यात्। ॥*॥ एश शित्वैम् ॥*॥ एशारश्च शित्कर्तव्य ॥ किं प्रयोजनम् ? ॥ शित्सर्वस्येति सर्वादेशो यथा स्यात् । अक्रियमाणे हि शकारे 'तस्मादित्तु-

प्र ]भवन्ति,एवं तेश्च श्यनो विरोधाद्बाधितत्वात् सन्नियोगशिष्टपरस्मैपदमपि न भवति।

धातो । स्वरितत्वप्रतिज्ञानादधिकारत्वमस्य ज्ञायते न त्ववधिविशेष । अथापि स्वरिते सति नाधिकारो भवतीति व्याख्यान तथापि दुर्ज्ञेयत्वात्र ज्ञायते च स्वरितत्व धात्वधिकारनिवृत्त्यर्थं प्रतिज्ञानमिति पृच्छति—आ कुत इति । आद्ये योग इति । 'तिप्तस्झी'त्यत्र । विकरणैरिति । स्यादयोऽत्र विकरणा अभिप्रेता न शबादय , तेषा सार्वधातुकाश्रयत्वादकृते लादेशे प्राप्त्यभावात् । यदा तु सार्व

उ ]प्रयोक्तव्येनेति भाव ।परे तु 'स्यतासी' इति सूत्रे आयादय' इत्यत'आर्द्धधातुके' इत्यनुवर्त्य तत्त्वावस्थायामेव स्यतासी । अतोऽकृतेष्वेवादेशेषु तत्प्रवृत्ति । इदमेवाऽभिप्रेत्य भाष्ये—लावस्थायामित्युक्तमित्याहु । श्यनो विरोधादिति । उभयो परत्वाऽसम्भवरूपो विरोध ॥ [ कुपिरजो प्राचा श्यन् ] ॥

धातो । तथाऽपीति । धात्वधिकारनिवृत्त्यर्थं प्रतिज्ञान य स्वरितत्व तत् क्वेति न ज्ञायत इति योजना । 'अनुदात्तङित' इत्यादिभिर्लादेशविधानात्तत्र धात्वधिकाराऽभावाद्भाष्ये उक्तम्—आद्ये योग इति । सर्वेषामेतन्नियामकत्वात्तिप्तस्झी-त्यस्याऽऽद्यत्वमिति भाव । 'आद्ये योगे धातोरित्यस्य सम्बन्धे व्यवधाने तिङो न स्यु'रिति सम्बन्ध । 'पचति पठती'ति भाष्योदाहरणाऽसङ्गतिं मत्वाऽऽह— यदा त्विति। इदमेवाऽभिप्रेत्य विकरणानामादेशाऽपेक्षया नित्यत्व वक्ष्यति। भाष्ये–

१ इद क्वचिन्न ।२ अष्टकार्त्तिकम् । ३ 'च ' क्वचिन्न ।४ 'स्तात्ता'। ५ 'लाभस्यात्'।

तस्यादे परस्येति तकारस्यैत्वे कृते द्वयोरेकारयोः श्रवणं प्रसज्येत। निवृत्ते पुनर्लादेशे धात्वधिकारेऽनन्यस्य विषयो भवन्तीत्येकारस्य एकारवचने प्रयोजनं नास्तीति कृत्वाऽन्तरेणापि शकारं सर्वादेशो भविष्यति ॥*॥ यच्चं लोटो विहितं ॥*॥ [ यच्चं लोटो विधीयते ] तच्च विकरणैर्व्यवहितत्वाच्च स्यात् ॥ किं पुनस्तत् ? ॥ 'लोटो लङ्वत्' 'एरुः' 'मेर्निश्च' 'वा छन्दसी'ति ॥ ॥*॥ यच्चाप्युक्तं लङ्लोटोस्तच्च न स्यात् ॥*॥ [ यच्चाप्युक्तं लङ्लिटोस्तच्च न स्यात् ] ॥ किं पुनस्तत् ? ॥ 'नित्यं ङितः' 'इतश्च' 'तस्थस्थमिपां तान्तन्ताऽमः' 'लिटः मसिपुस्' 'यासुट्परस्मैपदेषूदात्तो ङिच्चे'ति। तस्मात्प्राग्लादेशाद्धात्वधिकारः ॥ यदि प्राग्लादेशाद्धात्वधिकारः । शकारः शित्कर्तव्यः ॥ किं प्रयोजनम् ? ॥ 'शित्सर्वस्ये'ति सर्वादेशो यथा स्यात्। अनुवर्तमाने पुनर्लादेशे धात्वधिकारे 'तस्यादित उदात्तमर्धह्रस्वम्' 'तस्मादित्युत्तरस्यादेः परस्ये'ति थकारस्यात्वे द्वयोरकारयोः पररूपेण सिद्धं रूपं स्यात् 'पेच यूयं' 'चक्र यूय'मिति ॥ ननु च निवृत्तेऽपि लादेशे धात्वधिकारेऽनन्यस्य विषयो भवन्तीत्यकारस्याऽकारवचने प्रयोजनं नास्तीति कृत्वाऽन्तरेणापि शकारं सर्वादेशो भविष्यति ॥ अस्त्यन्यदकारस्याऽकारवचने प्रयोजनम् ॥ किम् ? ॥ वक्ष्यत्येतत् 'अकारस्याकारवचनं सम्प्रसङ्गार्थ'मिति॥ [ ॥*॥आर्द्धधातुकसञ्ज्ञायां धातुग्रहणं॥*॥ ] आर्द्धधातुकसञ्ज्ञायां धातुग्रहणं कर्तव्यं धातोः परस्यार्द्धधातुकसञ्ज्ञा यथा स्यादिह मा भूद्वृक्षत्वं प्लक्षत्वमिति। तस्माल्लादेशे धात्वधिकारोऽनुवर्त्यः ॥

ननु चोक्तं 'मार्येयोगे न व्यवाये तिङः स्यु'रिति ॥ नैष दोषः । आनुपूर्व्यात्सिद्धमेतत् । नाप्राऽकृतेष्वादेशेषु विकरणाः प्राप्नुवन्ति ॥ किं कारणम् ? सार्वधातुके विकरणा उच्यन्ते । न चाऽकृतेष्वादेशेषु सार्वधातुकत्वं भवति ॥ ये तर्हि नैतस्मिन्विशेषे विधीयन्ते ॥ के पुनस्ते ? ॥ स्यादयः ॥ अत्रापि विहि-

प्र ]धातुक इति विषयसप्तमीपक्षस्ताऽकृतेऽपि लादेशे शबादीनां प्राप्तिरस्ति। द्वयोरेकारयोरिति । सवर्णैकस्यादेशस्याप्यादेशश्रवणद्वारेण तस्यापि श्रवणप्रसङ्ग इति भावः । अकार इति । यस्यास्य स्थाने विधीयते। थकारस्यात्व इति । ननु

उ ]टिस्सञ्ज्ञानामिति। इमस्कटकारवाननिर्थ ।एकारस्यैकारवचने इति। यद्यपि विशेषविहितत्वात् 'टित' इति बाधित्वा 'लिटस्तझयो'रिति प्राप्नोति तथापि एकारस्य सिद्धत्वेकारवचने प्रयोजनं नास्तीति व्याख्येयम् । सर्वादेशो भविष्यतीति । निर्दिश्यमानपरिभाषयेति भावः । यस्येति । 'परस्मैपदाना'मित्यनेन । भाष्ये- सार्वधातुके विकरणा इति । विषयसप्तम्यास्तु परिभाषत्वात् स्यादिति भावः ।

१ श्लोकवार्तिकम् ।२ इदं क्वचित्।३ 'विहितं'।४इदं वार्तिकमित्यन्ये ।५'तथापि'।

तविशेषणं धातुग्रहणम्–'धातोर्विहितस्य रुस्ये'ति ॥ यद्येवं विन्दतीति णला-दयः प्राप्नुवन्ति ॥ धातुनाऽत्र विहितं विशेषयिष्यामो विदिना चाऽऽनन्तर्यम्–'धातोर्विहितस्य रुस्य विदेरनन्तरस्ये'ति॥ इह तर्हि–अजक्षिष्यन् अजागरिष्यसिति,–अभ्यस्ताज्झेर्जुस्भवतीति जुस्भावः प्राप्नोति ॥ अत्रापि धातुना विहितं विशेषयिष्यामोऽभ्यस्तेनानन्तर्यम्–'धातोर्विहितस्याभ्यस्तादनन्तरस्ये'-ति ॥ आत इत्यत्र कथं विशेषयिष्यसि ?॥ यदि तावद्धातुग्रहणं विहितविशे-षणमाकारग्रहणमानन्तर्यविशेषणम्,–अलुनन्नपुनन्नित्यत्रापि प्राप्नोति।अथाऽऽकारग्रहणं विहितविशेषणं धातुग्रहणमानन्तर्यविशेषणम्,–अपिबन् अजिघ्रसिस्यत्रापि प्राप्नोति ॥ अस्तु तर्हि धातुग्रहणं विहितविशेषणमाकारग्रहणमानन्तर्यविशेषणम् ॥ ननु चोक्तमलुनन्नपुनन्नित्यत्रापि प्राप्नोतीति ॥ नैष दोषः । लोपे कृते न भविष्यति ॥ नाऽत्र लोपः प्राप्नोति ॥ किं कारणम् ? ॥ ईत्वेन बाध्यते ॥ नाऽत्रेत्वं प्राप्नोति ॥ किं कारणम् ? ॥ अन्तिभावेन बाध्यते ॥ नात्राऽन्तिभावः प्राप्नोति ॥ किं कारणम् ? ॥ जुस्भावेन बाध्यते ॥ नाऽत्र जुस्भावः प्राप्नोति ॥ किं कारणम् ? ॥ लोपेन बाध्यते ॥ लोप ईत्वेनेत्वमन्तिभावेनाऽन्तिभावो जुस्भावेन जुस्भावो लोपेनेति चक्रकमव्यवस्था प्रसज्येत ॥ नास्ति चक्रकप्रसङ्गः । न ह्यव्यवस्थाकारिणा शास्त्रेण भवितव्यम् । शास्त्रेण नाम व्यवस्थाकारिणा भवितव्यम् । न चाऽत्र हलादिना मुहूर्तमपि शक्यमवस्थातुम् । तावत्येवाऽन्तिभावेन भवितव्यम् ।

प्र ] पर् य इति स्थिते परत्वादिट् प्राप्नोति । नैष दोषः । अकारो नित्यः, कृतेऽपीटि प्राप्नोत्यकृतेऽपि । इट् तु कृतेऽकारे वल्यादित्वाऽभावान्न प्राप्नोतीत्यनित्यः । यद्यपि शब्दान्तरस्य प्राप्त्या अकारस्याऽनित्यत्वं तथापि कृताऽकृतप्रसङ्गित्वाल्लिङ्गत्वमस्त्येव । न च शब्दान्तरप्राप्तिकृतमनित्यत्वमिह सर्वत्र शास्त्रे आश्रीयते ।

तावत्येवेति । कृत एव झिशब्देऽन्त एव विकरणे इत्यर्थः । आयधादिषूपदेशिवद्वचनादुपदेशकाल एव झस्याऽन्तादेशोऽनेन भाव्यमिति भावः । नास्ति

उ ] अत्राऽपीति 'सिद्ध'मिति शेषः । कथं ?,तत्राह–धातुग्रहणमिति । टेरेत्वसिद्धये विषयसप्तमीवादिनोऽपि विहितविशेषणमावश्यकमिति भावः । अपिबधिति । घवेषादेशस्य पदादित्वेन ग्रहणादिति भावः । 'लङः शाकटायनस्ये'ति जुस्प्राप्तिः । वस्तुतः क्वचिद्विहितविशेषणमिति सर्वत्र तदेवाश्रयणीयमिति न नियम इति न दोषः । भाष्यकारस्तु तथाऽऽश्रयणेऽप्यभ्युपेत्यवादेन दोषाऽभावं प्रतिपादयति । चक्रकमव्यवस्थेति–भाष्ये । चक्रकरूपाऽव्यवस्थेत्यर्थः । आयधादिष्विति । आदिना झोऽन्तस्यापि ग्रहादिति भावः । उपदेशकाल एवेति । उपदेशोत्तरकाले

अन्तिमात्रे कृते लोपः । लोपेन व्यवस्था भविष्यति ॥

यदप्युच्यते एषा शिरस्तमिति क्रियते, न्याय एव ॥

कानि पुनरस्य योगस्य प्रयोजनानि? ॥ ॥प्रयोजनं प्रातिपदिकप्रतिषेधः ॥*॥ प्रातिपदिकप्रतिषेधः प्रयोजनम् । धातोस्तव्यदादयो यथा स्युः प्रातिपदिकान्मा भूवन्निति ॥ नैतदस्ति प्रयोजनम्, साधने तव्यदादयो विधीयन्ते, साधनं च क्रियायाः । क्रियाऽभावात् साधनाऽभावः, साधनाऽभावादसत्यपि धात्वधिकारे प्रातिपदिकात्तव्यदादयो न भविष्यन्ति ॥ ॥स्वरादिषु (तर्हि) ॥*॥ स्वरादिषु तर्हि प्रयोजनम् । स्वरितीति । सुरितीति मा भूत् । ॥*॥ अङ्गसंज्ञा च ॥*॥ अङ्गसंज्ञा च प्रयोजनम् । 'यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्ग'मिति धातोरङ्गसंज्ञा सिद्धा भवति । ॥*॥ कृत्संज्ञा च ॥*॥ कृत्संज्ञा च प्रयोजनम् । धातोर्विहितः प्रत्ययः कृत्संज्ञो भवतीति कृत्संज्ञा सिद्धा भवति ॥*॥ उपपदसंज्ञा च ॥

प्र.] पदिकान्मा भूवन्निति । द्वितीयादिवदिति भावः । साधन इति । प्रकृतिवाच्यक्रियासाधनमर्थे शब्दान्तरवाच्यक्रियासाधने तव्यदादयो न भविष्यन्ति । द्वितीयादयस्तु प्रातिपदिकादेव विधीयमानाः शब्दान्तरवाच्यक्रियापेक्षे साधने वचनात्प्रवर्तन्त इति भावः । स्वरादिष्विति । येऽप्रयुक्ताः क्रियावचना आगमनस्यादिषु त्वादिभ्यस्तव्यदादयो मा भूवन् । न हि ते धातवः पाठे धातुसंज्ञाया निरस्तत्वात् । तत्र स्वरितीति प्रयोक्तव्ये सुरितीति प्रयोगोऽप्रयुक्तः, तत्र प्रत्ययोत्पत्तिर्मा भूदित्यर्थः ।

अङ्गसंज्ञेति । असति धात्वधिकारे धातूपसर्गसमुदायस्य क्रियाविशेषवाचित्वात्तत्र प्रत्ययविधाने तस्यैवाङ्गसंज्ञा स्यात्तत्रादिप्रसङ्ग —प्रास्थितेत्यादावित्यर्थः । तत्रै-

उ.] कार्यान्तरप्रवृत्तेरित्यर्थः । भाष्ये–अन्तिमस्य कृते लोप इति । तथाऽन्तरतम्यात् सूत्रं कृतेऽप्यन्त्यो लोपः पूर्वं स्थानित्वादेव स्थित्वा लुप्यत इति अनाद्यन्तेनाऽन्तरतम्यादिति भावः, 'इर्तु'मित्यत्रैकारस्योच्चारणार्थत्वेनाऽस्थितित्वेन स्थानित्वाऽभावः स्यादयात् । वस्तुतः 'आत' इत्यत्र सिद्धान्तेऽनुवृत्तेरन्त्यस्य भाष्ये, 'चिल लुपी'ति सूत्रस्थभाष्ये योग्यत्वेन न क्वापि दोषप्रसङ्ग इति ध्येयम् । प्रकृतसूत्रस्थभाष्यस्यैकदेशोक्ति । द्वितीयादीति । ता हि यथा शब्दान्तरवाच्यक्रियाऽपेक्षे स्वप्रकृत्यर्थस्य कर्मणि विधीयन्ते तथा तव्यदादयोऽपि स्युरित्यर्थः । द्वितीयादिभ्यो वैलक्षण्यमुपपादयति–प्रकृतीति । येऽप्रयुक्तेति । स्वप्रयोगाभावात् क्रियावाचकत्वमेवासम्भवीति भावः । तत्र प्रत्ययोत्पत्तिरिति । 'सुरिती'त्यनेन दृष्टान्त इत्यर्थः । भाष्ये–कृत्संज्ञा च प्रयोजनमिति । एतदनधिकारे धातोर्विहितस्य

१ इह क्वचित् । २ 'तव्यदादयः' । ३ 'सुरितीति' । ४ 'धातुविहितस्य प्रत्ययस्य कृत्संज्ञा' ।

॥ * ॥ उपपदसंज्ञा च प्रयोजनम् । तत्रैतस्मिन् धात्वधिकारे येत्सप्तमीनिर्दिष्ट तेंदुपपदसंज्ञं भवतीत्युपपदसंज्ञा सिद्धा भवति । कृदुपपदसंज्ञे तावत् प्रयोजयत । अधिकारादप्येते सिद्धे ॥ ण्यपादिषु तर्ह्यङ्गसंज्ञा च प्रयोजनम् ॥

॥ * ॥ धातुग्रहणमनर्थकं यद्विधौ धात्वधिकारात् ॥ * ॥ धातुग्रहणमनर्थकं ॥ किं कारणम्? ॥ 'यद्विधौ धात्वधिकारात्' । यद्विधौ धातुग्रहणं प्रकृतमनुवर्तते । तच्चावश्यमनुवर्त्यम् ॥ * ॥ अनधिकारे ह्यङ्गसंज्ञाऽभाव ॥ * ॥ अनधिकारे हि सत्यङ्गसंज्ञाया अभाव स्यात्—करिष्यति हरिष्यतीति ॥ यदि तदनुवर्तते चूर्णचुरादिभ्यो णिङ्भवति धातोश्चेति धातुमात्राण्णिच्प्राप्नोति ॥ * ॥ हेतुमद्वचन तु ज्ञापकमन्यत्राऽभावस्य ॥ * ॥ [हेतुमद्वचन तु ज्ञापकमन्यत्राऽभावस्य] ॥ यदयं हेतुमति चेत्याह तज्ज्ञापयत्याचार्यो 'न धातुमात्राण्णिज्भवती'ति ॥ इह तर्हि कण्ड्वादिभ्यो यक् भवति धातोश्चेति धातुमात्राद्यक्प्राप्नोति ॥ * ॥ कण्ड्वादिषु च व्यपदेशिवद्वचनात् ॥ * ॥ [कण्ड्वादिषु च व्यपदेशिवद्वचनात्सिद्धम्] ॥ यदयं कण्ड्वादिभ्यो

प्र ]तस्मिन्निति । सत्यस्मिन्धात्वधिकारे 'तत्रोपपद'मित्यस्य तच्छब्देन परामर्श उपपद्यते नान्यथा । यदयमिति । यद्यविशेषेण धातुमात्राण्णिच्स्यात्तदा करणे घरोदर्थे विधीयमानो हेतुमत्यपि करणे सिद्ध इति पुनस्तत्र णिच न विदध्यादित्यर्थः । चुरादिग्रहण तु 'प्रातिपदिकाद्धात्वर्थे' इत्याद्यर्थं स्यादित्यज्ञापकम् । व्यपदेशिवद्वचनादिति । धातुव्यपदेशो विद्यते येषां ते पचादयो धातुपाठपठिता व्यपदेशिनस्तैस्तुल्यं कण्ड्वादयो वर्तन्ते । यक् कित्वेन तेषां धातुत्वानुमानात् । तदयमर्थ —यदि धातुमात्राद्यक्प्रत्यय स्यात्तत कण्ड्वादिग्रहणमनर्थकं स्यात्, तेषामपि क्रियावाचित्वा-

उ ]त्कृत्संज्ञकत्वम् । अन्यथा स्यादीनामपि तत्त्व स्यादिति भाव । एव 'चिल लुङी' स्यादिलुङन्ते उपपदे इत्यादिक्रमेणाऽर्थ स्यादिति बोध्यम् । अधिकारादप्येते इति । 'कृदतिङ्' 'तत्रोपपद'मित्यनयोरधिकारत्वादित्यर्थ । ननु 'चुरादिभ्य' इत्यनेन स्वार्थे विधानात्प्रयोजकव्यापारे णिजर्थं 'हेतुमति चे'त्यावश्यकमत आह—यद्यविशेषेणेति । हेतुमत्यपीति । अपिना स्वार्थरूपकरणसङ्ग्रह । नन्वेव चुरादिग्रहणमेव ज्ञापक स्यादिति नोक्तमत आह—चुरादीति । प्रातिपदिकाद्धात्वर्थे 'सङ्ग्राम युद्धे' इत्यादिगणपठितेभ्योऽधातुभ्यो णिजर्थमित्यर्थ । परे तु चुरादिग्रहण स्वार्थरूपकरणे विध्यर्थम्, अन्यथाऽन्यधातुभ्य इव तेभ्योऽपि प्रयोजकव्यापाररूपे करणे एव स्यात् । एवञ्च 'प्रातिपदिकाद्धात्वर्थे' इत्यस्याऽनार्षत्वेऽपि न दोष इत्याहु । धातुमात्राद्यक इति । धातुमात्राद्यक्रो विधायकेन तेषामपि यक् सिद्ध-

१ यत्तदिति क्वचित् । २ इति क्वचित् । ३ 'न्यत्राऽप्रसक्तस्य' ।
४ इदं क्वचित् । ५ 'कण्ड्वादिभ्यो व्यप' ।

शब्देन निर्देशः क्रियते यत्र–चान्येन [शब्देन] सप्तमीत्यमात्रे सिद्ध भवति॥
अथ 'तत्र'ग्रहणं किमर्थम्। ॥*॥ तत्रग्रहणं विषयार्थम् ॥*॥ [ तत्रे ग्रहणं क्रियते ॥ किं प्रयोजन ?॥ विषयार्थम्'। ] । विषयः प्रतिनिर्दिश्यते। तत्रैतस्मिन्धात्वधिकारे यः सप्तमीनिर्दिष्टस्तदुपपदसंज्ञं भवतीत्युपपदसंज्ञा सिद्धा भवति । ॥*॥उपपदसंज्ञायां समर्थवचनम् ॥*॥ उपपदसंज्ञायां समर्थ ग्रहणं कर्तव्यम्। 'समर्थमुपपदं प्रत्ययस्ये'ति वक्तव्यम्। इह मा भूत्–आहर कुम्भं करोति कटमिति॥[अथ] क्रियमाणे चाऽपि समर्थग्रहणे 'महान्त

प्र ]पल्क्षितस्य संज्ञाविधानात्सर्वत्र सिध्यतीत्यर्थः । अथ तत्रग्रहणमिति। 'धातो'रित्यनुवर्तनादस्मिन्नेव धात्वधिकारे उपपदसंज्ञा भविष्यतीति प्रश्नः । तत्रैतस्मिन्निति। तत्रग्रहणेनाधिकारपरामर्शः स्पष्टप्रतिपत्तिर्भवतीति भावः । अथ धोपपदसंज्ञोत्तर नाधिकारादनेव धात्वधिकारे भविष्यतीति प्रश्नः । प्रतिसूत्रमधिकार आश्रीयमाणे गौरवं स्यात्। तत्र ग्रहणे तु क्रियमाणे अनेनैवं वाक्येन परिपूर्णत्वात्संज्ञा विधीयत इति प्रतिपत्तिलाघवं भविष्यतीत्युत्तरम्। समर्थवचनमिति । इह यदा निव प्रातिपदिकार्थे स्वार्थद्रव्यलिङ्गलक्षणस्तदा विभक्तिमन्तरेण कर्माऽधिकरणाद्युपपदं न भविष्यतीत्यवश्योत्पत्तव्य विभक्त्या । ततश्च पदविधित्वात्समर्थपरिभाषाया उपस्थानं भवत्येव । चतुष्कपक्षे पञ्चकपक्षे वा प्रातिपदिकस्यैव कर्मादिवाचित्वात्पदविधित्वा

ऽ ]भ्युपलक्षितस्येति। सौत्रसप्तम्यन्तपदवोध्यस्येत्यर्थः । धातोरित्यनुवर्तनादिति। धातोरित्यधिकारनिहितप्रत्ययविधौ सप्तमीस्थमित्यर्थादिति भावः । धातोरित्यनुवृत्तावपीष्टार्थाऽलाभादाह–अथ वेति । अत्रैवेति । न तु 'च्लि लुङी'त्यादाविति भावः । 'उपपदसंज्ञा सिद्धा भवती'ति भाष्यस्याऽपीष्टविषये स्फुटतया सिद्धा भवतीत्यर्थः । विभक्तिमन्तरेणेति। तामन्तरेण कर्मत्वाद्यभावादित्यर्थः । शब्दस्य कर्मत्वादि हि तद्विशिष्टार्थवाचकत्वेनेवेति भावः। चतुष्कपक्षे इति। 'द्योतकसमभिव्याहारे चतुष्कं प्रातिपदिकार्थ' इति पक्षे इत्यर्थः । प्रातिपदिकस्यैवेति। चिन्त्यमिदम्, पञ्चकपक्षेऽपि द्योतकसमभिव्याहारं विना प्रातिपदिकमात्रस्य तद्बोधकत्वाऽभावात्। ■ विना जयन प्रत्ययबोधकत्ववत्। एवञ्च तत्पक्षेऽपि पदविधित्वं दुर्वारमेव। तस्मादयमत्र भाष्यार्थः, सुबन्तत्वेन पदत्वेन वा यत्र निमित्तता तत्रैव तत्परिभाषाप्रवृत्तेरिति प्रकृते तदभावात्परिभाषाऽनुपस्थित्या समर्थग्रहणं कर्तव्यमिति युक्तमाभाति । भाष्ये समर्थमुपपदमिति । सामर्थ्यं च प्रत्यासत्त्या प्रत्ययान्तेनैवेति बोध्यम्। प्रत्ययस्योत्पत्तौ निमित्तं यत्समर्थं सप्तम्यन्तपदवाच्यं तद्वोपपदसंज्ञमिति वक्तव्यमित्यर्थः ।

१ 'यत्र चान्येन'। २ इदं प्रक्षिप्तं।
३ 'इमुपपदं'। ४ 'सङ्ख्यातिरिक्त चतुष्क'।

कुम्भं करोती'त्यत्रापि प्राप्नोति ॥ न वा भवितव्यं महाकुम्भकार इति ? ॥ भवितव्य–यदैतद्वाक्यं भवति–महान्कुम्भो महाकुम्भः,महाकुम्भं करो[¹ती]ति महाकुम्भकार[इति]। यदा त्वेतद्वाक्यं भवति–'महान्तं कुम्भं करोती'ति,तदा न भवितव्यम्। तदा च प्राप्नोति,तदा मा भूदिति ॥ यत्तावदुच्यते–'समर्थ-ग्रहणं कर्तव्य'मिति। न कर्तव्यम्। 'धातो'रिति वर्तते 'धातोः कर्मण्यु-पपदे'। तत्र सम्बन्धादेतद्गन्तव्य–'यस्य धातोर्यत्कर्मे'ति। यदप्युच्यते— 'क्रियमाणे चापि समर्थग्रहणे महान्तं कुम्भं करोतीत्यत्रापि प्राप्नोती'ति। 'उपपद'मिति महतीयं संज्ञा क्रियते। संज्ञा च नाम यतो न लघीयः ॥ कुत एतत् ? ॥ लघ्वर्थं हि संज्ञाकरणम् ॥ तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम्–'अन्वर्थसंज्ञा यथा विज्ञायेत'। उपोच्चारि पदमुपपद'मिति। यच्चात्रोपोच्चारि न तत्पदं, यच्च पदं न तदुपोच्चारि। यावता

प्र.]भावात्समर्थपरिभाषानुपस्थानात्समर्थवचनं कर्तव्यमिति भावः। आहर कुम्भमिति। कुम्भशब्द उपपदे करोतेरण्प्रत्ययः स्यात्। उपपदसमासस्तु सामर्थ्याऽभावान्न स्यात्। महान्तं कुम्भमिति। महत्त्वयुक्तस्य कुम्भस्य करोतिना सामर्थ्यमस्तीति भावः। यदि चाऽत्र प्रत्ययः स्यात्तदा कुम्भशब्दस्य कारशब्देन समासे कृते कार्यार्थं एकार्थी-भावान्महच्छब्देन समासो न स्यात्। सुबन्तसमुदायस्याप्यसुबन्तत्वात्। उपपदसमासे तृतीयान्तस्य सुब्ग्रहणस्य निवृत्तावपि प्रथमान्तस्यानुवर्तनात्समासाऽभावः। न तत्प-दमिति। पदसमुदायत्वादिति भावः। यच्च पदमिति। 'महान्त'मित्येतत्। कुम्भ-मित्येतच्चै यद्यपि पदं भवति उपोच्चारि च, तथापि कारकेण तदसामर्थ्यात्प्रत्ययोत्पत्ति-

उ] ननु 'महान्तं कुम्भ'मिति सविशेषणे कथं सामर्थ्यमत आह–महत्त्वयुक्तस्ये'ति। विशिष्टस्यैव कर्मत्वेन निर्दिष्टेन सामर्थ्यमस्तीति भावः। तदा न भवितव्यमिति भाष्ये। 'अणे'ति शेषः। तदा च प्राप्नोतीत्यस्याऽपि–'अ'णित्येव शेषो न तु 'महाकुम्भ-कार' इति,तदुक्तमाह–महच्छब्देन समासो न स्यादिति। कारार्थविशेषण-तयोपस्थितस्येतरविशेष्यत्वाऽसम्भवेन महच्छब्देन कुम्भशब्दस्य कर्मत्वबोधो न स्यादिति भावः। बहुवचनेनोत्तरपदे 'विशेषणं विशेष्येणे'त्यस्य तत्पुरुषभूता-सामर्थ्यनिवारणनिवर्त्यनाश निरूते समर्थसूत्रे भाष्ये ध्वनितत्वादिति निष्कर्षः समर्थसूत्रे भाष्ये। न च पूर्वं कर्मत्वस्य, उपपदसमासस्य परत्वादिति वाच्यम्। ननु सुबुत्पत्तेरुपपदसमासो भविष्यतीत्यत आह–सुबन्तसमुदा-यस्येति। वस्तुतः प्रत्ययोत्पत्तिसमये सुबुत्पत्तेः पूर्वं 'कुम्भ'शब्द-स्योपपदत्वाऽभावात्तदभावे 'महाकुम्भकार' इत्यनिष्टस्याऽप्रसक्तिरिति भाष्या-

१ इति क्वचित्। २ 'उपोच्चारीति'। ३ 'त्वेतत्तु'। ४ 'कारस्याऽनिष्टस्या'।

चेदानीं पदगन्धोऽस्ति पदविधिरयं भवति । पदविधिश्च समर्थानां भवति । तत्राऽसामर्थ्यान्न भविष्यति ॥ अथ च्व्यन्त उपपदे किमणा भवितव्यम्—अकुम्भं कुम्भं करोति कुम्भीकरोति मृदमिति ? ॥ न भवितव्यम् ॥ किं कारणम् ?॥[॥*॥प्रकृतिविवक्षितत्वात् ॥*॥] प्रकृतिविवक्षायां च्विर्विधीयते । तत्सापेक्षम् । सापेक्षं चाऽसमर्थं भवति ॥ न तर्हीदानीमिदं भवति—'इच्छाम्यहं काशकटीकार'मिति॥ इष्टमेवैतद्गोनर्दीयस्य ॥*॥ निमित्तोपादानं च ॥*॥ निमित्तोपादानं च कर्तव्यम् । 'निमित्तमुपपदं प्रत्ययस्ये'ति वक्तव्यम् । ॥*॥ अनुपादाने ह्यनुपपदे प्रत्ययप्रसङ्गः ॥*॥ अक्रियमाणे हि निमित्तोपादानेऽ

प्र ]निमित्त न भवति।अन्वर्थसंज्ञाकरणादेव सप्तमीनिर्दिष्टत्वेऽपि प्रकृत्यर्थविशेषणानां प्रत्ययार्थानां तद्विशेषणानां चोपोच्चारि(त)त्वाभावादुपपदसंज्ञा न भवति । पदविधिरिति । पदनिमित्तत्वात्प्रत्ययविधेरिति भावः । अथ च्व्यन्त इति । इह च चित्तापेक्षत्वे प्रत्ययो न भवति 'महान्तं पुत्रमिच्छती'ति । क्व चित्तु भवति माणवकं मुण्डयतीति, तत्र सन्देहात्प्रश्नः । च्व्यन्तस्य चाऽव्ययत्वेऽपि कर्मत्वं मन्यते । सत्त्वभूतत्वस्याऽनिवर्तनात् । प्रकृतिविवक्षायामिति । प्रकृतिविकारयोरभेदविवक्षाया च्विर्विधीयते । तत्राऽवश्यं विकारेण प्रकृतिविशेषोऽपेक्षणीयः । तदनपेक्षाया च्वेरभावात् । ततश्च यथा महान्तं कुम्भं करोतीत्यत्राऽण्न भवत्येवं मृदं कुम्भीकरोतीत्यादावपीत्यर्थः । काशान्कटीकरोतीत्यत्र त्विष्ट्याऽण्प्रत्ययो भवति । तस्मिन्नुपपदे काशशब्दान्

उ.] शय । यदुक्तं 'कुम्भशब्दस्य कारशब्देन समास'इति, तदपि चिन्त्यम् , कुम्भशब्दस्य केवलस्य सविशेषणत्वेनाऽसमर्थत्वात् । समासविधौ समर्थपरिभाषोपस्थानेन समासाऽप्राप्तेः । भाष्यं तु सर्वथा समासाऽभावेऽप्यणापत्तिपरतया योजयितुं शक्यमेवेति दिक् । यावता चेदानीमिति भाष्यमवतारयति—कुम्भमित्येतच्च यद्यपीति । समाधानाशयमाह—तथाऽपीति । भाष्ये 'गन्ध'शब्दः संबन्धवाची, स च महासंज्ञाप्रत्ययविधौ पदत्वेन निमित्तत्वात्स्पष्ट एव । असामर्थ्यात्प्रत्ययाऽभावे चोपपदसंज्ञाऽपि फलाऽभावादित्युपपदसंज्ञया समर्थवचनमनर्थकमिति भावः । एवञ्च सुबन्तस्यैवोपपदत्वम् । 'स्तम्बकर्णयो'रित्यादौ तु तत्प्रकृतिके लक्षणा । इदमेवाऽभिप्रेत्य 'उपपदमति'ङिति सूत्रे प्रथमान्तमुपपदस्याऽपि निवृत्तिमङ्गवतोक्तेति दिक् । कर्मत्वं मन्यत इति । 'स्वरादिष्वि'ति शेषः । तत्र हेतुमाह—सत्त्वेति । च्विप्रत्ययेऽपि स्वाश्रयसत्त्वभावस्य निवृत्तौ मानाऽभावादिति भावः । 'सत्त्वभूतस्ये'ति पाठेऽपि भावे क्तः । प्रकृतिविवक्षायामिति भाष्यस्य,—प्रकृतेर्विकृत्यभिन्नत्वेन विवक्षाया विकृतिवाचकाच्च्विरित्यर्थः । तत्फलितमाह—प्रकृतीति । तत्राऽवश्यमिति । नन्वेवं नित्यसापेक्षत्वेनाऽसामर्थ्याऽभावादणदुर्वार ,

लादेशाद्धात्वधिकार ॥ एवमपि स्थानिवद्भावात्कृत्सञ्ज्ञा प्राप्नोति॥ अथाऽति ङित्युच्यमाने यावता स्थानिवद्भाव प्रथमेवैतत्सिध्यति ? ॥ प्रतिषेधवचन सामर्थ्यात् ॥ अथ वा तिङ्भाविनो लकारस्य कृत्सञ्ज्ञाप्रतिषेध ॥ किं च स्यादयत्र कृत्सञ्ज्ञा स्यात् ?॥ 'कृत्प्रातिपदिक मिति प्रातिपदिकसञ्ज्ञा स्यात् । प्रातिपदिकादिति स्वाद्युत्पत्ति प्रसज्येत ॥ नैष दोष । ए॒रु वादिष्वर्थेषु स्वादयो विधीयन्ते ते चाऽत्र तिङोक्ता एकत्वादय इति कृ॒तोक्तार्थत्वान्न भविष्यन्ति ॥ टावादयस्तर्हि तिङन्तान्मा भूवन्निति ॥ स्त्रिया टावादयो विधीयन्ते, न च तिङन्तस्य स्त्रीत्वेन योगोऽस्ति ॥ अणादयस्तर्हि तिङन्तान्मा भूवन्निति ॥ अपत्यादिष्वर्थेष्वणादयो विधीयन्ते न च तिङन्तस्याऽपत्यादिभि

प्र ] कृदतिङ् । स्थानिवद्भावादिति । अति ङिति प्रतिषेध स्थाश्रयमेव तिङ कृत्सञ्ज्ञां बाधितुमुत्सहते नन्यातिदेशाश्रयेण प्रसक्ताम् । 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे' ति वचनादिति भाव । प्रतिषेधेति । अन्यथाऽनर्थक प्रतिषेध स्यादिति भाव। अथ वेति। तिङ्भावी लकार एव तिङ्शब्देनोच्यत इति मूलोच्छेद एव कृत्सञ्ज्ञाप्रतिषेधेन क्रियते । टावादय इति । यथा सान्नाय्यसदृशयानिमत्तेत्व वचनाद्युत्पत्तिस्तथैव तद्गतलिङ्गाश्रयाट्टावादय स्युरिति भाव ।स्त्रियामिति। शब्दशक्ति

उ ]तदुपपादयति स एव-धातो परस्येति। 'धातो'रिति पदमनुवर्त्य धातो परत्वेन विहितस्येत्यर्थ । अत एव वक्ष्यति-प्राक् लादेशाद्धात्वधिकार इति। एवञ्च तिङ्षु कृत्सञ्ज्ञाया अप्राप्त्या निषेधो व्यर्थ इति भाव । तत्सार्थक्यमेवदेशी शङ्कते-एव मपीति। सिद्धान्ती शिष्यबुद्धिपरीक्षार्थं प्रतिबन्दीमाह-अथेति । एकदेश्याह-प्रति षेधेति । तृतीयाऽध्यायान्तं धात्वधिकारे निरो व्याख्यात्वा तत्सार्थक्यमन्य आह— अथ वेति । तिङ्भावीति । अत एवाऽऽनन्तर्यविषयत्वमस्य कृत्वमभवत्येव, तस्य तिङ्भाविताऽभावात्। तिङ्भावित्वस्य फलोपहितस्यैव विवक्षा । मूलोच्छेद इति । मूलभूते लकार एव कृत्वोच्छेद क्रियत इत्यर्थ । 'ओभगा' इति सूत्र भाष्योक्तरीत्याऽस्त्विति यदप्यत्र स्थानिवत्त्वप्रतिषेध इत्यपि योग्यम्।अथ तृतीयाऽध्या यान्त धात्वधिकारेऽपि भाष्ये पक्षद्वयभावान्निषेधमप्रत्याख्यायानुमाह—किञ्च स्यादिति।

ए रु वादिष्विति। ननु द्व्येकयोरित्यत्र शब्दादर्थे कर्मप्रमनिपत्तय द्वितीयावत् 'पचति एव'त्यादौ कर्मत्वोक्त्ये द्वितीया स्यात् । किञ्च-'एकवचनमुत्सर्ग' इति तदुर्त्सर्गनिति चेन्न कर्मत्वस्यापि वाक्यत प्रताप्त्या तदनुपत्ते । तिङोक्ता इत्यस्य च-तिङन्तिनार्थेनोक्ता इत्यर्थ । 'एकत्वादि'ष्वित्यादिपदेन कर्मकादीनामपि ग्रहण बोध्यम्। उत्सर्गाऽयमविषय एवेत्याशयात्। तिङन्तस्येति। तदर्थस्येत्यर्थ।

१ 'स्यात्प्रातिपदिकादिति' । २ इन क्वचित्।

योगोऽस्ति॥ अथापि कथञ्चिद्योगः स्यादेवमपि न दोषः। आचार्यप्रवृत्तिर्ज्ञापयति—'न तिङन्तादुणादयो भवन्ती'ति, यदयं क्व चित्तद्धितविधौ तिङ्ग्रहणं करोति 'अतिशायने तमबिष्ठनौ' 'तिङश्च' [इति]॥ इह तर्हि पचति पठतीति,— 'ह्रस्वस्य पिति कृति तुग्भवती'ति तुक् प्राप्नोति॥ धातोरिति वर्तते॥ एवमपि 'चिकीर्षती'त्यत्र [अपि] प्राप्नोति॥ अत्रापि शपा व्यवधानम्॥ एकादेशे कृते नास्ति व्यवधानम्॥ 'एकादेशः पूर्वविधौ स्थानिवद्भवती'ति स्थानिवद्भावाद्व्यवधानमेवेति॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयस्याऽध्यायस्य प्रथमे पादे पञ्चममाह्निकम्॥ [समाप्तमिदं धात्वन्तरान्तं शास्त्रम्]॥

---

प्र] स्वाभाव्याच्छपानन्तरस्य तुग्विधानमस्ति निरस्तमतः शब्व्यवधानमिति भावः। धातोरिति। 'गाङादी'त्यत्र। एकादेश इति। ननु स्थानिवद्भावं बाधित्वा परत्वादन्तवद्भावेन भाव्यम्। नैष दोषः। परत्वादन्तरङ्गत्वाच्च स्थानिवद्भाव एवान्तवद्भावस्य बाधकः। कन्यानीत्यादिरप्रवृत्तः तस्मिन्नपि प्रवर्तमाने पदसंज्ञायां प्रतिषेधात् स्थानिवद्भावस्य चरितार्थत्वात्। 'भ्य र'मिति नकारोच्चारणसामर्थ्यान्न भविष्यति। इह तर्हि 'चिचीषति' इति कृत्स्वरो नुम्दीर्घो न प्राप्नोति। एषोऽप्यदोषः। सार्वधातुकप्रतिषेधो ज्ञापक एव प्रतिपदोक्तो न भवतीति। यदि हि स्यात् सुनुयाच्चिनुयादित्यादावपि सार्वधातुके कृत्प्रतिषेधेन दीर्घो न भविष्यतीति पृथक्सार्वधातुकप्रतिषेधोऽनर्थक स्यात्॥ इति कैयटीये भाष्यप्रदीपे तृतीयस्य प्रथमे पादे पञ्चममाह्निकम्॥

---

उ] भाष्ये—अथाऽपि कथञ्चिद्योगः स्यादिति। 'दोष' इत्यस्य विनाशकत्वात् 'इच्छति पिबा' इत्याद्यर्थे इव पचत्यादिभ्य पतन्त्याद्यर्थे प्रत्ययः स्यादिति भावः। न तिङन्तादिति। अयमत्राऽभिसन्धि,—तिङन्तानां कृदन्तत्वप्रयुक्तप्रातिपदिकत्वाऽभावो ज्ञाप्यत इति 'पचन्ति भवन्ती'त्यादौ प्रथमाऽपि नेति बोध्यम्। 'पचेरन्' इत्यादौ नलोपश्चाऽत एव न। अत एव 'अह'मित्यादौ न दोषः। परत्वादन्तवद्भावस्येदेति। अन्तवद्भावस्य प्राप्तिकत्वेन स्थानिवद्भावस्याभावाऽतिदेशकत्वेन नित्यतया 'निषेधाश्च बलीयांस' इति न्यायेन 'अचः परस्मि'न्नित्यस्यैव प्रवृत्तिरित्यपि बोध्यम्। यद्वि स्थानिभूतादचः पूर्वत्वनिमित्ताऽव्यवच्छिन्नोद्देश्यकत्वादच परस्मिन्नित्यस्य प्रवृत्ति। एतेन 'अन्तवद्भावेन तदन्तस्यैव भावीति पूर्वविध्यभावात्स्य स्थानिवत्त्व'मिति परास्तम्। स्थानिभूतादचः पूर्वोऽस्थानिभूत एव शब्दरूप इत्यत्र न मानम्, तत्र केचिदन्यन्यायस्याऽवकाशानिश्चयत्वेन विशेषविषयत्वेन चेत्यो विरोधेऽप्राप्ते। तत्र सूत्रेऽभावाऽतिदेशस्याऽव्यवधानेन स्थानिनि मतमपास्तमेक एकादेशोऽप्यभावाऽतिदेशो बोध्य। एतेन 'स्थानिवद्भावेऽपि अन्तस्य शपा व्यवधानाऽभावात्तुग्दुर्वार' इत्यपास्तम्। 'वी विषौ निय' इत्यत्र तु न दोष, 'ष्यायते सम्प्रसारणंचे'

वाऽसरूपोऽस्त्रियाम्॥ ३।१।९४ ॥

कथमिदं विज्ञायते 'स्त्रियामभिधेयाया वाऽसरूपो न भव[ती']ति, आहोस्वित्स्त्रीप्रत्यये'ष्विति?॥ किं चातः ?॥ यदि विज्ञायते 'स्त्रियामभिधेयाया'मिति । लव्या लवितव्या,-अत्र वाऽसरूपो न प्राप्नोति। अथ विज्ञायते 'स्त्रीप्रत्यये'ष्विति । व्यावक्रोशी व्यावचुर्चिरिति न सिध्यति ॥ एवं तर्हि नैवं विज्ञायते-'स्त्रियामभिधेयायां' नापि 'स्त्रीप्रत्यये'ष्विति ॥ कथं तर्हि ?॥ "स्त्रीग्रहणं स्वरयिष्यते" । तत्र स्वरितेनाधिकारगतिर्भवतीति स्त्रियामित्यधिकृत्य ये प्रत्यया विहितास्तेषां प्रतिषेधो विज्ञास्यते ॥ किमर्थं पुनरिदमुच्यते ?॥ ॥*॥ असरूपस्य वावचनमुत्सर्गस्य बाधकविषयेऽनिवृत्त्यर्थम् ॥*॥ असरूपस्य वावचन

प्र.] वासरूपोऽस्त्रियाम् । कथमिति—स्त्रियामित्यभिधेयसप्तमी वा स्यात्, स्त्रियामित्यस्यैव वा स्वरूपस्य निषेधः स्यात्,—'स्त्रियामित्युक्तार्थे ये प्रत्यया विधीयन्ते तेषु वासरूपो न भवती'ति सन्देहात् पृच्छति। लव्येति । 'अचो य'दिति यता तव्यादीनां नित्यं बाधनं प्राप्नोतीत्यर्थः । व्यावक्रोशीति । 'कर्मव्यतिहारे णच्स्त्रिया'मिति णचा क्तिनो बाधः प्राप्नोतीत्यर्थः । स्त्रियामित्यधिकृत्येति । 'स्त्रियां क्ति'न्नित्यस्मिन् इत्यधिकारे ये उत्सर्गापवादास्तेष्वपवाद उत्सर्गस्य बाधक एवे-

उ.]त्यनेन सम्प्रसारणे पूर्वत्वे 'हल' इति दीर्घत्वे च कृते एकादेशस्य निवृत्तेरनस्य स्थानिवत्त्वाऽप्रवृत्तेः । 'जुहुवतु'रित्यादावपि ह्वेञोऽन्तरङ्गत्वादाद्त्वे 'वार्णादाङ्ग'मित्याल्लोपे सम्प्रसारणे एकादेशस्यैवाऽभावान्न दोषः । स्पष्टं चेदं 'सर्वत्र सम्प्रसारणिभ्य' इति वार्त्तिकभाष्ये । धियावित्यादावपि आकारात्पूर्वंश्रुतिधर्मावच्छिन्नोद्देश्यकत्वाऽभावाच्च । मकारोच्चारणेति । समाप्यन्तरमपि प्रागुक्तम् । पृथक्कार्यधातुकेति । न च इष्टमर्थं, दीर्घप्रवृत्तियोग्याऽजन्तेभ्य इष्टनभावात् ॥ इति श्रीनागेशभट्टविरचिते भाष्यप्रदीपोद्द्योते तृतीयस्य प्रथमे पञ्चममाह्निकम् ॥ ५ ॥

वाऽसरूपो । ननु स्वरूपस्य निषेधे तदभाव एव स्यादतस्तत्परो वाक्यार्थं दर्शयति–स्त्रियामित्युक्तार्थेति।स्वरूपस्येत्यस्य,–स्वरूपपरस्येत्यर्थः । निषेधः स्यादित्यस्य निषेधान्वय्यन्वयि वं स्यादित्यर्थः । ननु ये विहितास्तेषामप्रतिषेधे विधिर्निरर्थ्यं स्यात्, विहितप्रतिषिद्धत्वाद्विकल्पो वा स्यादत आह–स्त्रिया स्त्रियेति।तदधिकारे ये विहिता उत्सर्गास्तेषां वासरूपविधिना प्रसक्तानां प्रतिषेधो–बाधो विज्ञायत इति भाष्याक्षरार्थ इति भावः ।एवंचोत्सर्गोऽपवादयोर्द्वयोरपि इत्यधिकारनिर्दिष्टत्वे सत्यस्त्रियामिति प्रतिषेधः इति लभ्यते । अन्येनापि यत्राऽसमावेश इष्टः सोऽनभिधानान्साध्य । भाष्ये तत्रोक्त स्त्रियामसङ्ग इति । उपपत्तेर्वार्थविकल्पप्रसङ्ग इत्यर्थः ।ननु बाधकत्वविकल्पे नाऽयं दोष इत्याशङ्क्य तद्विकल्प एव न सिध्यतीत्याह–वाऽसरूप इति । असरूपोऽ-

विभाषा । उत्पद्यते वा न वा ॥*॥ सिद्धं त्वसरूपस्य बाधकस्य वावचनात् ॥*॥ सिद्धमेतत् ॥ कथम् ? ॥ 'असरूपस्य बाधकस्य वावचनात्' । असरूपो बाधको वा बाधको भवतीति वक्तव्यम् ॥ सिध्यति । सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवाऽस्तु ॥ ननु चोक्तं 'तत्रोत्पत्तिवाप्रसङ्गो यथा तद्धिते' इति ॥ नैष दोषः । अस्ति कारणं येन तद्धितेषु विभाषोत्पत्तिर्भवति ॥ किं कारणम् ? ॥ प्रकृतिस्तत्र प्रकृत्यर्थे वर्तते, अन्येन च शब्देन प्रत्ययार्थोऽभिधीयते । इह पुनर्न केवला प्रकृतिः प्रकृत्यर्थे वर्तते । नचाऽन्यः शब्दोऽस्ति यस्तमर्थमभिदधीतेति कृत्वाऽनुत्पत्तिर्न भविष्यति ॥ अथ वा समयः कृतो 'न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः' इति । एतस्मात्समयादनुत्पत्तिर्न भविष्यति ॥ ननु च य एव तस्य समयस्य कर्ता स एवेदमप्याह । यद्यमी

प्र ]दूते। सिद्धं त्विति। बाधकत्वे विकल्पिते यत्र पक्षेऽपवादस्य बाधकत्वं नास्ति तत्र बाधकत्वाऽभावादुत्सर्गः प्रवर्तते । अन्येनेति । दक्षस्यापत्यमित्यादावपत्यादिशब्देनेत्यर्थः । इह पुनरिति।केवला प्रकृतिः स्वार्थमात्रमपि नाभिधत्ते किं पुनः कर्त्रादिकमर्थमभिधास्यति । तथाहि प्रकृतिप्रत्ययसमुदाये प्रयुज्यमानेऽन्वयव्यतिरेकाभ्यां प्रकृतिः प्रकृत्यर्थे वर्तते,प्रत्ययस्तु प्रत्ययार्थे इत्युच्यते अनुपपन्नप्रत्यया तु प्रकृतिर्न कश्चिदर्थं गमयति।अथापि क्षिपे वर्तेते कर्त्रादिशब्दा प्रयुज्यन्ते । तथापि करोतिक्रियापेक्षमपि कर्तृत्वं प्रतीयेत न तु क्षिपिक्रियापेक्षमेव तस्मात्सामर्थ्याद्बाधकत्वं बहिरङ्गमपि सिद्ध-

उ ]वाक्यताऽऽपन्नम् । न चैवमसरूपो वा बाधको भवतीति भाष्येण बाधकत्वविकल्पप्रतिपादनं व्यर्थमिति वाच्यम्, 'असरूपस्य बाधकस्य वावचना'दिति वार्तिकस्वारस्येनाऽसरूपो बाधको वा भवतीत्येव भाष्येऽन्वयात्।वार्तिकादौ बाधकाऽनुवादेन विकल्पविधिरित्येव स्वरसतो लभ्यते न तु बाधकत्वाऽनुवादेनेति दिक् । प्रत्यासत्त्या च यन्निरूपितं बाधकत्वं तस्यैव पक्षेऽभ्यनुज्ञानमिति नाऽतिप्रसङ्गः । कैयटे-बाधकत्वे विकल्पित इत्यादि । इदमिन्त्यं, वार्तिकोक्तबाधकपदार्थैकदेशस्य बाधकत्वस्य विकल्पेनाऽन्वयाऽयोगात् । किञ्च-पक्षे बाधकत्वाऽभावे शास्त्रयोरिव समुच्चयः स्यादिति महदनिष्टं, धर्मनिषेधे धर्म्यभावाऽप्रतीतेः । अत एव 'न वे'ति सूत्रे साधुत्वविकल्पे पक्षे तस्यैवाऽसाधुत्वमापादितम् । क्षिपेरिति । धात्वर्थनिर्देशे इक्प्रत्ययः । 'इक्श्तिपौ धातुनिर्देशे' इति इक्या । तथापीति । 'वर्ते'त्यत्र तस्याऽपि गत्वादिति भावः । बाधकत्वं बहिरङ्गमपीति । इदमिन्त्यम् । सामर्थ्यादपवाद एवाऽसरूपशब्देन विवक्षितो न तूत्सर्गोऽपीति तु भाष्यतात्पर्यं बोध्यम् । भाष्ये-अथवा समय इति । एतत्समर्थनत्सूत्रयोरन्यतरस्याऽप्यबाधाय 'असरूप'पदेनाऽपवाद एव गृह्यत इति भावः । इहापि प्रमाणमेतन्निमित्तेनानता,तत्राह-समयस्येति। अर्थं प्रत्याययितु-

तत्र प्रमाणमिहापि प्रमाणं भवितुमर्हति ॥ प्रमाणमसौ तत्र चेह च । सामर्थ्यं त्विह द्रष्टव्यं शब्दानां प्रयोगे । न चाऽनुत्पत्तौ सामर्थ्यमस्ति । तेनाऽनुत्पत्तिर्न भविष्यति ॥ कथं तर्हि तद्धितेष्वनुत्पत्तौ सामर्थ्यं भवति ? ॥

अन्येन अन्वयेन सामर्थ्यम् ॥ केन ? ॥ षष्ठ्या ॥ अथ वा रूपवत्तामाश्रित्य वाविधिरुच्यते । न चाऽनुत्पत्ती रूपवती । तेनानुत्पत्तिर्न भविष्यति ॥

एवमपि कुत एतदपवादो विभाषा भविष्यति न पुनरुत्सर्ग इति ? ॥ नचैतदस्ति विशेषो—यदपवादो विभाषा स्यादुत्सर्गो वा ॥ अपि च सापेक्षोऽयं निर्देशः क्रियते—'वाऽसरूप' इति । न चोत्सर्गवेलायां किंचिदपेक्ष्यमस्ति ।

प्र ]च्यते। प एवेति।समसन्यायं वाक्यरोऽस्त्विति भाव । सामर्थ्यमिति। अर्थप्रत्यायनाय तावत् प्रयुज्यन्ते न च प्रत्ययस्याऽनुत्पत्त्यावर्थं प्रत्याययितुं शक्यत इत्यर्थ । पूर्वस्मिन् परिहारे प्रकृतेरेव केवलाया स्वार्थमात्राभिधानेपि सामर्थ्यं नास्तीत्युक्तम् । उत्तरत्र तु समस्तात् प्रयोग एव केन तया नास्तीत्युच्यते । कथं तर्हीति । समस्तात् केवलस्य प्रातिपदिकस्य तद्धितानुत्पत्तौ साधुत्व न प्राप्नोतीत्यर्थ । अन्येनेति । दक्ष-स्याऽपत्यमिति षष्ठ्यन्तस्य प्रातिपदिकस्य प्रयोगो न केवलस्य, इह तु कृदनुत्पत्तौ सत्यां केवल एव धातु स्यात्तस्य च समस्तात् प्रयोगाऽभाव । अथ वेति । असरूपशब्देन भिन्नरूप उच्यते। तस्य च भिन्नरूपत्व रूपवदुत्सर्गापेक्षया भवतीति स एव पक्षेऽभ्यनुज्ञायते, न त्वरूपानुत्पत्तिरित्यर्थ । न चैतदस्तीति । उत्सर्गेतिकर्तव्यतेऽ-

उ ]स्तीति।न च प्रत्ययस्याऽनुत्पत्तौ प्रयोगे सामर्थ्यमस्ति 'न केवला प्रकृति'रिति निषेधात्, नापि प्रयुक्तार्थबोध इति भाष्यार्थ इति भाव । असरूपशब्देनेति । भिन्न-रूपो वेत्युक्ते भवाऽभावयो परस्परभिन्नरूपस्य सत्त्वप्रतीतिरिति नाऽनेनोत्सर्गोत्स-र्गाभावयोर्विभाषा लभ्यते । तथा सति पक्षेऽनुत्पत्ति स्यात्। सा च न रूपवती-त्यभावपक्षे न भिन्नरूपस्य गणना स्यादिति भाव । नन्वस्तु सामर्थ्यादन्यतरस्य विकल्पो न तूभयोरिति बाधकत्वाऽभावे अपवाद एवेति कुतो लभ्यत इत्याशङ्कते भाष्ये—कुत एतदिति। इतरस्त समाधत्ते—न चैतदस्तीति । तथाचाह—उत्सर्गो हि 'असरूप उत्सर्गो वा भवती'त्यनेन प्रत्यासत्त्याऽसरूपोऽपवाद एव पक्षे स्थाप्यत इति 'क'मिति नाऽस्तीति भाव ।वस्तुतोऽसरूपपदेनाऽपवाद एवोपस्थित इत्याह—भाष्ये—अपि च सापेक्ष इति । अविशेषेत्यर्थ । भिन्नरूपत्वं हि—अगरूपत्वम् । तत्र 'पुनो भिन्नरूप' इत्यपेक्षायां स्वविषयनियमेन य स्वविषये प्राप्त स एव बुद्धिस्थो गम्यतेऽपवादस्तोऽभिमतो चोत्सर्गस्तु सर्वत्र निरवयमुपस्थितमात्र उपारूढो बुद्धौ भवतीति तदपेक्षया भिन्नरूपोऽपवाद एव गृह्यत इत्यर्थ । न चोत्सर्गवेलाया-

१ 'ततोऽनुत्पत्ति' । २ 'नैतदस्ति' ।

अपवादवेलायां पुनरुत्सर्गोऽपेक्ष्यते । तेन यो रूपवानन्यपूर्वो बाधकः प्राप्नोति स वा बाधको भविष्यति ॥ कः पुनरसौ ?॥ अपवादः ॥ यदि 'यो रूपवानन्यपूर्वो बाधकः प्राप्नोति स वा बाधको भवती'त्युच्यते क्षियादिषु समावेशो न प्राप्नोति–ग्रामणी , ग्रामगाय इति । न ह्येते रूपवन्त ॥एतेऽपि रूपवन्त ॥ कस्यामवस्थायाम् ? ॥ उपदेशावस्थायाम् ॥ यद्येवम्–॥*॥ अनुबन्धभिन्नेषु विभाषाप्रसङ्गः ॥*॥ अनुबन्धभिन्नेषु विभाषा प्राप्नोति । कर्मण्यण् । 'आतोऽनुपसर्गे कः' इति कविषयेऽपि प्राप्नोति ॥*॥ सिद्धमनुबन्धस्याऽनेकान्तत्वात् ॥*॥ सिद्धमेतत् ॥ कथम् ? ॥ 'अनुबन्धस्याऽनेकान्तत्वात्' । अनेकान्ता अनुबन्धाः । अथवा प्रयोगेऽसरूपाणां वाविधिर्न्याय्यः ॥*॥ प्रयोगे चेत्तद्देशेषु प्रतिषेधः ॥*॥ प्रयोगे चेत्तद्देशेषु प्रतिषेधो वक्तव्यः । 'ह्योऽपच'दित्यत्र लुङपि प्राप्नोति । 'श्वः पक्ते'त्यत्र लुडपि प्राप्नोति ॥ नैष दोषः । आचार्य-.

॥ ]प्राप्तविभाषा,अपवादविकल्पे तु प्राप्तविभाषेति न कश्चिद्दोषः ।अपवादवेलाया-मिति । बाध्यत्वेन यावदुत्सर्गो नापेक्ष्यते तावदपवादस्य प्रवृत्तिरेव नास्तीत्यर्थः । उपदेशावस्थायामिति । प्रत्ययानित्याख्यादुपदेशावस्थायामसारूप्यमाश्रीयते इत्यर्थः । ह्योऽपचदिति । लङ्पनद्यतनलकारप्रत्ययः , लुङि त्वपाक्षीदिति ईत्यादि इति भिन्नरूपत्वात्समावेशप्रसङ्गः । मध्यमिति । परोक्षे लिडिति लिटा लङ समावेशोऽसारूप्यात्सिद्ध एवेति नार्थो लङ्विधानेन। विहितस्तु लकाराणमसमावेशं ज्ञापयतीत्यर्थः ।

उ.]मिति । नन्वपवादस्यादर्शनस्यार्थोत्तरमुत्सर्गस्य लक्ष्यसंस्कारकत्वेति प्रातिपदिकार्थसूत्रभाष्ये उक्तत्वेनोत्सर्गोऽपि स्ववेलायामनपवादमपेक्षत इति कथमेतदिति चेन्न, लक्ष्यसंस्कारवेलायामपेक्षायामपि वाक्यार्थबोधवेलायां तदभावात् । अस्य च तदेवैकवाक्यतेति भावः । स वा बाधको भवतीति भाष्ये। स बाधको वा भवतीत्यन्वयः । सिद्धमनुबन्धस्याऽनेकान्तत्वादिति । ननु यद्यनुबन्धोऽनवयवस्तदा कथं कृत्त्वे वस्येत्वम्प्रत्ययादित्वाऽभावात् । कथं वा डादीनामनेकान्त्वेन सर्वादेशत्वम् । न चाऽऽदेशप्रवृत्तिकालेऽनुबन्धत्वाऽभावादनेकान्त्व, तर्हि येऽपि वाक्यार्थबोधात्पूर्वं प्रत्ययत्वाऽज्ञानेन तदुत्तरमेवेत्संज्ञाप्रवृत्तौ सर्वत्र 'नानुबन्ध'कृतमिति सूत्रभाष्योक्तरीत्या उपदेशोत्तरकालमेवेत्संज्ञाप्रवृत्त्या चोपदेशेऽनुबन्धसत्त्वादसारूप्यं स्यादिति चेन्न, 'उदू' इत्यादावादिशब्दस्य समीपपरत्वान्न दोषः। 'अनेकाल्'शित्यत्र संबन्धसामान्यपरार्थे बहुव्रीह्याश्रयणान्न दोषः । 'डा'देनेऽपि 'डा–आ' इत्याकारस्यैवान्तादेशत्वम् । इत एव चाऽस्वरसात्–'अर्थवन्त्वेषु दोष एवे'ति वक्ष्यति भाष्यकृत् ।

अथ वा प्रयोगे इति ।त्रिरूपाऽभावादेव स प्रयोगेऽसरूप । 'असरूप'पदेन च

१ 'पूर्वको'। २ 'विभिन्नेषु'। ३ 'प्रयोगेऽसरूपाणां वा विधि'रिति वार्तिकं रूपम् ।

प्रवृत्तिं ज्ञापयति 'न ल्यादेशेषु वासरूपो भवती'ति यदयं 'हशश्वतोर्लङ् चे'त्याह। अथ वा प्रयोगेऽस्वरूपाणां वाविधौ न सर्वमिष्टं संगृहीतमिति कृत्वा द्वितीयः प्रयोग उपास्यते ॥ कोऽसौ ? ॥ उपदेशो नाम । उपदेशे चेदस्वरूपा । ननु चात्र 'मनुबन्धनिमित्तेषु विभाषाप्रसङ्ग' इति॥ परिहृतमेतत् ॥ कथं ?॥ 'सिद्धमनुबन्धस्यानेकान्तत्वा'दिति ॥ अनेकान्ते दोष एव ॥ एकान्ते च न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति–'नानुबन्धकृतमसारूप्यं भवती'ति,–यदयं ददातिदधात्योर्विभाषां शास्ति ॥ अथ वाऽसरूपो बाध्यो वा बाधको भवतीत्युच्यते । असरूपो नामाऽनुबन्धभिन्नो वा भवति रूपान्यत्वेन वा । तेनाऽनेनाऽवश्यं किंचित्त्याज्यं किंचित् संग्रहीतव्यम् । तद्यदनुबन्धकृतमसारूप्यं तदाश्रयिष्यामो, यत्तु रूपाऽन्यत्वेनाऽसारूप्यं तदाश्रयिष्यामः ॥ अथ वाऽसरूपो बाध्यो वा बाधको भवतीत्युच्यते । सर्वश्चाऽसरूपः, तत्र प्रकर्षगतिर्विज्ञास्यते'–साधीयो योऽसरूप' इति॥कश्च साधीयान्?॥ यः प्रयोगे चैव प्राक् प्रयोगात्।अथवाऽसरूपो बाध्यो वा बाधको भवतीत्युच्यते,न चैव सन्ति कश्चि

प्र ] अथ वेति । क्त्वादयो न सरूपास्तेषां प्रयोगे रूपाऽभावादित्यर्थः ।

उ ]समानरूपाऽभाववानुच्यत इति भावः ।न ल्यादेशेषु वाऽसरूप इति । आदेशागमसारूप्यं गृहीत्वा लकारावस्थायां वाऽसरूपविधिर्नास्तीति तात्पर्यम्। आदेशरूपस्तु लकारालिङ्कवैरुत्पत्स्यते तु लकारेष्वित्यभिप्रायः । तदाह–लकाराणामसमावेश इति । सर्वेषामप्यविशेषादाह–कित्त्वादय इति । 'असरूप'पदेन भिन्नरूपस्यैव ग्रहणमित्याशयः । भाष्ये–नाऽनुबन्धकृतमिति । भाष्यानुबन्धनप्रतिषेधवर्गीकृतमसारूप्यं नेत्यर्थः । ददातिदधात्योर्विभाषा श । परे ण । शादौ तु प्रश्लेषान्निर्वाहः । 'चुट्' इत्यादावादिशब्दस्य समीपवचने चुटुचयणोर्यदिवेऽसारनापत्ते । अथ वेति । उभयत्राऽसारूप्यं गृह्यमाणं व्यावर्त्याऽभावादनर्थक इति व्यर्थं, स्पष्टत्वाऽऽपवादं त्येन वदेत्। तत्सामर्थ्यादनुबन्धकृताऽसारूप्यं नाऽऽश्रीयते, किन्तु रूपाऽन्यत्वेनैवेत्यर्थः । तत्सामर्थ्यात् प्रकर्षगतिः । तेन प्रयोगे उपदेशे चाऽसरूप इति द्वितीयः पक्षः । तत्सामर्थ्यात् प्रायोगिकमसारूप्यमिति तृतीयः पक्षः । तत्राऽन्त्ययोः क्त्वादिसिद्धिः कथमिति चेद्रूपाऽभावादेव सारूप्याऽभावस्याशने । 'असरूप'पदेन च सारूप्याऽभाववानुच्यत इत्याहुः । प्रागिति। अत्र पक्षे सूत्रे सन्धिः सौत्रः । यद्वा परिभाषापक्षे प्रथमः पक्षः । अधिकारत्वे द्वितीयः, तदा 'स्त्रियां' मित्यस्य 'स्त्रिया'मिति च्छित्त्वा निर्देश इत्यर्थः ।'समानकर्तृकेषु तुमुन्' 'लिङ् चे'ति वचनाल्लिङ् दर्शनादाद–

१ 'ल्यादेशेषु' । २ 'विभाषां शास्ति' । ३ इदं क्वचित् ।
४ 'अपवादश्च' ।५ 'साधीय' । ६ 'प्रयोगे तेषां रूपा' ।

दपि सरूपः । त एवं विज्ञास्यामः 'क्वचिदसरूपा' इति । अनुबन्धभिन्नाश्च प्रयोगे सरूपाः ॥ अथ कथमिदं विज्ञायते 'अस्त्रिया'मिति,–किं 'स्त्रिया न भवती'ति, आहोस्वित्प्राक् स्त्रिया भवतीति? ॥ कश्चात्र विशेषः? ॥ स्त्रियां प्रतिषेधे क्तल्युट्तुमुन्खलर्थेषु विभाषाप्रसङ्गः ॥*॥ स्त्रियां प्रतिषेधे क्तल्युट्तुमुन्खलर्थेषु विभाषा प्राप्नोति । क्त–हसितं छात्रस्य शोभनम् । घञपि प्राप्नोति । [ क्तं ] ॥ ल्युट्–हसनं छात्रस्य शोभनम् । घञपि प्राप्नोति । [ ल्युट् ] ॥ तुमुन्–इच्छति भोक्तुम् । लिङ्लोटावपि प्राप्नुतः । [ तुमुन् ] ॥ खलर्थ–ईषत्पानः सोमो भवता । खलपि प्राप्नोति ॥ एवं तर्हि 'स्त्रियाः प्रा'गिति वक्ष्यामि ॥ स्त्रियाः प्रागिति चेत्क्त्वायां वावचनम् ॥*॥ 'स्त्रियाः प्रागिति' चेत्क्त्वायां वावचनं कर्तव्यम् । आसित्वा भुङ्क्ते । 'आस्यते भोक्तु'मित्यपि यथा स्यात् ॥*॥ कालादिषु तुमुन्विधाने वावचनम् ॥*॥ कालादिषु तुमुन्विधाने वावचनं कर्तव्यम् । कालो-

---

प्र.] क्वचिद् इति। प्रयोग इत्यर्थः। उपदेशे सर्वस्यैवासारूप्यमित्यसरूपग्रहणमनर्थकं स्यात्। कथमिति। स्त्र्यधिकारविहितेऽप्येव किं प्रतिषेधः, परस्तात् स्त्र्यधिकारस्य भवत्येव वाऽसरूपविधिः, अथ स्त्र्यधिकारात् प्रागेवासरूपविधिर्भवति स्त्र्यधिकारेण विच्छिद्यत इति प्रश्नः। लिङ्लोटाविति। लिङ् चेति लिङ् भवत्येव। 'इच्छार्थेषु लिङ्लोटा'-वित्यत्र तु लिङ्लोटोः सहनिर्देशादत्रापि सहनिर्देशः कृतः। लिङ् चेति नियमाल्लोण्न भविष्यतीति शक्यते वक्तुम्। ननु तुमुन् भावे कर्तृकर्मणोर्लिङ्लोटाविति भिन्नार्थत्वात् कुतो बाध्यबाधकभावः?। नैष दोषः। भावेऽपि लिङ्लोटोरस्ति विधानमिति तद-पेक्षया बाध्यबाधकभावोऽभिमतः। आस्यते भोक्तुमिति। भोजनार्थत्वादासनस्य पौर्वकाल्यमात्रं गम्यते इति समानविषयत्वाद्बाध्यबाधकभावप्रसङ्गः। क्त्वा भावे, तत्रैव च लकारोत्पत्तिरत्रेति समानार्थत्वमपि विद्यते। तत्रायं निर्णयः–स्त्र्यधिकारात् परस्तादपि

---

उ ] लिङ् चेति। लोडापादन एव भाष्यतात्पर्यमिति भावः। नियमादिति। नियमो वा कल्प्यो, ज्ञापकं वा कल्प्यमिति तु भाष्याशयः। किञ्च,–लिङ् कर्तृकर्मणोर्विहितार्थः, भावे तुमुन्भावार्थयोस्तयोरपवाद एवेतीष्टं भगवत इति ज्ञायते इति लिङ् भवत्येवेत्यपि यत्र-टश्चिन्त्यः। ननु लिङ्लोटौ कामप्रवेदने विधीयेते, 'इच्छामि भुञ्जीत' 'इच्छामि भुङ्क्तां भवा'निति हि तदुदाहरणम्। इदं त्वकामप्रवेदनेऽपीति कथमनयोर्बाध्यबाधक-भावः। न चेदमपि कामप्रवेदनविषयम्, इच्छति भोक्तुमित्युदाहरणाऽसङ्गतेः, वक्त्रभि-प्रायाविष्करणमेव हि 'कामप्रवेदन'शब्देनोच्यत इति चेन्न; 'तत्र भोजनमिच्छ-ती'ति तदर्थेनाऽत्राऽपि तत्त्वात्। ननु पौर्वकाल्याऽप्रतीतेः कथं क्त्वाविषये लकारप्राप्तिरत आह–भोजनार्थत्वादिति। 'स्त्रियाः प्रा'गित्यत्र पक्षे दूषणान्तरमाह–

---

१ इदं क्लृप्तम् । २ इदं कल्पितम् । ३ 'स्त्रियाः' । ४ 'तुमुनि' ।

भोक्तुम् । कार्ये भोजनस्येयपि यथा स्यात् ॥ ॥ अर्ह तृज्विधानम् ॥*॥ अर्हे तृज्विधेय । इमेऽर्हे कृत्या विधीयन्ते ते विशेषविहिता सामान्य विहित तृच बाधेरन्॥नैष दोष । भावकर्मणो कृत्या विधीयन्ते। कर्तरि तृच् । क सम्प्रसङ्गो यद्भावकर्मणो कृत्या कर्तरि तृच बाधेरन् ?॥ एव तर्हि॥ ॥अर्ह कृत्यतृज्विधानम् ॥*॥ अर्हे कृत्यतृचो विधेया । अयमर्हे लिङ्विधीयते स विशेषविहित सामान्यविहितान् कृत्यतृचो [वा] बाधेत ॥ [वासरूपो] ॥

कृत्या ॥३।१।९५ ॥

॥~॥ कृत्यसज्ञाया प्राङ्ण्वुल्वचनम् ॥*॥ [ कृत्यसज्ञाया प्राङ्ण्वुलवच नम् ]। कृत्यसज्ञायां प्राङ्ण्वुल इति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ ण्वुल कृत्यसज्ञा माभूदिति॥ ॥अ कृत्यतृज्वचन तु ज्ञापक प्राङ् ण्वुल्वचनानर्थक्य स्य॥*॥यदयमर्हे कृत्यतृचश्चेति तृज्ग्रहण करोति तज्ज्ञापयत्याचार्य –'प्राङ्ण्वुल कृत्यसज्ञा भवती'ति॥एवमपि ण्वुल कृत्यसज्ञा प्राप्नोति।'योगापेक्ष ज्ञापकम्'॥

तव्यत्तव्यानीयरः ॥ ३।१।९६ ॥

॥*॥ केलिमर उपसङ्ख्यानम्॥*॥ केलिमर उपसङ्ख्यान कर्तव्यम् । पचेलिमा माषा पक्तव्या । भिदेलिमा सरला भेत्तव्या ॥*॥ वसेस्तव्यत्कर्तरि णिच्च ॥*॥ वसेस्तव्यत्कर्तरि वक्तव्य । णिद्वाऽसौ भवतीति वक्तव्यम् । वसतीति वास्तव्य । ॥*॥ तद्धितो वा ॥*॥ तद्धितो वा पुनरेष भविष्यति । वास्तुनि भवो वास्तव्य ॥ [ तव्यत्तव्याऽनीयर ] ॥

---

प्र ]त्समरूपविधिर्भवति।'अर्हे कृत्यतृचश्चे'त्यत्र तु कृत्यतृज्ग्रहणान्न तस्याऽनित्यत्व ज्ञाप्यत।

कृत्या । 'कृत्या' इत्येतावन्मात्रमित्याह–कृत्यसज्ञायामिति । योगापेक्ष मिति । ण्वुल्तृचावित्येतस्माद्योगात्प्राक्कृत्यसज्ञाधिकार इत्येव तृज्ग्रहणेनानुमा-स्यत इत्यर्थ । [ कृत्या ]।

तव्यत्तव्या । केलिमर इति । कर्मकर्तरि चाय कैश्चिदिष्यते । भाष्यकारेण तु कर्मणि प्रदर्शित । वास्तुनि भव इति। दिगादिभ्यो यदिति दिगादित्वाद्यत्प्रत्यय । नित्यानां शब्दानां यथाकथञ्चिदन्वाख्यान कर्तव्यमिति मन्यते। यथोक्तम्–'उपादा-यापि ये हेयास्तानुपायान् प्रचक्षते । उपायाना च नियमो नावश्यमव

---

उ ] मन्ते–कालादिष्विति । 'अर्हे तृ'तिनि च ॥

तव्यत्तव्या। कैश्चिदिति। वृत्तिकारादिभिरित्यर्थ ।कर्मणि प्रदर्शित इति ।'पक्तव्या' इति विवरणात्। न हि तत्र कर्मकर्तरि, 'तपस्तप कर्मकस्यैव' इति वचना दिति भाव । ननु भवेऽपि विशेषान्वय तद्धितेन सिद्धिरत आह–नित्यानामिति । वस्तुभवत्वनापि वामकर्तुरेव सत्त्व वैयाकरणविशेष , [सत्त्वा] सर्वदोषपरिहारा-

अचो यत् ॥ ३।१।९७ ॥

अज्ग्रहणं किमर्थम् ? ॥ अजन्ताद्यथा स्याद्धलन्तान्मा भूदिति ॥ नैतदस्ति प्रयोजनम् । हलन्तात्ण्यद्विधीयते स बाधको भविष्यति ॥ यथैव तर्हि ण्यद्यतं बाधते एवं तव्यदादीनपि बाधेत । अज्ग्रहणे पुनः क्रियमाणेऽजन्ताद्यद्विधीयते हलन्तात्ण्यत् [ विधीयते ] । एतावन्तश्च धातवो यदुताऽजन्ता हलन्ताश्च । उच्यन्ते च तव्यदादयः । ते वचनाद्भविष्यन्ति ॥ नैतदस्ति प्रयोजनम् । वासरूपेण तव्यदादयो भविष्यन्ति ॥ इदं तर्हि प्रयोजनम्,—अजन्तभूतपूर्वमात्रादपि यथा स्यात् । लव्यम् पव्यम् । आर्द्धधातुकसामान्ये गुणे कृते पि प्रत्ययसामान्ये च वान्तादेशे कृते 'हलन्ता'दिति ण्यत्प्राप्नोति ।

तथा दित्स्य धित्स्यम्,—आर्द्धधातुकसामान्येऽकारलोपे कृते 'हलन्ता'दिति ण्यत्प्राप्नोति । अज्ग्रहणसामर्थ्याद्यदेव भवति ॥*॥ यति जनेरुपसङ्ख्यानम् ॥*॥ यति जनेरुपसङ्ख्यानं कर्तव्यम् ॥ जन्य वत्सेन ॥ अन्यदपमिदमुच्यते [ जने इति] । ॥*॥ 'तकिशसिचतियतिजनीनामुपसङ्ख्यानमिति वक्तव्यम्' ॥*॥ तकि तक्यम् । शसि—शस्यम् । चति—चत्यम् । यति—यत्यम् । जनि—जन्यम् । ॥*॥ हनो वा वध च ॥*॥ हनो वा यद्वक्तव्य । 'वध' इत्ययं चाऽऽदेशो वक्तव्यः । वध्यः । घात्य. । ॥*॥ तद्धितो वा ॥*॥ तद्धितो वा पुनरेष भविष्यति—वधमर्हतीति वध्य.॥ यदि तद्धित., समासो न प्राप्नोति—अमियध्य

प्र.]तिष्ठते'इति॥अवास्तव्य इत्यत्र स्वरे भेदोऽपि नास्ति।तृत्योकेष्णुजिति पदन्तोदात्तत्वं विधीयते तदेव ययतोश्चाऽतदर्थे इत्यनेन । [ तव्यत्तव्यानीयरः ] ॥

अचो यत् । यति जनेरिति । यतोऽनाव इति स्वरार्थं जनेर्यद्विधानम् । जन्यमिति तु ण्यताऽपि सिध्यति, जनिवध्योश्चेति वृद्धिप्रतिषेधात् ॥ वधमर्हतीति । दण्डादिभ्य इति यत्प्रत्ययः । यदि तद्धित इति । तेन सह समासस्य लक्षणा-

उ ]दिति भावः । उपादायापि ये हेया इति,—उपायशब्दव्युत्पत्तिः पृषोदरादित्वात्साधुः । रेखागवयस्थानीयत्वादिति भावः । कृत्योकेति, ययतोरिति चान्तोदात्तविधायके । नञिति च तत्र वर्तते । अनेन वास्तव्योऽमवास्तव्य इत्यादिसमासस्त्वनभिधानान्न भवतीति भाष्याशयः ॥ [ तव्यत्तव्यानीयरः ] ।

अचो यत् । भाष्ये आर्द्धधातुकसामान्य इति । विषयसप्तम्यामपि परभूतविषयसत्वे एव प्रकृत्या परनिमित्तत्वमस्त्येवेति 'कथयती'त्यादौ स्थानिवत्त्वनिर्वाहः । आर्द्धधातुके इति च जातिनिर्देश इति भावः । यतोऽनाव इति । आद्युदात्तस्वरार्थमित्यर्थः । यत्प्रत्यय इति । एतेन 'दण्डादिभ्यो य' इति वृत्तिपाठ एतद्भाष्यविरुद्ध

१ इद क्वचित्र ।२ 'ऽपि'।३ 'सामान्येऽपि' ।४भाष्यवार्त्तिकमिदं स्यात् । ५ 'हन्ते'।

व्यम् ॥ तर्हि वक्तव्यम् ?॥ न वक्तव्यम् । गत्यर्थानां क्त कर्तरि विधीयते, तेन योगादजर्यं कर्तरि भविष्यति ॥ गत्यर्थानां वै क्त कर्मण्यपि विधीयते, तेन योगादजर्यं कर्मण्यपि प्राप्नोति॥ जीर्यतिरकर्मक ॥ भावे तर्हि प्राप्नोति ॥ सङ्गतग्रहणमिदानीं किमर्थं स्यात् ? ॥ कर्तृविशेषण सङ्गतग्रहणम् । सङ्गत चेत्कर्तृ भवतीति । तद्यथा–'हृषेर्लोमसु' इति लोमानि चेत्कर्तृणि भवन्तीति॥

वद सुपि क्यप्च ॥ ३।१।१०६ ॥

॥ *॥वद सुप्यनुपसर्गग्रहणम्॥*॥ वद सुप्यनुपसर्गग्रहण कर्तव्यम्। इह मा भूत्–प्रवाद्यम्, अपवाद्यमिति ॥तर्हि कर्तव्यम्?॥ न कर्तव्यम् 'अनुपसर्गे'

प्र ]प्रत्युदाहरणे प्रदर्शनीय इति भाव । गत्यर्थानामिति। यद्यपि सङ्गमन सङ्गतमिति भावे इह क्तो विहितस्तथापि गत्यर्थाना क्त प्रत्यय कर्तरि दृष्टो–गतो ग्राम देवदत्त इति । ततो गत्यर्थधातुसाहचर्यादजर्यमिति कर्तरि निपातनमिति मन्यते । जीर्यतिरकर्मक इति । सोपसर्गस्य सकर्मकत्वेपीहानुपसर्गस्य निपातनादकर्मकत्व बोद्धव्यम् । इत्यरर्माभावाश्रयेण चाऽकर्मकत्वमुक्तम् । कालादिना तु सर्वस्यैव सकर्मकत्वम् । सङ्गतग्रहणमिति।नहि गमेर्भावस्य जीर्यतेर्भावेन सामानाधिकरण्यमुपपद्यत इति प्रश्न । कर्तृविशेषणमिति । वैयधिकरण्यमनयो पदयो स्यादिति भाव । लोमानि चेदिति । तथा च हृष्ट लोमभिर्हृषित लोमभिरिति वैयधिकरण्येऽपीड्विकल्पो भवति । तस्मात्कर्तरीति वक्तव्यम् । अथ वा सामानाधिकरण्यत्यागेन वैयधिकरण्याश्रयणस्याऽयुक्तत्वान्निपातनाद्वा कर्तर्येव प्रत्ययो भवतीति स्थितम् ॥

उ ]मिति मैत्रीपर्यायस्य भावत्वात्तस्यैवाऽत्र ग्रहात्। अतस्तत्तात्पर्यमाह–तथापीति। तेन योगादिति भाष्यस्य,–तेन साहचर्यादित्यर्थ । सोपसर्गस्येति । अर्थान्तर वृत्त्येति भाव । ननु कालादिकर्मसद्भावात्कथमकर्मकत्वमत आह–इत्यर्थेति । एतच 'गतिबुद्धि' सूत्रे 'कालाध्वनो'रिति सूत्रे च निरूपितम् । 'कर्तरी'ति वार्तिकारम्भवादाह भाष्ये–भावे तर्हीति। गत्यर्थेभ्यो विशिष्य विधानेन भावेऽपि 'क्त'दर्शनादिति भाव । प्रत्याख्यानवादाह–सङ्गतग्रहणमिति । तथा च तत्सामर्थ्यात्कर्तर्येव भविष्यति नाऽर्थो वार्तिकेनेत्यर्थ । वार्तिकारम्भवादाह–कर्तृविशेषण मिति । कर्तृपदाऽध्याहारेणेति भाव । तद्याचष्टे–वैयधिकरण्यमिति । 'अजर्यं सङ्गतेन'त्युदाहरणमिति भाव । एवञ्च तत्सामर्थ्याऽभावेन भावे प्रत्ययस्यात्स्यर्थ–कर्तरीति वाच्यं, निपातनसामर्थ्याद्वा कर्तरीति भाव । वैयधिकरण्येऽपीडिति । कर्तरि निष्ठाया सामानाधिकरण्येऽपि तद्विकल्प इति भाव ॥[अजर्यं सङ्गतम्] ॥

१ सङ्गतं चेत्कर्तृ भवतीति' । २ इति क्वचिन्न ।
३ 'प्रवाद' । ४'वक्तव्य' ।

इति वर्तते ॥ एवं तर्हि अन्वाचष्टे–'अनुपसर्ग'इति वर्तते' इति ॥ नैतदन्वाख्येयम्–'अधिकारा अनुवर्तन्ते' इति । एष एव च न्यायो यदुत 'अधिकारा अनुवर्तेर'न्निति ॥ [ वद सुपि क्यप् च ] ॥

मुवो भावे ॥ ३।१।१०७ ॥

भावग्रहणं किमर्थम् ? ॥ कर्मणि मा भूदिति ॥ नैतदस्ति प्रयोजनम् । भवतिरयमकर्मकः । अकर्मका अपि वै धातवः सोपसर्गाः सकर्मका भवन्ति [इति]नेनाऽनुभव्यमामन्त्रणमित्यत्रापि प्राप्नोति॥ एतदपि नास्ति प्रयोजनम् । 'अनुपसर्गे' इति वर्तते । [ ॥-॥ भावग्रहणमुत्तरार्थम ] ॥*॥ उत्तरार्थं तर्हि भावग्रहणं कर्तव्यम् । 'हनस्त च'। भावे यथा स्यात्–ब्रह्महत्या वर्तते॥ क्व मा भून्–'श्वघात्यो वृषलः' इति ॥ [ भुवो भावे ] ॥

हनस्त च ॥ ३।१।१०८ ॥

॥*॥ हनस्तस्त्रियां छन्दसि ॥*॥ 'हनस्त च'इत्यत्र 'स्त्रियां छन्दसि वक्तव्यम्' । 'या भ्रूणहत्या निगृह्णानचरणम्'। 'अस्यै त्वा भ्रूणहत्यायै चतुर्थं प्रतिगृहाण॥'स्त्रियामिति किमर्थम् ?॥घाते ते दस्युहत्याय॥ छन्दसीति किमर्थम् ?॥ दस्युहत्या, ब्रह्महत्या वर्तते ॥

एतिस्तुशास्वृदृजुषः क्यप् ॥ ३।१।१०९ ॥

'क्यप् शिति वर्तमाने पुनः क्यब्ग्रहणं किमर्थम्?॥ क्यबेव यथा स्याद्

प्र ] वद॰ सुपि।नैतदिति।यत्राधिकारस्य विच्छेदोऽवधिपरिज्ञानं वा लिङ्गवशेनेति न्यायाश्रयणं वा तत्रावश्यवक्तव्यो विशेषः।एवमादौ तु प्रयोजनाभावादवक्तव्य इत्यर्थः।

भुवो भावे । भवतिरकर्मक इति । ननु प्राप्त्यर्थः सकर्मकोऽस्ति । नैव दाव । प्राप्त्यर्थस्य ग्रहणात् । ननु सत्त्वादिरर्थे प्राप्नोति । अनभिधानात् क्वचिदकर्मणि न भविष्यतीति मन्यते । [ भुवो भावे ] ।

हनस्त च । दस्युहत्यायेति।छन्दस्येवेत्य पावन्न नपुंसक,भाषायान्तु स्त्रीलिङ्गमेव।

उ ] वद सुपि । यत्राऽधिकारस्येति । यथा सङ्ख्यायाऽनुवृत्तिरित्ये 'धान्यानामि'त्यादौ । अवधरिति । यथा'ऽप्रागीश्वरात् प्राग्हितः' इति । लिङ्गेति । यथा 'प्रत्यय' इत्यत्र 'सर्वत्रे'ति ॥ [ वद सुपि क्यप् च ] ।

भुवो । प्राप्त्यर्थादिति । धातुपाठे इति भावः । प्रसिद्धत्वाच्चेदपि बोध्यम् ॥

हनस्त च । भाषायामित्विति। शब्दान्तरस्वभावादेनाधिहितस्य तस्य स्त्रीत्वमित्यर्थः ॥ [ हनस्त च ] ॥

१ 'दन्वेय' । २ 'रकर्मकः' । ३ 'भाव्य' । ४ इदं लुप्त स्यात् । ५ 'इदं मा भूत्' । ६ 'छन्दसीति वक्तव्य' । ७ 'ता' । ८ 'गृहाणे' ।

दन्यत्प्राप्नोति तन्मा भूदिति ॥ किं चान्यत्प्राप्नोति ?॥ ण्यत् ॥ 'ओरावश्यके ण्यत' इत्येते क्यप्पूर्वविप्रतिषिद्ध'मिति वक्ष्यति, स पूर्वविप्रतिषेधो न पठितव्यो भवति । अथवा हनस्तश्चिच्चिया छन्दसि चोदित, स न वक्तव्यो भवति ॥*॥ क्यब्विधौ वृ ग्रहणम् ॥*॥ क्यब्विधौ वृन्ग्रहणं कर्तव्यम् । इह मा भूत्-'वार्या ऋत्विजः' इति ॥*॥ अञ्जेश्चोपसङ्ख्यानं सञ्ज्ञायाम् ॥*॥ सञ्ज्ञायामञ्जेश्चोपसङ्ख्यानं कर्तव्यम् । आज्यम् । यदि क्यप्-वृद्धिर्न प्राप्नोति । तस्माण्ण्यदेव । यदि ण्यत्,-उपधालोपो न प्राप्नोति । तस्मात्क्यबेव । ननु चोक्तम्-'वृद्धिर्न प्राप्नोती'ति ?॥ आङ्पूर्वस्यैष प्रयोगो भविष्यति ॥ यद्येवमवग्रहः प्राप्नोति ॥ न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्त्यम् । यथालक्षणं पदं कर्तव्यम् ॥ [ एनिस्तुशास्वृदृजुषः ] ॥

ई च खनः ॥ ३।१।१११ ॥

दीर्घोच्चारणं किमर्थं न 'इ च खनः' इत्येवोच्येत ?॥ का रूपसिद्धिः-

---

प्र ] एतिस्तु । अथवेति । पूर्वस्मात् क्यपोऽस्य वैलक्षण्यप्रदर्शनाय क्यब्ग्रहणम् । तेन पूर्वं क्यप्छन्दसि क्वचित्सिद्धो भवति । क्यब्विधाविति । 'ईडवन्दवृशंसदुहां ण्यत इति' वार्यशब्दस्याद्युदात्तविधानादेतज्ज्ञायतेऽनन्तरं हीडिवन्दिभ्यामात्मनेपदिभ्यां साहचर्याद्वृशब्देन वृणातिर्गृह्यते । तस्माण्ण्यदेव इति । ननु स्वरभेदो भवति, क्यपि सत्याद्युदात्तं पदं, ण्यति सत्यन्तस्वरितम् । नैष दोषः । 'नञ्विषयस्यानिसन्तस्ये'त्याद्युदात्तविधानात् । न लक्षणेनेति । संहिताया एव नित्यत्वम् । पदविच्छेदस्तु पौरुषेयत्वम् । तथा च यत्रार्थनिश्चयाभावस्तत्राऽयमहो न क्रियते । तदुक्तम्-'हरिद्रुरवगृह्यते' इति । हरिद्रुरित्यत्र किं हरिशब्द इकारान्त, अथ हरिच्छब्दस्तकारान्त इति सन्देहात् ॥ [ एतिस्तुशास्वृदृजुषः ] ।

ई च खनः । दीर्घोच्चारणे भाष्यकारेण प्रत्याख्याते केचित् प्रश्लेषनिर्देशात् द्वितीय इकारो 'ये विभाषे'त्यात्त्वस्य पक्षे परत्वात्प्राप्तस्य बाधनार्थ इत्याहुः ।

---

उ ] एतिस्तु। आत्मनेपदिभ्यामिति। अकारवद्विवरणाभ्यामित्यपि बोध्यम्। एतद्द्वौ उत्तरसाहचर्यमप्यनुग्राहकम् । वृणातिरिति।'वृञ् सम्भक्तौ'इत्यर्थः । एवञ्च क्यप् वृञ एवेति भावः । वस्तुतो व्याख्यानादत्र वृञो ग्रहणमित्येव तत्त्वम् । संहिताया एव नित्यत्वमिति । अविच्छिन्नपारम्पर्यत्वमेवाऽत्र नित्यत्वम् । अर्थनिश्चयाऽभाव इति । आद्यशब्दस्य रूढत्वादर्थोऽस्मिन् न इति निश्चयाऽभाव इत्यर्थः । 'समासे संहिता नित्ये'त्यवग्रहस्य साधुत्वाऽभावात्सम्प्रदायमात्रशरणस्य तस्य लक्षणाऽविषयते'त्यर्थं मन्ये ॥ [ एतिस्तुशास्वृद ] ।

---

१ 'अञ्जेश्चोपसङ्ख्यानं सञ्ज्ञायां' । २ 'स्यचः' । ३ इदं क्वचिन्न ।

स्ति तदर्थं प्रतिषेधः स्यात्—भार्या नाम क्षत्रिया ॥-॥ सिद्धं तु स्त्रियां सञ्ज्ञाप्रतिषेधात् ॥-॥ सिद्धमेतत्॥कथम् ?॥[स्त्रियां सञ्ज्ञाप्रतिषेधात्'] । स्त्रियां सञ्ज्ञाप्रतिषेधो वक्तव्यः । 'सञ्ज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः'। ततो 'न स्त्रियां भृञः' इति॥सिध्यति । सूत्रं तर्हि भिद्यते॥यथान्यासमेवास्तु॥ ननु चोक्तम्—भृञः सञ्ज्ञाप्रतिषेधे स्त्रियामप्रतिषेधोऽन्येन विहितत्वादिति । नैष दोषः । भाव इति नानुवर्तते, कर्मसाधनश्चायम् । अथ वा ये एते सञ्ज्ञायां विधीयन्ते तेषु नैव विज्ञायते—'सञ्ज्ञायामभिधेयायामिति ॥ किं तर्हि ?॥ 'प्रत्ययान्तेन चेत्सञ्ज्ञा गम्यत इति ॥ अपर आह—॥-॥ सञ्ज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति ॥-॥ सञ्ज्ञायां पुंसि दृष्टत्वात्तव भार्याशब्दो न सिध्यति । ॥५॥ स्त्रियां भावाऽधिकारोऽस्ति तेन भार्या प्रसिध्यति॥*॥ [ स्त्रियां भावोऽधि

प्र ]साधनोऽत्र सञ्ज्ञाशब्दः ॥ ततो न स्त्रियामिति । स्त्रीशब्देनाऽत्र स्तनकेशवती गृह्यते । अन्यथा विधिप्रतिषेधयोर्विषयविभागो न स्यात् । तस्माद्व्याकरणे भवति विधिर्विषयः । लौकिकी तु स्त्री प्रतिषेधस्य । भाव इति सर्वेति । 'व्रजयजोर्भावे क्यप्'इत्यत्र । सञ्ज्ञायामिति सञ्ज्ञाशब्दः कर्मसाधनो न गृह्यते, किं तर्हि ?, भावसाधनः । तेन प्रत्ययान्तेन यदि रूढिर्गम्यते तत्र प्रत्ययः । न च भार्याशब्देन हि रूढिप्रभिधीयत इति कथमेष प्रसङ्गः । सञ्ज्ञायामिति । 'भार्या नाम क्षत्रिया' इत्यत्राऽसञ्ज्ञायामिति प्रतिषेधस्य चरितार्थत्वात्तान्तरेण स्त्रियां सञ्ज्ञायां क्यप् प्रसङ्गः क्रार्याशब्दो न सिध्यतीति चोद्यम् । स्त्रीप्रकरणे भावग्रहणानुवर्तना कर्मणि क्यब-

द्यो ]भिप्रेत्य तत्सिद्धये कर्मणि सञ्ज्ञाशब्दं व्युत्पादयति—सञ्ज्ञायत इति। अन्वी दृश्य योग्या यस्याऽस्तीत्यर्थः । अन्यथेति । 'सञ्ज्ञायां समज नि क्यबन्तानां 'समज्ये' त्यादीनां स्त्रीलिङ्गत्वादिति भावः । लौकिकी त्विति । न च विपरीतं किं न स्यादिति वाच्यं 'स्त्रियां क्तिन्' इत्यत्र शास्त्रीयस्यैव ग्रहेणऽस्याऽपि तत्रैव प्रवृत्तेरिति भावः । भाष्ये—यथान्यासमिति । 'सञ्ज्ञायां समे ति सूत्रे यदधिरः 'न स्त्रियां नि त्यादि कृत तस्य कार्येमित्यर्थः। भाव इति तत्र वर्तते इति । ननु समज्यानिपद्यानिपत्यानामधिकरण, मन्याविद्योः करणः तत्र सिद्धत्वीकारणक्यप 'भावे इत्यस्य तत्र सम्बन्ध इति चेन्न न विषये भाव इति वर्तते इत्यर्थः । एवञ्च मनो भव एवष्यत इति भावः । एतमेव भावाऽधिकारोऽस्ती त्यपि व्याख्येयम् । सञ्ज्ञाशब्द इति । सञ्ज्ञाशब्देन कर्मसाधनेन सञ्ज्ञायमानमभिधीयते । तत्राऽभिधेये प्रत्ययश्चे तर्हि भृत्याशब्देन स्यादेव रूढिश्चाभिधानमिति भावः । भावसाधनेन धातूनामनेक धर्यादूरिरुच्यते तदाह—रूढिरिति । तद्विषयोऽर्थ इत्यर्थः । तेन सञ्ज्ञायां गम्यत

१ मन्ये इदं ह्रस्वं स्यात् । २ श्लोकवार्तिकम् ।

प्रतिग्राह्यम्, अपिग्राह्यमित्येवाऽन्यत्र॥ [ प्रत्यपिभ्याम् ]।

अमावस्यदन्यतरस्याम् ॥ ३।१।१२२ ॥

कस्याऽयमनुबन्ध ¹॥प्रधानस्य॥ यदि प्रधानस्य,—अमावस्या इत्येवं स्वर. प्रसज्येत। अमावस्या इति चेष्यते। तथा—अमावास्याग्रहणेनाऽमावस्याग्रहणं न प्राप्नोति ॥ एवं तर्हि निपातनस्य॥यदि तर्हि निपातनान्यप्येवंजातीयकानि भवन्ति 'श्रोत्रियश्छन्दोऽधीते' इति । स्वपवर्गाभावान्नित्याद्युदात्तत्वं न प्राप्नोति ॥ एवं तर्हि—

॥१॥ अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम् ॥

तथैकवृत्तिता तयो स्वरश्च मे प्रसिध्यति ॥०॥ [अमावस्यद] ।

प्र ] अमावस्यत्। प्रधानस्येति। विधीयमानत्वात्प्रत्ययस्य प्राधान्यमिति यत्प्रत्ययो निपात्यत इत्युक्तं भवति । एवं स्वर इति । 'यतोऽनाव' इति उत्तरपदमाद्युदात्तं स्यात् । अन्तस्वरितं चेष्यते । अमावास्याग्रहणेनेति।शब्दान्तरत्वात्। अमावास्या-शब्दस्य ण्यदन्तत्वादमावस्याशब्दस्य यदन्तत्वादिति भाव । एवं तर्हीति । यत्प्रत्ययान्तत्वं न निपात्यत इत्यर्थ । ननु तिसि प्रत्ययग्रहणं चोदयिष्यते, निरस्त-विभागे च निपातन आश्रीयमाणे स्वरितत्वं न सिध्यतीति मत्वाह—यदि तर्हीति । एवंजातीयकानीति । निरस्तावयवविभागानीत्यर्थ । अमावसोरिति । वृद्धिभावा-भावकृतभेदाश्रयो द्विवचननिर्देश । निपातयामीति । 'एकतरस्येति' शेष । एक-वृत्तितेति । एका तद्धितवृत्तिरुभयो सिध्यति, एकदेशविकृतस्याऽनन्यत्वात् । तथा हि ण्यत्यमावास्याशब्दस्य न्याय्यमाकारस्य प्रकृतित्वमकारस्य तु विकारत्वम् ॥

उ.] अमाव । यत्प्रत्यय इति। सूत्रे तदानुपूर्व्या एव श्रवणादित्यर्थ ।अन्तस्वरित-मिति । 'अमे'ति तत्रसप्तमीनिर्देशादुपपदत्वान्निपातनेन वा तत्त्वादुपपदसमासे कृदुत्तरपदप्रकृतिस्वरेणेति भाव. । यत्प्रत्येति। निरस्ताऽवयवविभाग समुदाय एव निपात्यते । तस्य च तकारोऽन्त इत्यन्तस्वरितत्वं सिध्यतीति भाव। 'अमावस्या'-शब्दस्थाने चेदं निपातनमिति तद्ग्रहणेनाऽस्य ग्रहणमपि सिद्धमिति तात्पर्यम् । भाष्ये ञ्नितीत्याद्युदात्तत्वं न प्राप्नोतीति । ञ्नितीति परसप्तमीत्यभिप्रायेणेदम् । प्रकृते स्वरितत्वं न प्राप्नोतीत्यपि बोध्यम् । तत्सूत्रे प्रत्ययग्रहणस्य प्रत्याख्यास्य-मानत्वात्तदीत्येदम्भाष्यमित्यन्ये । एकतरस्येतीति । वस्धातुभ्यां ण्यतो कृतयोर-न्यतरस्येत्यर्थ । वसोरिति पञ्चम्यर्थे षष्ठीद्विवचनम् । ण्यद्ण्यमाशब्दे उपपदे निपा-त्यते इति बोध्यम् । अन्यथोपपदत्वाभावे समास उत्तरपदप्रकृतिस्वरश्च न स्यादिति बोध्यम् । वार्तिके 'अवृद्धिता'शब्देन ह्रस्वो लक्ष्यते । तद्गुणयन्नाह—एकदेशेति।

¹ 'एव स्वर' ।

श्रुतुः',–प्रख्यावाद्यः, आव्यः, स्ताव्यः, उपचाय्यपृडम्। उपपूर्वाच्चिनोतेरायादेशो[ऽपि] निपात्यते। नहि ण्यतैव सिध्यति। ॥*॥ हिरण्य इति च ॥*॥ हिरण्य इति च वक्तव्यम्। उपचेयपृडमित्येवान्यत्र। [ छन्दसि निष्टर्क्ये ] ॥

ऋहलोर्ण्यत् ॥ ३।१।१२४ ॥

॥*॥ पाणौ सृजेर्ण्यद्विधिः ॥*॥ पाणौ सृजेर्ण्यद्विधेयः। पाणिसर्ग्या रज्जुः। ॥*॥ समवपूर्वाच्च ॥*॥ समवपूर्वाच्चेति वक्तव्यम्। समवसर्ग्यः ॥*॥ लपिदभिभ्यां च ॥*॥ लपिदभिभ्यां चेति वक्तव्यम्। अपलाप्यम्। अवदाभ्यम्॥

ओरावश्यके ॥ ३।१।१२५ ॥

कथमिदं विज्ञायते–आवश्यके उपपदे, आहोस्विदावश्यके द्योत्य इति? कश्चात्र विशेषः?। ॥*॥ आवश्यक उपपद इति चेद्द्योत्य उपसङ्ख्यानम् ॥*॥ आवश्यके उपपदे इति चेद्द्योत्येऽउपसङ्ख्यानं कर्तव्यम्। लाव्य लाव्यम्। अस्तु तर्हि द्योत्ये। ॥*॥ द्योत्य इति चेत्स्वरसमासानुपपत्तिः ॥*॥ द्योत्य इति चेत्स्वरसमासानुपपत्तिः [प्राप्नोति]। अवश्यलाव्यम्। अवश्यपाव्यम् ॥ नैष दोषः। मयूरव्यंसकादित्वात्समासः। विस्पष्टादिवत्स्वरो भविष्यति। ॥*॥ ओरावश्यके ण्यतः स्तौतेः क्यप्पूर्वविप्रतिषिद्धम् ॥*॥ ओरावश्यके ण्यतः स्तौतेः क्यब्भवति पूर्वविप्रतिषेधेन। ओरावश्यके ण्यद्भवतीत्यस्यावकाशः–अवश्यलाव्यम्। अवश्यपाव्यम्। क्यपोऽवकाशः–स्तुत्यः। इहोभयं प्राप्नोति–अवश्यस्तुत्यः। क्यब्भवति पूर्वविप्रतिषेधेन॥ स तर्हि पूर्वविप्रतिषेधो वक्तव्यः?॥

---

प्र ] तु वर्णान्तररूपापत्तिरिति प्रदर्शनाय 'कृतार्थ' इत्युक्तं भवति॥ [छन्दसिनिष्ट]॥

ओरावश्यके। कथमिति। किमावश्यकार्थवाचिन्युपपदे प्रत्ययः, उत प्रत्ययेन आवश्यके द्योत्य इति प्रश्नः। अवश्यलाव्यमिति। 'द्वावपूपा'वित्यादौ गतार्थस्यापि क्वचित् प्रयोगो लोके दृश्यते स्यथवं प्रत्यनादरादिति मन्यते। विस्पष्टादिवदिति। यथा 'विस्पष्टकटुक'मित्यत्र मयूरव्यंसकादित्वात्समासे कृते पूर्वपदप्रकृतिस्वरो भवति,

---

उ ] यावत्। एङ्रेरिगुपधलक्षण च ॥ [ छन्दसि निष्टर्क्ये ]।

ऋहलोर्ण्यत्। पाणौ सृजे'र्ऋदुपधा'दिति क्यपोऽपवादो ण्यत्। 'लपिदभिभ्यां 'पोरदुपधा'दिति ॥ [ ऋहलोर्ण्यत् ]।

ओरावश्यके। नन्वर्थत्वादवश्यशब्दप्रयोग एव न स्यात्, ण्यदेव वा न स्यादिति कुतो नोक्तमत आह–द्वावपूपाविति। 'द्योत्य' इत्युक्तेर्द्योतकसमुच्चय इव एवेति लभ्यते। उपपदत्वाऽभावात्स्वरसमासयोरनुपपत्तिरिति भावः। ननु 'विस्पष्टादीनि गुणवचनेषु' इत्यनेन पूर्वपदप्रकृतिस्वरविधानादत्र चोत्तरपदप्रकृतिस्वरस्येष्टत्वेन 'विस्पष्टादिव'दित्ययुक्तमिति मत्वाऽऽह–यथेति। एवञ्च मयूरव्यंसकादिषु निपा-

त्वात्सिद्धम् ॥ ऊहिरपि वह्यर्थे वर्तते ॥ कथं पुनरन्यो नामान्यस्यार्थे वर्तते, कथमूहिर्वह्यर्थे वर्तते ? ॥ बह्वर्था अपि धातवो भवन्तीति ॥ अस्ति पुनश्च चिन्यत्रापि ऊहिर्वह्यर्थे वर्तते॥ 'अस्ती'त्याह ॥

॥*॥ उह्विग्रहाच्च ब्राह्मणे सिद्धम् ॥*॥ उह्विग्रहाच्च ब्राह्मणे सिद्धमेतत्। समूह्य चिन्वीत पशुकाम। पशवो वै पुरीषं पशूनेवास्मै तत्समूहति।

## चित्याग्निचित्ये च ॥ ३।१।१३२ ॥

॥ ॥ अग्निचित्या भावेऽन्तोदात्त ॥*॥ अग्निचित्येतिभावेऽन्ते दात्तो भवति। अग्निचयनमेवाग्निचित्या ॥ [ चित्याग्निचित्ये च ]।

## ण्वुल्तृचौ ॥ ३।१।१३३ ॥

किमर्थश्चकार ? ॥ ॥ चकार स्वरार्थ ॥ ॥ चितोऽन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात् ॥ नैतदस्ति प्रयोजनम्। एकाच्त्र तत्र नार्थः स्वरार्थेन चकारेणाऽनुबन्धेन, प्रत्ययस्वरेणैव सिद्धम् ॥ विशेषणार्थस्तर्हि ॥ क्व विशेषणार्थेनार्थ ?॥ 'अप्तृन्तृ जिति। 'तृ' इत्युच्यमाने मातरौ मातर. पितरौ पितर ,-अत्रापि प्राप्नोति ॥ स्वसृनप्तृग्रहणं नियमार्थं भविष्यति,-'एतयोरेव योनिसम्बन्धयोर्नान्येषां योनिसम्बन्धाना'मिति ॥ सामान्यग्रहणाविघातार्थस्तर्हि ॥ क्व सामान्यग्रहणाविघातश्चार्थ ?॥ अत्रैव ॥ यदेतत्तृन्तृचोर्ग्रहणमेत'त्तृ' इति वक्ष्यामि ॥ यदि 'तृ' इत्युच्यते मातरौ मातर [पितरौ पितर ]

प्र ] ण्वुल्तृचौ। मातराविति। उणादिषु तृप्रत्ययान्ता मात्रादयो निपातिता इति

उ ] अग्नौ परि। भाष्ये-वहेर्व्यदिति। 'समूह्यश्छन्दे' इति शेष। तत्र इते सम्प्रसारण-दीर्घत्वे निपातनादित्यर्थ। [भाष्ये 'वहर्थ्यतिर्यथा स्या'दिति पाठ]। वहिसमानार्थेनेति। मवाद्यमिन्यमौ तु न, अनभिधानादिति भाव। ऊहिविग्रहादिति। ब्राह्मणे ऊहिना विग्रहदर्शनादूहेर्वह्यर्थत्वं सिद्धमित्यर्थ ॥[अग्नौ परिचाय्योपचाय्य]॥

ण्वुल्तृचौ।भाष्ये यदि 'तृ' इत्युच्यते मातरौ मातर अत्रापि प्राप्नोतीति। न च निरनुबन्धकत्वादस्यैव ग्रहणं स्यादिति वाच्यम्, स्यादनुरोधेन ज्ञापकसिद्धतयाऽनित्यत्वेन च तस्या इहाऽप्रवृत्तेरिति भाव। तृप्रत्ययान्ता इति। निरनुबन्धक तृ'प्रत्ययान्ता इत्यर्थ। अस्यापि तृन्वे यथान्यासेऽप्यापत्ते सत्त्वेन 'यदि तृ इत्युच्यमाने' इत्यस्याऽसङ्गत्यापत्ते। भाष्ये-तृ इति वक्ष्यामीति। एवञ्च तृनो ग्रहणसिध्यर्थ चकार इति भाव। यदि तृ इत्युच्यमाने इति। चकारकरणसामर्थ्यात्सानुबन्धग्रहणेऽपि निरनुबन्धकग्रहणं दुर्वारमेवेति भाव। अन्यत्रापि तदर्थत्वं दर्श

१अयपाठः क्वचित्। २'इत्यत्रापि'। ३"प्राप्नोतीति द्वितीयप्रतीके।अत्रैव प्राप्नोतीत्यर्थ। निरनुबन्धकत्वादस्यैव ग्रहणं स्यादिति भाव। तृप्रत्ययान्ता इति।" ४'त्युच्यते'।

यादबाधनार्थम्—आरभरा, भपचेति । [ नन्दिग्रहि ] ॥

इगुपधज्ञाप्रीकिरः कः ॥ ३।१।१३५ ॥

॥ ॥ इगुपधेभ्य उपसर्गे कविधिर्मेघाद्यर्थे ॥ ॥ इगुपधेभ्य उपसर्गे को विधेय ॥ किं प्रयोजनम् ?॥ 'मेघाद्यर्थं' । मेष देव सेव ॥ ॥न वा बुधादीना दर्शनादनुपसर्गेऽपि ॥*॥न वा को विधेय. । किं कारणम् ?॥[बुधादीनां दर्शनादनुपसर्गेऽपि] । बुधादीनामनुपसर्गेऽपि को दृश्यते । बुध भिद. युध. सिर्व इति ॥ कथ मेषः देव. सेव इति ?॥ पचादिषु पाठः करिष्यते ॥

पाघ्राध्माधेट्दृशः शः ॥ ३।१।१३७ ॥

॥ ॥ जिघ्र सज्ञायां प्रतिषेध ॥ ॥ जिघ्र सज्ञाया प्रतिषेधो वक्तव्यः । व्याजिघ्रतीति व्याघ्र । इह केचिच्छस्यैव प्रतिषेधमाहु , केचिज्जिघ्रभावस्य किं पुनरत्र न्याय्यम् ? ॥ शस्यैव प्रतिषेधो न्याय्यः । जिघ्रभावे हि प्रतिषिद्धे केन शे आकारलोपः स्यात् ॥ [ पाघ्राध्माधेट्दृश शः ] ॥

अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ॥

॥*॥ अनुपसर्गाल्लिम्पे ॥*॥ अनुपसर्गाल्लिम्पेरिति वक्तव्यम् । निलिम्पा नाम देवाः ॥ ॥ गवि च विन्दे संज्ञायामुपसंख्यानम् ॥*॥ गवि-चोपपदे विन्देः सज्ञायामुपसङ्ख्यानं कर्तव्यम् । गोविन्द इति ॥ अपरआह-मिदमुच्यते-'गवी'ति॥*॥गवादिष्विति वक्तव्यम्॥*॥ गोविन्द. । अरविन्द ॥

ज्वलितिकसन्तेभ्यो णः ॥ ३।१।१४० ॥

॥ ॥ तनोतेर्ण उपसङ्ख्यानम् ॥*॥

तनोतेर्ण उपसङ्ख्यानं कर्तव्यम् । अवतनोतीत्यवतान ॥

शिल्पिनि ष्वुन् ॥ ३।१।१४५ ॥

॥*॥ नृतिखनिरञ्जिभ्य ॥*॥

नृतिखनिरञ्जिभ्य इति वक्तव्यम् । इह मा भूत् । ह्वायक इति ॥

---

प्र.]गोपि भवति॥इत्यु॰भाष्यप्रदीपे तृतीयाध्यायस्य प्रथमे पादे षष्ठमाह्निकम्॥पादश्च॥

---

उ ] पाघ्राध्मा । केचिदिति भाष्ये । 'जिघ्र. सज्ञाया'मित्यादेशोऽयार उच्चारणार्थं इति जिघ्र इति पञ्चमीति भाव ।केचिज्जिघ्रभावस्येति। वार्तिके 'जिघ्र' इति पञ्चम्यन्तं मन्यन्ते । केन शे आकारलोप इति। आतो लोप इत्यत्रार्धधातुक इत्यधिकारादिति भाव । 'श्याऽऽद्व्यधास्रुसंस्रु' इत्यस्य प्राप्तिरेव न ॥ [ पाघ्राध्माधेट् ] ॥

अनुपसर्गा । अरविन्दोऽर्धर्चादि ॥ [ अनुपसर्गात् ] ॥

---

१ 'मेघाद्यर्थम्' । २'न वा वक्तव्य ' । ३ अयं क्वचिन्न ।
४ अयमंश क्वचिन्न । ५ 'वायक ' । ६ 'मन्यते' ।

॥४॥ यत्र च नियुक्तस्तत्र चोपसङ्ख्यानं कर्तव्यम्। छत्रधारः द्वारपालः। ॥५॥हृग्रहिनीवहिभ्यश्च॥६॥हृग्रहिनीवहिभ्यश्चेति वक्तव्यम्। हृ—भारहार [हृ]। ग्रहि—कमण्डलुग्राह । [ग्रहि]॥ नी—उष्ट्रप्रणाय ॥[नी] वहि—भारवाहः। ॥७॥ सर्वेरिगणन वा ॥८॥न चार्थः परिगणनेन ॥ कस्मान्न भवति—आदित्यं पश्यति हिमवन्तं शृणोति ग्रामं गच्छतीति?॥॥९॥ अनभिधानात् ॥१०॥ अनभिधानादेव न भविष्यति ॥ ॥ अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन ॥२॥ अकारादनुपपदात्कर्मोपपदो भवति विप्रतिषेधेन। अनुपपदस्यावकाशः—पचतीति पचः । कर्मोपपदस्यावकाशः कुम्भकारः—नगरकारः। ओदनपाच उभयं प्राप्नोति। कर्मोपपदो भवति विप्रतिषेधेन।अनुपपदस्यावकाशः—विक्षिप विलिख.। कर्मोपपदस्य स एव। काष्ठभेद उभयं प्राप्नोति । कर्मोपपदो

प्र ]तत्प्राप्यमिति कथ्यते'॥इति॥ तत्र प्राप्यत्वं सर्वस्य कर्मणोऽस्तिनियमा प्राप्यमाणत्वात्।अवान्तरविवक्षया तु प्रविष्यमुच्यते। वेदाध्याय इति।नित्यो वेदः स्थित एवाधीयते इति निर्वर्त्यत्वाऽभावः । छत्रधार इति । वेदाध्यायादिग्रहणेन छत्रधारादीना ग्रहणं नास्ति,प्रकारार्थेनाऽऽदिशब्देन सदृशानां वेदाध्यायादीनामेव शब्दाना ग्रहणात् । तत्प्राप्यमेव न विकार्यम् । नहि धारणपूर्वं छत्रस्य कश्चित् क्रियाकृतो विशेषः प्रत्यक्षानुमानपरिच्छेद्योऽस्ति । अनभिधानादिति । नित्यानां शब्दानामिदमन्वाख्यानमात्रम् । न चादित्यं पश्यतीत्याद्यर्थप्रतिपादनायादित्यदर्शादयः शब्दा लोके प्रयुज्यन्त इति शास्त्रेणापि साधुत्वेन नाऽन्वाख्यायन्त इत्यर्थः । कर्मोपपदस्येति । यदा गणपठितधातुविषय एवाऽण्प्रत्ययस्तदायं विप्रतिषेधो यदा ॥ सर्वधातुविषयोऽण्प्रत्ययस्तदा येन नाप्राप्तिन्यायादण्प्रत्ययस्यापवादत्वादुत्सर्गापवादयोर्विप्रतिषेधोऽनुपपन्नः । तथा च करोतेरण्प्रत्यय इति 'शिवशमरिष्टस्य करे' इति । ततश्च कुम्भकारादिरपि नाऽणोऽवकाशः, तत्राप्यच्प्रसङ्गात् । अत एव भाष्यकार

उ.]स्वर्णं कुण्डलं करोति,काष्ठं भस्म करोति। अनुमानाद्यथा—पुत्रं सुखं करोतीति । अत्र गुरुरुपलम्भो सुखप्रसादाऽनुमेयः । नित्यः। तत्तत्स्थेऽविच्छिन्नसारस्वतं इत्यर्थः । ननु 'वेदाऽध्यायादी'नामित्यादिनैव सर्वसङ्ग्रहे सिद्धे 'यत्र च नियुक्त' इत्यादेर्वैयर्थ्यमत आह—वेदाऽध्यायादीनामिति । वस्तुतः प्रपञ्चार्थमेव तानीति बोध्यम् । शास्त्रेणापि—'कर्मण्य'णिति सामान्यशास्त्रेणापि। ननु सर्वधातुभ्योऽण्विधानेन 'कुम्भकार' इति कथमणोऽवकाश इत्यत आह—यदेति । सर्वधातुविषयश्चाऽण्प्रत्यय आवश्यक इत्याह—तथा चेति । उदाहरणान्तराणि—[illegible] ॥

१ अयं पाठः क्वचिन्न । २ 'परि' । ३ 'दत्र' 'देवान'। ४ 'इहोभयं प्राप्नोति-ओदनपाच' । ५ 'इहोभयं प्राप्नोति-काष्ठभेद' । ६ 'नुवाख्यन्त' ।

पदं न बाधिष्यते ॥ अनुपपदस्यावकाशः –सुग्लः सुम्लः । कर्मोपपदस्य स एव । इहोभयं प्राप्नोति–गोसन्दायो वडवासन्दायः । कर्मोपपदो भवति विप्रतिषेधेन ॥ नैष युक्तो विप्रतिषेधः । अनुपपदस्तृतीयः । ण्वुल्तृचौ । तेषां [illegible] । णस्य कः । स यथैव को णं बाधते एवं कर्मोपपदमपि बाधेत ॥ का तर्हि गतिः ? ॥ पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते [ नोत्तरान् ] इत्येवमयं को णं बाधिष्यते कर्मोपपदं न बाधिष्यते ॥३॥ शीलिकामिभक्ष्याचरिभ्यो णः, पूर्वपदप्रकृतिस्वरं च ॥४॥ शीलिकामिभक्ष्याचरिभ्यो णो वक्तव्यः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् । शीलि–मांसशीलः, मांसशीला । शीलि ॥ कामि–मांसकामः मांसकामा । कामि ॥ भक्षि–मांसभक्षः मांसभक्षा ॥ भक्षि ॥ आचरि—कल्याणाचारः कल्याणाचारा ॥—॥ ॥ ईक्षिक्षमिभ्यां च ॥५॥ ईक्षिक्षमिभ्यां चेति वक्तव्यम् । सुखप्रतीक्षः सुखप्रतीक्षा । कल्याणक्षमः ॥ कल्याणक्षमा॥ किमर्थमिदमुच्यते?॥ पूर्वपदप्रकृतिस्वरत्वं वक्ष्यामि, इंकारश्च मा भूदिति ॥ नैतदस्ति प्रयोजनम् । इह यो मांसं भक्षयति मांसं तस्य भक्षो भवति । [तत्र] योऽसौ भक्षयतेरचन्तेन बहुव्रीहिः ॥ एवं तर्हि सिद्धे सति यत्कर्मोपपदं णं शास्ति तज्ज्ञापयत्याचार्यः 'समानेऽर्थे केवलं विग्रह

प्र ]पुनरनयोः प्रत्यययोर्विशेषः'। उच्यते। कर्मोपपदे के सति नित्यसमासो भवति। अकर्मोपपदे तु विकल्पेन षष्ठीसमासः स्यात् । नन्वर्थेन इत्यनातोऽनुपसर्गे क इति कः प्राप्नोति न त्वण्प्रत्ययः, तत्कथमुच्यते 'कर्मोपपदस्य स एवे'ति,न हि कुम्भकार कर्मोपपदस्य कस्यै विषय ।एवं तर्हि वाऽणोविप्रतिषेधेन परत्वादण् कं बाधते,भणमपि कर्मोपपदं योऽपवादत्वादिति कस्मादर्थेनदुक्तमित्यदोषः । मांसकाम इति । मांसशब्द 'स प्रत्ययान्तोऽन्तोदात्तः ।कल्याणशब्दो 'लघावन्ते द्वयोश्च बह्वषो गुरु' रिति मध्योदात्तस्तत्र कृदुत्तरपदप्रकृतिस्वरे प्राप्ते पूर्वपदप्रकृतिस्वरो विधीयते । भक्षयतेरजिति।'एरच्यन्ताना मित्येतत्तु मुनित्रयस्य मते नास्ति।कल्याणेत्ये ²

उ ]प्रकृतिस्वरत्वं दर्शयितुं पूर्वपदस्वरान्दर्शयति–मांसेति । 'एवम्मिदन्ते ल्पो द्वयोर्वाऽन्त्ययो'र्घ्यो मतोर्वद्वच बहुत्वस्य'त्यर्थं । भाष्ये–ईकारश्च माभूदिति । अतो ण कृत इति भावः । मांसं तस्य भक्ष इति । भक्षे कर्मण्यच् । 'घञपा पुंसि' इति नित्यं पुंस्त्वम् । एतेन 'इदं भावघञादिविषयमेव'त्यपास्तम् । भक्षणं भक्ष इति।भावेऽजिति भावः । कर्माऽजन्तेन समानाधिकरणबहुव्रीहिस्तु नाऽनभिधानात् । तच तवाऽप्यानस्यकमिति बोध्यम् । भाष्ये तज्ज्ञापयत्याचार्य इति । नन्वणि सति 'मांसभक्षी'ति प्रयोगः स्यादिति तद्वारणेन चरितार्थं वार्तिक

१'वडवासंदाय उभयं प्राप्नोति'।'गोसन्दाये नाप्यं'।२, इद् वचितः।३ च. सुचिन ।

दो वक्तव्य । प्रह्वाज्य इति ॥ किमुच्यते सर्वत्रेति ?॥ अन्यत्रापि नावश्यमिहैव ॥ क्वाऽन्यत्र ?॥ आह्व प्रह्व इति॥*॥के हि सम्प्रसारणप्रसङ्ग ॥*॥ के हि सति सम्प्रसारण प्रसज्येत । सम्प्रसारणे कृते सम्प्रसारणपरपूर्वत्वे चोवङादेश 'आहुव' इत्येतद्रूप प्रसज्येत॥स तर्हि वक्तव्य ?॥न वक्तव्य । अन्यत्र सम्प्रसारण, सम्प्रसारणे कृते आकार लोपस्तस्य स्थानिवद्भावादुवङादेशो न भविष्यति ॥ पूर्वत्वे कृते प्राप्नोति॥ एवन्तर्हीदमिह सम्प्रधार्यम् आकारलोप क्रियता पूर्वत्वमिति, किमत्र कर्तव्यम् ? ॥ परत्वादाकारलोप ॥ न सिध्यति । अन्तरङ्गत्वात्पूर्वत्व प्राप्नोति ॥ एव तर्हि वार्णादाङ्ग बलीयो भवतीत्याकारलोपो भविष्यति ॥ एव तर्हीदमिह सम्प्रधार्यम् आकारलोप क्रियता सम्प्रसारणमिति किमत्र कर्तव्यम् ? ॥ परत्वादाकारलोप ॥ नित्य सम्प्रसारण । कृतेऽप्याकारलोपे प्राप्नोत्यकृतेऽपि प्राप्नोति ॥ आकारलोपोऽपि नित्य । कृतेऽपि सम्प्रसारणे प्राप्नोत्यकृतेऽपि प्राप्नोति ॥ अनित्य आकारलोप , न हि कृते सम्प्रसारणे प्राप्नोति। अन्तरङ्ग[हि६]पूर्वत्व बाधते। यस्य लक्षणान्तरेण निमित्त विहन्यते न तदनित्यम् ॥ न च सम्प्रसारणमेवाकारलोपस्य निमित्त विहन्ति । अवश्य लक्षणान्तर पूर्वत्व प्रतीक्ष्यम् । उभयोर्नित्ययो परत्वादाकारलोप । आकारलोपे कृते सम्प्रसारण । सम्प्रसारणे कृते यणादेशेन सिद्ध रूपम्-आह्व प्रह्व इति ॥ एवमपि न सिध्यति । योऽनादिष्टादच पूर्वस्तस्य विधिं प्रति स्थानिवद्भाव ।

प्र ]आतोऽनुपस॥ प्रह्वाज्य इति ।अत्र नित्यानीति उत्तरस्य । 'वार्णादाङ्गबलीय' इत्युक्ते यो ब्रूयात्'समानाश्रयाङ्गवार्णविषयमेत'दिति,त प्रत्याह–एव तर्हीति ।नित्यमिति ।सम्प्रसारणे कृते पूर्वत्वेन भाव्यमित्याकारलोपस्याऽनित्यत्व मन्यते ।अन्तरङ्गमिति। 'वार्णादाङ्ग बलीय' इत्येतत्तु समानाश्रयविषयमेवन्युक्तम् । एवमपि न सिध्यतीति । 'आद्व इत्यादिरूप'मिति शेष । योऽनादिष्टादिति । उकारस्थानादिय

उ ]मित्यनेन सूचितम् ॥ [ कर्मण्यण् ] ॥

आतोऽनुपसर्गे॥ प्रसारणिन –सम्प्रसारणभाज । प्रह्वाज्य इति। के हि सम्प्रसारणे इयङ् स्यादिति भाव । भाष्ये–किमुच्यते सर्वत्रेति । सर्वग्रहणस्य 'क' मात्र इत्यर्थ । तमाह–अन्यत्राऽपीति । 'आतश्चोपसर्ग' इत्यत्राऽपीत्यर्थ । एवन्तर्हि वार्णादिति । 'इयाये'त्यादिसिद्धयेऽस्या विभिन्ननिमित्तकत्वेऽपि प्रवृत्तिरावश्यकीति भाव । समानाश्रयेति । 'तदनाश्रयणेऽप्याह'ेति वक्तुमुचितम् । एष च एवन्तर्हीति क्रियत'इत्यर्थकमिति भाव । भाष्ये–अन्तरङ्ग पूर्वत्वमिति । यद्यपि वार्णपरिभाषयाऽपि आलोपस्य नित्यत्व वक्तु शक्यन्तथापि तदनाश्रयणेनाऽस्य

१ इति क्वचित्। २ 'नस्य पूर्व'। ३ 'स्यात्'। ४ क्वचित्। ५ 'यमिन्दु'। ६ नेनाऽस्य ।

तुन्दशोकयोः परिमृजापनुदोः ॥ ३।२।५ ॥

॥ १॥ तुन्दशोकयो परिमृजापनुदोरालस्यसुखाहरणयो ॥ *॥ तुन्दशोकयोः परिमृजापनुदोरित्यत्रालस्यसुखाहरणयोरिति वक्तव्यम् । तुन्दपरिमृजोऽलस । शोकापनुद पुत्रो जात । यो हि तुन्द परिमार्ष्टि तुन्दपरिमार्ज भवति । यश्च शोकमपनुदति शोकापनोद स भवति ॥ *॥ कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानम् ॥ *॥ कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानं कर्तव्यम् । मूलविभुजो रथ । नखमुचानि धनूंषि । काकगुहास्तिला । सरसीरुहं कुमुदम् ॥

गापोष्टक ॥ ३।२।८ ॥

॥ १॥सुरासीध्वो पिबते ॥ *॥सुरासीध्वो पिबतेरिति वक्तव्यम् । इह मा भूत् । क्षीरपा ब्राह्मणीति॥ पिबतेरिति किमर्थम्?॥या हि सुरा पाति सुरापा सा भवति॥ ॥बहुल तणि॥ *॥बहुल तणीति वक्तव्यम् ॥ किमिद 'तणीति'॥ ॥*॥[तणीति] संज्ञाछन्दसोर्ग्रहणम्॥ *॥ या ब्राह्मणी सुरापी भवति नैना देवाः पतिलोकं नयन्ति।या ब्राह्मणी सुरापा भवति नैनां देवा. पतिलोकं नयन्ति॥

प्र ]न्यायेन बाधेन । सामर्थ्यात्पच भावे व्यवनिपाने इति भावेन न बाध्यते कर्ता॥

तुन्द । आलस्यसुखाहरणयोरिति । आलस्ये गम्यमाने सुखोत्पादने च प्रत्ययो भवतीत्यर्थ ।तत्र सामर्थ्यादलसे कर्तरि सुखस्य चाऽऽहर्तरि प्रत्ययो भवतीत्युक्त भवति । शोकापनोद इति ।य मधुपानित्यनोद्भावनादिना शोकमेव निवर्तयति न तु सुखमुत्पादयति स शोकापनोदः । [ तुन्दशोकयो ] ॥

गापोष्टक् । पिबतेरिति । लुग्विकरणपरिभाषाल्यार्थं रचनम्।[गापोष्टक् ]॥

च.] तुन्दशोकयो । तत्र सामर्थ्यादिति । एवं सति ते गम्ये भवत इत्यर्थ । तुन्दपरिमृजे मृजेरचि 'क्ङिति चे'ति पक्षे वृद्धि प्राप्नोति, सा भवत्येव सन्निधाने । यत्तु 'अची'त्येव वक्तव्ये अजादावित्युक्तेरादिग्रहणसामर्थ्यान्मुख्याजादावेव प्रवृत्तिरिति, तन्न , तत्र तदभावात्, 'यस्मिन्विधि'रिति परिभाषाप्राप्त्याऽऽदिग्रहणस्य तत्राऽनुवादाय । अनन्यभाव्यस्वरसात्तत्र 'क्ङि'त्यदेनानिर्दिष्टक्ङितोरेव ग्रहणम् । व्याकरणान्तरे–'सङ्क्रम'पदेन तयोरेव ग्रहणाच्चेति परे । 'मूलविभुजादिभ्य' इति तु तादर्थ्ये चतुर्थी । काकगुहा इति । काकेभ्यो गूहितव्या इत्यर्थ । 'घार्थे कविधान'मित्यनेनाऽप्यपि निष्पन्नमेतत् । सरसि सरस्या वा रोहति । चौ मोदत इत्यर्थ । [ तुन्दशोकयो ] ॥

गापोष्टक् । बहुलं तणीति । पक्षे 'आतोऽनुपसर्गे' इति क । या ब्राह्मणी सुरापेति । सुरा पिबतीत्यर्थे एवाऽयं प्रयोग इति बाहुल्याश्रयणम् ॥

१ 'सीध्वो' । २ इदं क्वचित्र । ३ इद हुत । ४ भाष्यामिदमित्यन्धे ।

दिपूपसङ्ख्यानं कर्तव्यम् । पार्श्वशयः पृष्ठशयः उदरशयः ॥*॥ दिग्धसहपूर्वाच्च ॥२॥ दिग्धसहपूर्वाच्चेति वक्तव्यम् । दिग्धसहशयः ॥*॥ उत्तानादिषु कर्तृषु ॥२॥ उत्तनादिषु कर्तृष्विति वक्तव्यम् । उत्तानशयः । अवमूर्द्धशयः ॥ ॥*॥गिरौ डश्छन्दसि॥ ॥गिरावुपपदे छन्दसि डो वक्तव्यः।गिरौ शेते गिरिशः। ॥३॥ तद्धितो वा [ यथा स्वैलाद्यधा गिरिश ] ॥*॥ तद्धितो वा पुनरेष भविष्यति । गिरौ [गिरौ शेते, गिरिरस्यास्तीति] गिरिश ॥ इति ॥

चरेष्टः ॥ ३।२।१६ ॥

इह कस्मान्न भवति,–कुरूञ्चरति पञ्चालाञ्चरतीति ? ॥ अधिकरण इति वर्तते ॥ ननु च कर्मण्यपि वर्तते,तत्र कुत एतदधिकरणे भविष्यति न पुनः कर्मणीति ? ॥ ॥ चरेर्भिक्षाग्रहणं ज्ञापकं कर्मण्यप्रसङ्गस्य ॥*॥ [ चरेर्भिक्षाग्रहणं ज्ञापकं कर्मण्यप्रसङ्गस्य]।यदयं 'भिक्षासेनादायेषु चे'ति चरेर्भिक्षाग्रहणं करोति तज्ज्ञापयत्याचार्यो–'न भवति कर्मणी'ति ॥ [ चरेष्टः ] ॥

प्र ] अधिकर । दिग्धसहपूर्वाच्चेति । 'दिग्धसह'शब्दस्य समुदायस्य पूर्वत्वमाश्रीयते न तु प्रत्येकम् । तत्र दिग्धेन सह शेत इत्यपि कृते मयूरव्यंसकादित्वात् समासः । तद्धितो वेति । यो गिरौ शेते गिरिरस्यास्तीति लोमादिषु दर्शनाच्छप्रत्ययः ।अन्ये त्वाहु –गिरौ गिरौ शेत इति 'सप्तम्येकवचना'दिति सप्तम्यन्ताच्छप्रत्ययः । व्युत्पत्तिर्हि यथाकथञ्चित्कर्तव्या, उपादानानियमात् । तदुक्तं हरिणा-'वैरयामिष्टगिरिशास्तथाऽगारिकादयः । कैश्चित् कथं चिद्व्याख्याता निमित्तावधिसङ्करे' ॥ इति । 'छन्दसी'ति वचनाद्भाषाया गिरिशशब्दस्यासाधुत्वमाहुः ॥

चरेष्ट । कुरूंश्चरतीति । यस्य कुरव एव प्राप्याः कुरूंश्चरतीत्युच्यते । यश्च कुरुषु भ्रमति स कुरुषु चरतीत्युच्यते । [ चरेष्टः ]

उ ]नार्थन्तु तदावस्थरमिति 'स्थ क चे'ति सूत्रे भाष्ये स्पष्टम्॥[शमि धातो ]॥

अधिकरणे । मयूरव्यंसकेति । दिग्धसहपूर्वता प्रत्येकमेव बोध्या, पृथग् 'दिग्धसह'शब्दस्य सिद्ध्यभावात् । 'गिरौ शेते' इत्यर्थे तद्धितस्याऽविधानादाह–यो गिराविति । अन्ये त्वाहुरिति।अत्राऽरुचिस्तदन्तशब्दाऽसिद्धिः, शब्दयन्त्रापत्तिः, तत्र स्वार्थिकत्वेन 'गिरौ गिरौ शेते' इति विग्रहाऽसङ्गतिश्चाऽवेति।वीरस्येद वीरायत्त वा वीरायागारं तत्र भवमिति।वमिष्टस्येदं तेन कृतं प्रोक्तं वा। गिरौ शेते गिरिरस्तीति वा गिरिश । निमित्तम्-अर्थः, अवधिः–प्रत्ययात्प्रकृतिः, तत्सङ्करेऽरित्यर्थः ॥

चरेष्ट । कुरूञ्चरतीति । तान् गच्छतीत्यर्थः । यद्यर्थभेदो न स्यात्तर्हि द्वितीयान्तात्प्रत्ययाऽनुपपत्तिप्रतिपादनं व्यर्थं स्यादत आह—यश्चेति । भिक्षाचरे[ति]

१ इदं क्वचित् । २ 'उदरशय' । ३ इदं युक्तं स्यात् । ४ 'गिरौ शेते' ।

नासिकास्तनयोर्ध्माधेटो ॥ ३।२।२९ ॥

॥ ॥स्तन धट ॥ ॥ स्तने धेट इति वक्तव्यम् स्तनन्धय । [॥१॥नासिकाया ध्मश्च[धेटश्च]॥ ॥ नासिकायां ध्मश्च धेटश्चेति वक्तव्यम्।नासिकन्धम । नासिकन्धय ] । ततो । ॥मुष्टौ ध्मः॥ ॥ मुष्टौ ध्मश्च धेटश्चेति वक्तव्यम् । मुष्टिन्धम मुष्टिन्धय ॥ अपरमिदमुच्यते ॥*॥ नासिकानाडीमुष्टिघटीखारीष्विति वक्तव्यम्॥१॥ नासिकन्धम नासिकन्धय । नासिका ॥ नाडी नाडिन्धम नाडिन्धय । नाडी ॥ मुष्टि–मुष्टिन्धम मुष्टिन्धय । मुष्टि॥घटी घटिन्धम घटिन्धय । घटी ॥ खारी–खारिन्धम खारिन्धय ॥

प्रियवशे वदः खच् ॥ ३।२।३८ ॥

॥ ॥ गमःखच्प्रकरणे गमेः सुप्युपसंख्यानम् ॥*॥ खच्प्रकरणे गमेः सुप्युपसंख्यानं कर्तव्यम् । मितङ्गमो हस्ती, मितङ्गमा हस्तिनी । ॥*॥ विहायसो विह च॥ ॥विहायसो विह इत्ययमादेशो भवतीति वक्तव्यम् ,खच।विहङ्गम । ॥ ॥ खच डिद्वा ॥ ॥ खच डिद्वा वक्तव्य । विहङ्ग । ॥ ॥ डे च ॥*॥ डे च विहायसो 'विह' इत्ययमादेशो वक्तव्य । विहग । [ प्रियवशे वद ]।

अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु ड• ॥ ३।२।४८ ॥

॥*॥ डप्रकरणे सर्वत्रपन्नयोरुपसंख्यानम् ॥ ॥ डप्रकरणे सर्वत्रपन्नयोरुपसंख्यानं कर्तव्यम् । सर्वत्रग ,पन्नग ॥ ॥ उरसो लोपश्च॥ ॥ उरसो लोपश्च वक्तव्य । उरग ॥ ॥ सुदुरोरधिकरणे ॥*॥ सुदुरोरधिकरणे डो वक्तव्य । सुगे दुर्गे ॥*॥ निरो देशे ॥ ॥ निसो देशे डो वक्तव्य । निर्गो देशे ।

प्र ] नासिका । स्तने धेट इति। यथासङ्ख्याऽभावार्थ एतावान्योग कर्तव्य इत्यर्थ । वार्तिकस्याप्यन्याप्तिमुद्भावयन् भाष्यकार आह–अपरपमिति।डे चेति।विहाय शब्द पूर्वक्रमेरन्यत्रापि दृश्यत इति डप्रत्यये सति विहादेश । [नासिकास्तनयो ] ॥

उ ] नासिका । एतावान्योग इति। एतदन्यासस्थक वार्तिकमित्यर्थ । खार्ति कप्याऽपीति । अपिना 'नाडीमुष्टयोश्चे'ति सूत्रस्याऽपि । 'मुष्टौ ध्मधे'ति वार्तिक 'नाडीमुष्टयोश्चे'ति पठितसूत्रस्य व्यवस्थापकमेव । नैतावता तत्सूत्रमप्रामाणिकमिति भ्रम कार्य , 'यथासङ्ख्य सूत्रमभावे स्पष्टत्वात्' सूत्रोपादानात् । यद्यपि नाडीमुष्टिविषये तत्सूत्रं यथासङ्ख्यमुक्तत्वाप्येनद्भाष्यवार्तिकविरोधात्प्राप्यं प्रीतिविरहनि बोध्यम् । एवञ्चाऽत्र 'नाडी'शब्देन 'ध्म' एव सबन्धो, 'मुष्टि' शब्दे नोभयोरिति बोध्यम् । पूर्ववार्तिकदूषणेन नाडीशब्दसम्बन्धोऽप्युभयोरित्याह–नासिकानाडी यादि । अत्र ध्मश्च धटश्चे ति वर्तते ॥ [ नासिका ] ।

१ क्वचिन्न । २'खरी'। ३पूर्वापरवैपरीत्य क्वचित् । ४'चादेशो ।५'मुर्गे' 'दुर्गम' ।

प्रतिषेधोऽनर्थकः ॥ किं कारणम् ?॥ 'ख्युट्ख्युनोरविशेषात्' । ख्युना मुक्ते ख्युटा भवितव्यं । न चैषोऽस्ति विशेषःख्यन्त उपपदे वा ख्युनो वा ख्युटो वा । तदेव रूपं स एव च स्वरः॥ अयमस्ति विशेषः—ख्युटि सतीकारेण भवितव्यं, ख्युनि सति न भवितव्यम्॥ख्युन्यपि सति—[ईकारेण] भवितव्यम् । एवं हि सौनागाः पठन्ति—॥*॥ 'नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्' ॥*॥ इति ॥ अयं तर्हि विशेषः,—ख्युनि सति नित्यसमासेन भवितव्यम्, उपपदसमासो हि नित्यसमास इति । ख्युटि सति न भवितव्यम्॥ख्युट्यपि [सति] भवितव्यम् । गतिसमासोऽपि हि नित्यसमासः,च्व्यन्तं च गतिसंज्ञं भवति ॥ [॥*॥ सुबर्थं तु ॥*] ॥ सुबर्थं तर्हि प्रतिषेधो वक्तव्यः । ख्युनि सति सुपा भवितव्यं ख्युटि सति न भवितव्यम् ॥*॥ सुबर्थमिति चेन्नाव्ययत्वात् ॥*॥ सुबर्थमिति चेत्तन्न ॥ किं कारणम् ? ॥ 'अव्ययत्वात्' । अनव्ययस्य सुबुत्पद्यते, च्व्यन्तं चाव्ययसंज्ञं [भवति]॥*॥ उत्तरार्थं तु॥*॥ उत्तरार्थं तर्हि प्रतिषेधो वक्तव्यः । 'कर्तरि भुवः खिष्णुच्खुकञौ' । 'अच्वौ' इत्येव । आढ्यंभविता ॥ अथेदानीमनेन मुक्ते ताच्छीलिक इष्णुज्विधीयते सोऽत्र कस्मान्न भवति?॥ रूढिशब्दप्रकारास्ताच्छीलिकाः । न च रूढिशब्दा गतिभिर्विशेष्यन्ते।

प्र ] अच्वौ । उत्तरार्थमिति । उत्तरत्र च्विप्रतिषेधस्य चरितार्थत्वादच्विग्रहणमिति ख्युटा भाव्यम् । तत्र यदन्यैरुक्तम्—'प्रतिषेधसामर्थ्यात्ख्युन्यसति ख्युडपि न भवतीति ख्युटोऽप्यसमर्थेन प्रतिषेधः' इति । तदयुक्तम् । रूढिशब्दप्रकारा इति । यथा रूढिशब्देषु क्रिया केवलं व्युत्पत्त्यर्थमाश्रीयते गच्छतीति गौरिति । तेन गमनक्रियारहितोऽपि गौर्भवति । गोपिण्डाच्चान्योऽर्थो गमनविशिष्टोऽपि गौर्न भवति । तथा ताच्छीलिका अपि क्रियाविषयं ताच्छील्यमुपादाय क्रियानिवृत्तावपि प्रयुज्यन्ते, के चिदेव तु गतिना सम्बध्यन्ते,—आगामुकः प्रभङ्गुर इति । न तु सर्वे । यथा घातुक इति । न भवति 'प्रघातुक' इति । अत एव प्रकारग्रहणं सादृश्यार्थम् । रूढिशब्दानां न केषाञ्चिद्गतिसम्बन्धो भवति ताच्छीलिकानां तु भवति केषाञ्चित्त सर्वेषामिति प्रतिपादयति । द्रव्योपलक्षणाय क्रियायाः प्रवृत्तत्वात्तदतिशयं प्रति आत्मलाभाभावात्तदतिशययोगनार्थं गतिसम्बन्धाभावस्ताच्छीलिकेष्वित्यर्थः ।

उ.] भाष्ये—ख्युना मुक्त इति। भाष्ये स एव स्वर इति स्वरानित्स्वराभ्याम् । ख्युटा भाव्यमिति। अवश्यंभाव्यमित्यर्थः ।तदयुक्तमिति । भाष्यविरोधादित्यर्थः । उत्तरार्थत्वं वदता इहार्थत्वाभावस्य भाष्यकृता बोधितत्वादिति भावः । केचिदेवेति । स्पष्टं प्रतीयमानक्रियादेशा इति भावः । द्रव्योपलक्षणायेति । अवस्थाविशेषविशिष्ट-

१ इदं प्राचीनम् । २ 'ख्युट ख्युनो वा' । ३ इदं वार्तिकमित्यन्ये ।

न हि भवति देवदत्त प्रदेवदत्त इति । [ आढ्यसुभगस्थूल ] ॥

कर्तरि भुवः खिष्णुच्खुकञौ ॥ ३।२।५७ ॥

किमर्थं खिष्णुजिकारादि क्रियते न च स्नुरित्येवोच्येत । तत्रायमप्यर्थः स्वरार्थश्चकारो न कर्तव्यो भवति ॥ केनेदानीमिकारादित्वं क्रियते ? ॥

॥*॥ इष्णुच इकारादित्वमुदात्तार्थं कृतं भुवः ॥*॥ भवतिरुदात्तस्तस्योदात्तत्वादिड् भविष्यति ॥ इदं तर्हि प्रयोजनम्—खिदयं क्रियते, तत्र चैवं कृते सन्देहः स्यात् क्रिद्वा खिद्वेति ॥ सन्देहमात्रमेतद्भवति ॥ सर्वसन्देहेषु चेदमुपतिष्ठते 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षण'मिति । खिदिति व्याख्यास्यामः ।

॥*॥ नन्वस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्णुचः ॥*॥ इदं तर्हि प्रयोजनं 'कृत्योकेष्णुच्चार्वादयश्च' इत्येष स्वरो यथा स्यात् ॥ एतदपि नास्ति प्रयोजनम्, अय

प्र ] प्रदेवदत्त इति। प्रशब्देन देवनक्रिया न विशेष्यते, देवशब्दस्य रूढिशब्दत्वात्, तदवयवस्य च देवदत्तशब्दस्येत्यर्थः । व्याघ्रादयस्तु सोपसर्गा एव रूढिशब्दा इति तद्व्यतिरिक्तगत्यन्तरयोगस्तेषां नास्ति ॥ [ आढ्यसुभग ] ।

कर्तरि । नञ इति पञ्चमी । नञ उत्तरस्य स्वरसिद्ध्यर्थमित्यर्थः । अयमपीति । खस्नुप्रत्ययः क्रियते, चकारः सामान्यग्रहणार्थ इति मन्यते । खिष्णुचि तु कृते इकारोच्चारणसामर्थ्यात्तदनुबन्धकपरिभाषा नाश्रीयते । [कर्तरि भुव ] ॥

उ ] स्योपलक्षणायेत्यर्थः । न तु क्रियाप्रकारको बोध इति तात्पर्यम् । वस्तुतस्त्वभिधानस्वाभाव्यात्केषाञ्चिदेव कृत्प्रयोगाणां गतिसम्बन्धो न सर्वेषामिति भाष्यतात्पर्यम्।

भाष्ये—इष्णुजिति । 'भुवश्चे'त्यनेन । 'प्रदेवदत्त' इत्यत्र 'प्र'शब्दस्य देवनक्रियाया दानक्रियाया वाऽन्वयः । नाद्य इत्याह—देवशब्दस्येति । नान्त्य इत्याह—तदवयवस्य चेति । 'तदवयवस्ये'ति बहुव्रीहिः । व्याघ्रादौ तर्हि संज्ञाशब्दे कथं गतिसम्बन्धोऽत आह—व्याघ्रादयस्त्विति । [ आढ्यसुभग ] ॥

कर्तरि भुव । भाष्ये—'न च स्नु'रिति पाठः । उदात्तत्वादिति । तेन 'एकाच उपदेश' इत्यस्याऽप्रवृत्तिरिति भावः । ननु 'कृत्योकेष्णु'जिति सूत्रेण नञः स्वराऽभावादाह—नञ उत्तरस्येति । अन्तोदात्तनिपातनमिदम्पूर्वपदप्रकृतिस्वरापवादः । ननु 'तदनुबन्धक'परिभाषया इष्णुच एव ग्रहणं भविष्यति न खिष्णुच इत्यत आह—इकारोच्चारणेति । चकारोच्चारणेनैव द्वयोर्ग्रहणे लक्षणप्रतिपदोक्तपरिभाषातदनुबन्धकपरिभाषाबाधे च खिष्णुचः करणेन फलाभावयोरसिद्धत्वाऽभावे च सिद्धे इकारोच्चारणं व्यर्थमिति 'अयमपीति कृते' इति भाष्यतात्पर्यम्। न सिध्यतीत्यादि त्वेकदेश्युक्तिरिति बोध्यम् ॥ [ कर्तरि भुव ]।

१'वस्तु''न स्नु'।२श्लोकवार्त्तिकम्।३'भवतेरुदात्तत्वादिकारादित्वं भविष्यति'।

मपीटि कृते पञ्चे णेत्वे चेण्णुजेव भविष्यति ॥ न सिध्यति–'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति । अथ वाऽसिद्धं खल्वपि पच, तस्यासिद्धत्वादिण्णुजेर भविष्यति ।

॥*॥ इष्णुच ईश्वरादित्वमुदात्तत्वान्कृत भुव ।
नत्वस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्णुचः ॥*॥ [ कर्तरि भुव ] ॥

स्पृशोऽनुदके क्विन् ॥ ३।२।५८ ॥

किमर्थो नकार ? ॥~॥[नकार ] स्वरार्थ ॥*॥'ञ्नित्या'दिराद्युदात्तत्वं यथा स्यात् । नैतदस्ति प्रयोजनम् । एकाचोऽयं विधीयते । तत्र नाऽर्थ स्वरार्थेन नकारेणाऽनुबन्धेन । धातुस्वरेणैव सिद्धम् ॥ यस्तर्ह्यनेकाज्दधृगिति ? ॥ वक्ष्यत्येतत्,–'धृषेर्द्विर्वचनमन्तोदात्तत्वं च निपात्यत' इति॥विशेषणार्थस्तर्हि॥ [ विशेषणार्थस्तर्हि भविष्यति ] ॥ क्व विशेषणार्थेनार्थ ? ॥ 'क्विन्प्रत्ययस्य कु'रिति। 'क्विप्रत्ययस्य कु'रित्युच्यमाने सन्देहः स्यात् क्विपः प्रत्यय क्विनो वेति॥ सन्देहमात्रमेतद्भवति । सर्वसन्देहेषु चेदमुपतिष्ठते'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षण'मिति क्विन्प्रत्ययस्येति व्याख्यास्यामः॥[स्पृशोऽनुदके]॥

ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ॥ ३।२।५९ ॥

दधृगिति किं निपात्यते ? ॥ * ॥ धृषेर्द्विर्वचनमन्तोदात्तत्वं च ॥ * ॥ धृषेर्द्विर्वचनमन्तोदात्तत्वं च निपात्यते ॥ [ ऋत्विग्दधृक् ] ॥

त्यदादिषु दृशोऽनालोचने कञ्च ॥ ३।२।६० ॥

किमर्थो नकार. ? ॥ ॥~॥ [ नकार ] स्वरार्थ. ॥*॥ ञ्नितीत्याद्यु-

प्र.] स्पृशोनु । सन्देह स्यादिति । क्विमेकपकारको निर्देश उत द्विपकारक इत्यर्थः । व्याख्यानत इति । तदनुबन्धकपरिभाषया च क्विपो ग्रहणाऽभाव ॥

त्यदादिषु । नकारस्य सार्थक्यं प्रति युक्तत्वं प्रश्नद्वारेण प्रदर्श्यते–किमर्थं इति।

उ ] स्पृशोऽनु । एकाचोऽयमिति भाष्ये । यल्लुगन्तात्त्वयं न क्विन्, अनभिधानादिति भाव । ननु 'क्वि'ग्रहणे क्विपोऽपि ग्रहण स्यादत आह–तदनुबन्धे ते । अत्र सूत्रे 'कर्मणी'ति सम्बध्यत एव । 'मन्त्रस्पृ'गित्यादि तु क्विपा सिद्धम्। 'क्विन्प्रत्ययस्ये'ति बहुव्रीह्याश्रयणात्तुल्यमपि सिद्धम् ॥ [ स्पृशोऽनु ] ।

ऋत्विग्द । अन्तोदात्तत्वञ्चेति । इदञ्च क्विनो नकारसत्त्वे उचम् । सगुण्गिहोर्निपात्यमानत्वस्तुन स्पष्टत्वात्तन्नोक्तम् । 'कुञ्चा'मिति निपातनान्नलोपाऽभाव

१इदं क्वचिन्न।२'दिष्णुजेव'।३'पञ्चस्या'।४'भवति'।५ 'उदात्तत्वाद्भुव सिद्धमिकारादित्वमिष्णुच'। ६ 'त्वमिष्यते' । ७ इदं भाष्यमित्यन्ये । ८ क्विनेति' ।

॥*॥ सदादिषु सुब्ग्रहणम् ॥*॥ सदादिषु सुब्ग्रहणं कर्तव्यम् । होता वेदिषत् । अतिथिर्दुरोणसत् ॥ न तर्हीदानीमुपसर्गेऽपीति वक्तव्यम् ? ॥ वक्तव्यं च ॥ किं प्रयोजनम् ? ॥ 'ज्ञापकार्थम्' ॥ किं ज्ञाप्यम् ? ॥ एतज्ज्ञापयत्याचार्योऽन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवतीति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? ॥ यदः सुप्यनुपसर्गग्रहणं चोदितं तन्न वक्तव्यं भवति ॥

अदोऽनन्ने ॥ ३।२।६८ ॥ क्रव्ये च ॥ ३।२।६९ ॥

किमर्थमिदमुच्यते नाऽदोऽनन्न इत्येव सिद्धम्? ॥ न सिध्यति । छन्दसी ह्येतदनुवर्तते । भाषायोऽयमारम्भः । पूर्वस्मिन्नेव योगे छन्दोग्रहणं निवृत्तं, तत्रावश्यं निवर्त्यम्,—आमात्, सस्यादित्येवमर्थम् ॥ अत उत्तरं पठति ॥२॥ अदोऽनन्ने क्रव्येग्रहणं वासरूपनिवृत्त्यर्थम् ॥२॥ अदोऽनन्ने क्रव्येग्रहणं क्रियते ॥ [किं प्रयोजनम् ? ॥ 'वासरूपनिवृत्त्यर्थम्' ॥] वासरूपो मा भूदिति । [ अदोऽनन्ने ]।

प्र ] सत्सूद्विष । सदादीनां येषां क्विप्सकर्मकत्वात्कर्मैवोपपदं प्राप्नोतीति मत्वाह—सदादिष्विति । वेदिषदिति । वेद्यां सीदतीति क्विप् । पूर्वपदादिति षत्वं । दुरोणे सीदतीति दुरोणसत् । दुरोणं गृहम् । तन्न वक्तव्यमिति । अनुपसर्गग्रहणानुवृत्तिमन्तरेणैवोपसर्गनिवृत्ते सिद्धत्वादनुवृत्तिप्रदर्शनमपि न युज्यते । यत्र चानुपसर्गग्रहणानुवृत्तिर्न सम्भाव्यते,—स्पृशोऽनुदके क्विन्नित्येतदपि ज्ञापनस्य प्रयोजनम् । तेनोपस्पृशतीत्यादौ क्विन्न भवतीति । [सत्सूद्विष] ॥

क्रव्ये च । वासरूपो मा भूदिति । तेन 'क्रव्याद' इत्यत्र भवतीत्यर्थः ।

उ.] सत्सू । कर्मैवोपपदमिति । 'कर्मणी'त्यधिकारादिति भावः । सुब्ग्रहणन्तु तन्निवृत्तिद्योतनायेति बोध्यम् । वस्तुत सुब्ग्रहणमेवाऽत्राऽनुवर्तते, 'कर्मणी'ति निवृत्तमित्यन्वाख्यानमेवैतत् ।अत्र सूत्रे 'उपसर्गेऽपि' ग्रहणम् 'अनुपसर्गे' इत्यस्य 'आतो नुपसर्गे' इति सूत्रादनुवर्तमानस्याऽस्मै निवृत्तिद्योतनाय । भाष्यकार एतज्ज्ञापकेनैव सुब्ग्रहणस्योपसर्गेतरसुप्परत्वं व्याख्याय 'अनुपसर्गे' इत्यस्याऽनधिकारं द्योतयति । तत्फलं ज्ञापकसिद्धस्याऽसार्वत्रिकत्वेन 'प्रष्ठ' इत्यादिसिद्धिः । ननु 'यदः सुपी'त्यत्र 'गदमदे'त्यतोऽनुपसर्गग्रहणाऽनुवृत्तिप्रदर्शनपरं वार्तिकं नाऽपूर्ववचनपरमत आह—अनुपसर्गेति । यत्र चेति । यत्र 'स्पृशोऽनुदके' इत्यादावनुपसर्गग्रहणानुवृत्तिर्न सम्भाव्यते एतदपि ज्ञापनस्य प्रयोजनमित्यन्वयः । इदमचिन्त्यम् । तत्रापि 'ज्वलितोऽनुपसर्गे' इत्यतोऽनुवृत्तिसम्भवात् ॥ [ सत्सूद्विषद्रुह ] ॥

अदोऽनन्ने । भाष्ये—आमादित्येवमर्थमिति । लोके एतत्सिद्ध्यर्थमित्यर्थः । क्रव्याद इत्यण्णेते । आममांसभक्षणस्तेत्यर्थे इति भावः । पञ्चनाग-

१ 'सीदति वर्तते' । २ इदं क्वचित् । ३ 'क्रव्यग्रह' । ४ 'तृषि' 'तुलि' ।

[भवंति] ॥ अवश्य तद्वक्तव्य दीर्घार्थम् ॥ नैतदस्ति प्रयोजनम् । सिद्धमत्र दीर्घत्वम् 'अत्वसन्तस्य चाधातो'रिति ॥ यत्र तेन न सिध्यति तदर्थम् ॥ क्व च तेन न सिध्यति ? ॥ सम्बुद्धौ हे श्वेतना इति॥ न तर्हीदानीं डस्वक्तव्य ? ॥ वक्तव्यश्च ॥ किं प्रयोजनम् ? ॥ २ ॥ उत्वार्थम् ॥ ॥ श्वेतवोभ्या श्वेतवोभि ॥

स्थः क च ॥ ३।२।७७ ॥

किमर्थं स्थ कक्विपावुच्येते न क्विप्सिद्धोऽन्येभ्योपि दृश्यत इति, कश्च आतोऽनुपसर्गे क इति ? ॥ न सिध्यति । विशेषविहित. क सामान्य विहित क्विप बाधते ॥ वासरूपेण क्विपपि भविष्यति ॥ इद तर्हि–शस्थ शस्था ॥ उक्तमेतत् 'शमि सज्ञाया धातुग्रहण कृञो हेत्वादिषु टप्रतिषेधार्थ'-मिति । स यथैवाऽष्ट बाधते एव कक्विपावपि बाधेत ॥ [ स्थ क च ]॥

सुप्यजातौ णिनिस्ताच्छील्ये ॥ ३।२।७८ ॥

सुपीति वर्तमाने पुन सुब्ग्रहण किमर्थम् ? ॥ अनुपसर्गे इत्येव तद् भूत्,इद सुप्याग्रे यथा स्यात्,–प्रत्यामारिण्य उद्धासारिण्य इति॥ ॥णिन्विधौ

---

प्र ] स्थ क च । शस्था इति । 'ईन्वमनस्मारादा'विति वचनाज्ज्ञाप्यरारवचन प्रामाण्याद्वा प्रत्ययलक्षणेनेत्वाऽभाव । [ स्थ क च ]।

---

उ ] इत्यस्याऽपि सिद्धेर्द्वयमपि न कार्यमित्यन्ये । [ मन्त्रे श्वेतवहोक्थ ] ।

स्थ क च।सप्तमीनिर्देशादेव तदादिविधौ लब्धे पुनर्वकारादशिति वचन सुप्य वरादिप्रतिपत्त्यर्थमिति वदन्तम्प्रत्याह–भाष्यकारवचनेति । यद्वा यानान इति प्रयोगस्य वनिपा सिद्धिमाश्रित्य तत्प्रत्याख्यानादाह–भाष्येति । अत एव 'ध्यायते सम्प्रसारण'मिति वार्तिके 'दधातेर्वा धी'रिति भाष्ये क्विप्यपीत्व इष्टम् । वस्तुत भाष्ये क्विप्पदेन सादृश्याद्विजुच्यते इत्नीलाऽप्रवृत्तिरेवाऽत्रेति बोध्यम् । भाष्ये–कक्विपाविति । 'आतोऽनुपसर्गे'इति 'क्विप्चे'ति विहितौ। ननु कस्य बाधे 'शस्थ' इति न सिध्येत्तदर्थं स्थ को विधेय । कस्य चाऽज्वाचकत्वेन क्विपपवादत्वाऽभावात्परत्वेन क्विपो नित्यबाधवारणाय क्विपपि विधेय इति भाव । न चाऽत्र 'शस्था' इत्यस्य सिद्धयेन क्विपो बाधे फलाऽभाव । शस्थाशब्दाच्छसि आतो लोपानापत्ते । 'कृदति'दिति सूत्रस्थभाष्योक्तरीत्यैकादेशस्य स्थानिवत्त्वात् । 'पुरस्ता'दिति न्यायेन टस्यैव तेन बाध इति तु न शक्य, 'येन नाऽप्राप्ति'न्यायेन क्विप एव बाध इत्यस्याऽपि वक्तु शक्यत्वात् । तस्माद्बाध्यसामान्यचिन्तयोभयोरपि स बाधक स्यादिति तात्पर्यम्॥ [ स्थ क च ] ॥

---

१ इद क्वचिन्न । २ अत्र 'श्वेतवादीनां डस्, उत्वार्थम्' इति वार्तिकदर्शनमिति तु गौडा । ३ 'बाधेन' ।

प्रसज्येत । अश्राद्धभोजीत्येव चेष्यते ॥ एवं तर्हि नञ एवाऽयं भुजिप्रतिषेध-वाचिना श्राद्धशब्देनाऽसमर्थसमासो,—न भोजी श्राद्धस्येति॥ स तर्ह्यसमर्थ-समासो वक्तव्य ? ॥ यद्यपि वक्तव्योऽथ वैतर्हि बहूनि प्रयोजनानि ॥ कानि?॥ ॥*॥ [प्रयोजनानि] असूर्यंपश्यानि मुखान्यपुनर्गेया श्लोका अश्राद्धभोजी ब्राह्मण मुञ्जपुनरस्ये'ति ॥*॥ । [ प्रते ] ।

आत्ममाने खश्च ॥ ३।२।८३ ॥

आत्मग्रहणं किमर्थम् ? ॥ परमाने मा भूदिति । क्रियमाणेऽपि वै आत्मग्रहणे परमाने प्राप्नोति ॥ किं कारणम् ? ॥ 'आत्मन' इतीयं कर्तरि षष्ठी, 'मान' इत्यकारो भावे । स यथैवात्मानं मन्यतेऽथापि परमात्मन एवाऽसौ मानो भवति ॥ नैष दोष । आत्मन इति कर्मणि षष्ठीय॥कथम् ?॥ 'कर्तृकर्मणो कृती'ति ॥ ननु च कर्मण्यपि वा एतेनैव विधीयते तत्र कुत एतत्—कर्मणि भविष्यति न पुन कर्तरीति ? ॥ एवं तर्हि—॥*॥ कर्मकर्तरि

प्र ]भाष्यमिनि नास्ति स्वरभेद ।अत्राहु —यदा णिनीयत्न सज्ञायामित्यनुवर्तते तदा-ऽसज्ञायामस्ति स्वरभेद । अथ नानुवर्तते स्वरभेदाऽभाव । भोजीति । एतदपि भुजिना सबन्ध नञ प्रदर्शयितु प्रक्रियावाक्यमुपात्तम् । न हि केवलस्य भोजि शब्दस्य प्रयोग , सुप्युपपदे प्रत्ययविधानात् । तदेतदुक्तं भवति,—न श्राद्ध भुङ्क्त इति वाक्य कृत्वा नञ श्राद्धशब्देनाऽसमर्थसमासं विधायाऽश्राद्धशब्द उपपदे णिनि कर्तव्य । णिनीयत्न संज्ञानुवृत्तौ सत्यामत्र कृत्स्वर । [ प्रते ] ॥

आत्ममाने।आत्मशब्द प्रत्यगात्मवचन परव्यावृत्तिं करोति । कर्मकर्तरीति । यदा प्रत्ययार्थ कर्ता, आत्मानमेव पाण्डित्यादियुक्त मन्यते तदाऽसौ कर्मकर्ता भवति। तत्र यदि कर्तरि षष्ठी स्यात्तदात्मग्रहणमनर्थक स्यात् । कर्तृसम्बन्धाऽव्यभिचारा-

उ.]एवेति भाव ।अथ नाऽनुवर्तत इति।'उपमान शब्दार्थ' इति सूत्रस्थपाष्ठभाष्येऽ-यमपि पक्षो दृश्यत इति भाव । अत्र पक्षे स्वरभेदोक्तिरेकदेश्युक्तिरिति बोध्यम् । पाष्ठभाष्य चैकदेश्युक्ति । भाष्ये भुजिप्रतिषेधवाचिन इति । तदर्थबोधकस्य नञ इत्यर्थ । सुप्युपपद इति । बहुलग्रहणन्तु क्वचिदिष्टमिद्धत्र इति भाव ॥[ प्रते ]।

आत्ममाने। पूर्वं कर्मण इदानीं कर्तृत्वाऽभावेन युगपदेकस्य कर्मकर्तृत्वविरो-धेन चेदमसङ्गतमत आह—यदेति । केवलविशिष्टभेदेन शब्दभेदेन वा न कर्तृकर्म-विरोध इति भाव । आत्मग्रहणमनर्थकमिति । यद्यपि 'उभयप्राप्ता'विति नियमा-

१ 'जीति चेष्यते'। २ 'अश्राद्धभोजीत्यसमर्थसमास ' इत्येवमत्र वार्तिक लुप्त-मितिगोडा । ३ इदं वार्तिकमित्यन्ये । भाष्यमेवेत्यन्ये । ४ इद क्वचिन्न । ५ 'इतीयं कर्मणि षष्ठी' । ६ 'वै तेनैव' ।

एव तर्हि 'धातो'रिति वर्तते । धातौ भूते॥ धातुर्वै शब्दो न च शब्दस्य भूतभविष्यद्वर्तमानतायाः सम्भवोऽस्ति ? ॥ शब्देऽसम्भवादर्थे कार्यं विज्ञास्यते ॥

क पुनर्धात्वर्थः ?॥ क्रिया । क्रियायां भूतायाम् ॥ यद्येवं ॥८॥ निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः ॥९॥ निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः स्यात् ॥ के

प्र ]ज्ञातारं पृच्छति—कस्मिन्निति । इतर आह—काल इति । तस्यैव भूतादिशब्दवाच्यत्वेन सुप्रसिद्धत्वादिति भावः । तत्र केचिन्नित्य काल पदार्थानामनुज्ञाप्रतिबन्धाभ्यां स्थित्युत्पत्तिप्रलयहेतुमाचक्षते । तत्र संसर्गिसूर्यादिक्रियाभेदाश्रयो मासादिभेदव्यवहारो भूतादिव्यपदेशश्च । अन्ये तु प्रसिद्धपरिमाणक्रिया सूर्यादिकर्तृका अप्रसिद्धपरिमाणाया क्रियायाः परिच्छेदकतयोपात्ता अहरादिव्यपदेश्या काल इत्याहुः । न वै कालाधिकार इति । ततश्च सामान्यशब्दस्य विशेषेऽवस्थानं न लभ्यत इत्यर्थः । न च शब्दस्येति । शब्दस्याऽर्थे गुणभावाद्गुणस्य विशेषणसम्बन्धाऽयोग्यत्वान्नित्यत्वाद्वा शब्दस्यानित्यत्वेऽपि भूताद्यन्यतमविधानासंभवादुच्चरितप्रध्वंसित्वलक्षणभूत-

उ ]त्वादिमत्त्व इति तात्पर्यम्। अभ्यनुज्ञाप्रतिबन्धाभ्यामिति। तद्रूपाभ्यां नर्थाभ्यामित्यर्थः । तत्राऽभ्यनुज्ञया—स्थित्युत्पत्तिहेतुः । प्रतिबन्धेन—प्रलयहेतुः । ईश्वराऽधिष्ठितत्वेन च तदुपपत्तिः । ननु नित्ये काले तत्सत्ताया अपवृक्तत्वाऽभावात्कथं भूतत्वव्यवहार इत्यत आह—तत्र संसर्गीति । तत्क्रियोपाधिभूतया यो भेद उपधेयस्य तत्कृतो मासादिव्यवहार इत्यर्थः । अन्ये त्विति । तथा च तस्या अनित्यत्वान्सिद्ध एव भूतादिव्यवहार इत्यर्थः । आद्ये पक्षे क्षणोपाधेर्निर्वक्तुमशक्यत्वम् । उत्तरदेशसंयोगाऽवच्छिन्नक्रियेति चेत्तस्या विशेष्यविशेषणसम्बन्धरूपत्वे त्रयाणामपि स्थिरत्वात्क्षणव्यवहारनियामकत्वाऽभावः । अतिरिक्तत्वे सिद्धोऽतिरिक्तः क्षणपदार्थ इति तत्प्रचयैरेव कल्पमुहूर्तादिव्यवहारोपपत्तौ किमखण्डेन तेन ?। स्पष्टञ्चेदं 'काल परिमाणिने'त्यत्र भाष्ये इति निरूपितं तत्रैव । ईश्वरस्यापि कालनियामकत्वेन कालत्वव्यवहारः श्रुत्यादिष्विति बोध्यम् । अन्ये त्विति मतेऽप्येष दोषोऽस्त्येव । किञ्च 'प्रसिद्धपरिमाणे'त्युक्तिरसङ्गता, तस्या अपि क्रियान्तरस्यैव परिच्छेदकत्वेऽनवस्थापत्तिरिति दिक् । शब्दस्येति । स्वाऽभिधेयप्रतिपादने व्यग्रतया विशेषणसम्बन्धाऽयोग्यत्वादिति भावः । तदाह—गुणस्येति । नित्यत्वाद्वेत्यनेन भूतादिव्यवहाराऽयोग्यत्वं दर्शयति । वैयर्थ्यादिति । अनुच्चारिता-प्रत्ययविधेरसम्भवादिति भावः । न च शब्दस्येति—भाष्ये । तस्य नित्यत्वेन भूतादिविशेष्यताया सम्भवो नेत्यर्थः । अनित्यत्वपक्षेऽपि यथा वर्तमानशब्दस्य प्रकृतित्वसम्भवो न तथा भूतभविष्यतोः शब्दयोः प्रकृतित्वसम्भव इति योजना

१ 'तायाः' । २ इदं क्वचित्र ।

एवं तर्हि 'धातो'रिति वर्तते । धातौ भूते॥ धातुर्वै शब्दो न च शब्दस्य भूतभविष्यद्वर्तमानतायाः सम्भवोऽस्ति ? ॥ शब्देऽसम्भवादर्थे कार्यं विज्ञास्यते ॥

क पुनर्धात्वर्थे ?॥ क्रिया । क्रियायां भूतायाम् ॥ यद्येव ॥४॥ निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः ॥४॥ निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः स्यात् ॥ के

प्र ]ज्ञानाय पृच्छति—कस्मिन्निति । इतर आह—काल इति । तस्यैव भूतादिशब्दवाच्यत्वेन सुप्रसिद्धत्वादिति भावः । तत्र के चिन्नित्य कालं पदार्थानामनुरागप्रतिबन्धाभ्यां स्थित्युत्पत्तिप्रलयहेतुमाचक्षते । तत्र समर्यिसूर्यादिक्रियाभेदाश्रयो मासादिभेदव्यवहारो भूतादिव्यपदेशश्च । अन्ये तु प्रसिद्धपरिमाणक्रिया सूर्यादिकर्तृका अप्रसिद्धपरिमाणाया क्रियाया परिच्छेदायोपात्ता अहरादिव्यपदेश्या काल इत्याहुः । न वै कालाधिकार इति । ततश्च सामान्यशब्दस्य विशेषेऽवस्थानं न लभ्यत इत्यर्थः । न च शब्दस्येति । शब्दस्याऽर्थे गुणभावाद्गुणस्य विशेषणसम्बन्धाऽयोग्यत्वान्नित्यत्वाद्वा शब्दस्यानित्यत्वेऽपि भूतप्रत्ययविधानासम्भवादुच्चरितत्वलक्षणभूत-

उ ]त्वादिमत्त्व इति तात्पर्यम्। अभ्यनुज्ञाप्रतिबन्धाभ्यामिति। तद्रूपाभ्यामर्थाभ्यामित्यर्थः । तत्राऽभ्यनुज्ञया—स्थित्युत्पत्तिहेतुः । प्रतिबन्धेन—प्रलयहेतुः । ईश्वराऽधिष्ठितत्वेन च तदुपपत्तिः । ननु नित्ये काले तत्सत्ताया व्यपवृक्तत्वाऽभावात्कथं भूतत्वव्यवहार इत्यत आह—तत्र समर्गीति । तत्क्रिययोपाधिभूतया यो भेद उपधेयस्य तत्कृतो मासादिव्यवहार इत्यर्थः । अन्ये त्विति । तथा च तस्या अनित्यत्वात्सिद्ध एव भूतादिव्यवहार इत्यर्थः । आद्ये पक्षे क्षणोपाधेर्निर्वक्तुमशक्यत्वम् । उत्तरदेशसंयोगाऽवच्छिन्नक्रियेति चेत्तस्या विशेष्यविशेषणसम्बन्धरूपत्वे त्रयाणामपि स्थिरत्वात् क्षणव्यवहारनियामकत्वाऽभावः । अतिरिक्तत्वे सिद्धोऽनतिरिक्तः क्षणपदार्थ इति तात्पर्येणैव कल्पमुहूर्त्तादिव्यवहारोपपत्तौ किमसत्कल्पनेन तेन ?। स्पष्टश्चेदं 'कालः परिमाणिने'त्यत्र भाष्ये इति निरूपितं तत्रैव । ईश्वरस्यापि कालनियामकत्वेन कालत्वव्यवहारः श्रुत्यादिष्विति बोध्यम् । अन्ये त्विति मतेऽप्येष दोषोऽस्त्येव । किञ्च 'प्रसिद्धपरिमाणे'त्युक्तिरसङ्गता, तस्या अपि क्रियान्तरस्यैव परिच्छेदकत्वेऽनवस्थापत्तिरिति दिक् । शब्दस्येति । स्वाऽभिधेयप्रतिपादने व्यग्रतया विशेषणसम्बन्धाऽयोग्यत्वादिति भावः । तदाह—गुणस्येति । नित्यत्वादित्यनेन भूतादिव्यवहाराऽयोग्यत्वं दर्शयति । वैयर्थ्यादिति । अनुच्चारिताप्रत्ययविधेरसम्भवादिति भावः । न च शब्दस्येति—भाष्ये । तस्य नित्यत्वेन भूतादिविशेष्यतायां सम्भवो नेत्यर्थः । अनित्यत्वपक्षेऽपि यथा वर्त्तमानशब्दस्य प्रतिनियमसम्भवो न तथा भूतभविष्यतो शब्दयो प्रतिनियमसम्भव इति योजना

१ 'तथा'। २ इद क्वचिन्न।

तरेतराश्रयता ? ॥ भूतकालेनाऽत्र शब्देन निर्देशः क्रियते, निर्देशोत्तरकालं च भूतकालता । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि [कार्याणि] च न प्रकल्पन्ते ॥*॥ अव्ययनिर्देशात्सिद्धम् ॥ ॥ [ अव्ययनिर्देशात्सिद्धमेतत् ] ॥ अव्ययवता शब्देन निर्देशः करिष्यते । अवर्तमानेऽभविष्यतीति ॥ स तर्ह्यव्ययवता शब्देन निर्देशः कर्तव्यः ? ॥ न कर्तव्यः । अव्ययमेष 'भूते'शब्दो, नैषा भवतेर्निष्ठा ॥ कथमव्ययत्वम् ? ॥ ['उपसर्ग]विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्ती'ति निपातसंज्ञा । निपातोऽव्ययमित्यव्ययसंज्ञा ॥ अथापि भवतेर्निष्ठैवमप्यव्ययमेव ॥ कथम् ? ॥ न व्येतीत्यव्ययमिति ॥ क्व पुनर्न व्येति ?॥ एतौ कालविशेषौ भविष्यद्वर्तमानौ । स्वभावतो भूत एव वर्तते ॥ यदि तर्हि न व्येतीत्यव्ययम् ॥ ॥ न वा तद्विधानस्याऽन्यत्राऽभावात् ॥५॥ न वा भूताधिकारेणाऽर्थः ॥ किं कारणम् ?॥ 'तद्विधानस्यान्यत्राऽभावात्'। ये ऽपि ह्येते इत उत्तरं प्रत्यया विधीयन्ते नैतेऽप्येतौ कालविशेषौ न वियन्ति भविष्यद्वर्तमानौ । स्वभावत [एव ते] भूत एव वर्तन्ते॥ अत उत्तरं पठति

प्र ]न्त्वाश्रये च विशेषणवैयर्थ्यादिति भाव ।भूतकालेनेति । भवतेर्निष्ठाप्रत्ययो भूतक्रियावाचिनो विधानस्य, न च भूताधिकारमन्तरेण निष्ठाप्रत्ययस्य भूतक्रियाविषयत्वं लभ्यते । न च भूतक्रियाविषयनिष्ठाविधानमन्तरेण भूताधिकार उपपद्यते । तत्रश्चाधिकाराश्रयो निष्ठाप्रत्ययस्तदाश्रयश्चाधिकार इतीतरेतराश्रयत्वमित्यर्थः । एवमपीति।न शास्त्रीयमव्ययत्वमभिमतं किं तर्हि नित्यत्वमित्यर्थः ।ततो नित्यो भूतशब्दो निष्क्रान्तार्थवाची नित्येनार्थेन भविष्यद्वर्तमानप्रतिद्वन्द्विना सम्बद्धोऽतिनियत इत्यर्थः ।

उ ]बोध्या। क्रियायामभूतायामिति । तस्याम्भूतत्वम् वर्तमानत्वसप्रतियोगिकालवृत्तित्वम् । भूतकालेनेति । भूतकालक्रियावाचकेनेत्यर्थः । अव्ययनिर्देशादिति । वार्तिकेऽव्ययपदमर्थं आदाय न, न्यायान्तरपरत्वेन्नाशयेनाह—अव्ययवतेति । अव्ययमेव इति । अव्ययस्य भूतेशब्दस्य निर्देशादिति वार्तिकार्थ इति भाव । नित्येनाऽर्थेनेति । साधुत्वज्ञानं न शाब्दे कारणं नाऽप्ययमाधुत्वज्ञानं प्रतिबन्धकमित्यर्थः । परमतेऽपि शिष्टोच्चारितत्वेन साधुत्वाऽनुमानाद्बोध । शास्त्रेण तत्प्रत्यक्षन्तु पश्चाद्भविष्यतीत्यदोष । यदि तु शास्त्रेणैव निष्पाद्य स्यात्स्यादयं दोष इति भाव । भाष्ये—न व्येतीति । विविधमर्थं न प्राप्नोतीत्यक्षरार्थः । शास्त्राऽभावेऽपि तदर्थक एवाऽयमिति भाव । तदुक्तं कैयटेन—नियतार्थमित्यर्थ इति । क्व पुनर्न व्येतीति। क्वेति विषयसप्तमी, कस्मिन्विषये विविधमर्थं न प्राप्नोति । किं रूपं विविधमर्थं न प्राप्नोतीत्यर्थः । तत्रोत्तरमाह भाष्ये—एतौ

१क्वचिन।२'वर्त्तमानभवि'।३'येऽप्ये'।४तेऽप्येनौ'।५'क्रान्तवाची'।६ शास्त्रजत्वम्' ।

॥*॥ भूताधिकारस्य प्रयोजनं कुमारघाती शीर्षघात्यासुत निवृत्त सुत्वान

---

प्र ]कुमारघातीति। यदीह भूताधिकारो न क्रियते तदा 'कर्मणि हन' इति णिनि सामान्येन विधीयते । 'कुमारशीर्षयोर्णिनि'रित्ययमपि [णिनिः] एवं काल-सामान्ये । पुनर्विधानं तु वासरूपनिवृत्त्यर्थं स्यात्। ततश्च विशेषविहित कुमार-शीर्षयोर्णिनिरित्ययं भूतेऽपि प्रसज्येत। सति तु भूताधिकारे तत्रत्वादिणिन्वासरूपेण कुमारशीर्षयोरित्यनेन भूतणिनिं बाधित्वा भविष्यद्वर्तमानयोरेव णिनिर्विधीयते । आसुहेति । सति भूताधिकारे सप्तम्यादिष्वेव हन्तेर्भूते क्विब्भवतीति नियमेन भूत-एवोपपदान्तरे क्विन्न क्रियेते न तु कालान्तर इत्यासुहेति भविष्यद्वर्तमानयो प्रयोग उपपन्नो भवति । सुन्वन्त इति । 'सुञो यज्ञसंयोग' इति शतृप्रत्ययः । तत्र यदि भूताधिकारो वर्तमानाधिकारश्च न क्रियते तदा यज्ञसंयोगे विशेषविधीयमानः शता कालत्रयेऽपि ङ्वनिपं बाधेत । ततश्च भूते यज्ञसंयोगे सुत्वेति न स्यात् । अथ काल

---

उ ]कालविशेषाधिति । तद्विधानस्येति । तस्मिन्विधानं यस्येत्यर्थः । भूतशब्दवत् तेऽपि स्वभावत एव भूतमात्रवाचका भवन्ति, किमधिकारेणेति भाव । सामान्ये-नेति। कालसामान्येनेत्यर्थः।'सामान्ये' इति सप्तम्यन्तपाठस्तु युक्त एव। ननु पूर्वो 'कर्मणी'ति सूत्रे 'कुत्सित'ग्रहणं कृतमिति अकुत्सितार्थं तदिति चेन्न, 'कुत्सित'ग्रहणस्य भाष्येऽभावात्। शब्दशक्तिस्वभावसिद्धत्वेत्तत्राऽपीति भाष्याशयः। ननु तेनैव सिद्धे 'कुमारे'त्यादि व्यर्थमिति चेत्तत्राह–पुनर्विधानस्त्विति। 'कुमारहन्ते'त्यादिव्यावृत्त्यर्थं । विशेषविहित –उपपदविशेषे विहित । इत्ययम्भूतेऽपीति । इत्यनन्तरापि भूते प्रसज्येतेत्यन्वय । तत्रत्वादिणिन्वेति । कुमारशीर्षयोर्विशेषविहितो णिनि 'कर्मणि हन' इत्येनं बाधते । तत्र तेनाऽपि णिनेरेव विधानेन णिनेर्बाधस्य वल्ल-भाष्यतया तत्सहचरितभूतकाले बाध्यत इति वर्तमानभविष्यतोरेव 'कुमारे'त्यादि णिनिर्भवति । एवञ्च तद्बाधनेन चरितार्थं शास्त्रमिति 'वासरूप'न्यायनाधे भूता-ऽभावेन 'कुमारहन्ते'त्यादि सिद्ध्यतीति भाव । 'कुमारघाती'त्यादौ विधीयमान 'कुमारे'त्यादिणिनिर्भविष्यद्वर्तमानयोर्यथा स्यात्तस्य भूतार्थे निवृत्तिश्च यथा स्या-दिति भूताधिकार इति भाष्याशयार्थ । इदञ्चिन्त्यं, तत्रत्वादिणिन्वासरूपस्य विधेय-विरहात्। तस्माद्भूताधिकारसामर्थ्यात् 'कर्मणि हन' इत्यनाऽनेन णिनि । 'भूत' इति नियमादन्यस्य णिनेर्भूते निवृत्तिरिति भाष्यार्थ । यथाऽस्य णिनेरपि क्वाऽभावेऽपि स्वभावत एव भूते वृत्तिस्तथा 'कुमारे'त्यस्य स्वभावत एव भूते निवृत्तिर्भविष्यतीत्यरुचे प्रयोजनान्तरमाह भाष्ये–आसुहेति । यज्ञसंयोग इति । यज्ञसंयोगविषये शता ङ्वनिपविषु कालेष्वपवादो मा भूदित्यन्वय । प्रसङ्गाद्वर्तमानाऽ-धिकारस्यापि प्रयोजनप्रदर्शनं। वार्तिके 'भूताऽधिकारस्ये'त्युपलक्षणम्। तत्र ङ्वनि-

सुन्वन्त सुषुपुषोऽनेहा अग्निमादधानस्य,[भूतकालनिवृत्त्यर्थं भविष्यद्वर्तमानकालसप्रत्ययार्थम् ]॥ ३॥ कुमारघाती शीर्षघातीति भविष्यद्वर्तमानार्थौ भूतनिवृत्त्यर्थं । आखुहा बिडाल इति, भविष्यद्वर्तमानार्थ.। इतरथा हि ब्रह्मादिषु नियमस्त्रिषु कालेषु निवर्तकः स्यात् ॥ सुत्वान सुन्वन्त , यज्ञसंयोगे ङ्वनिपस्त्रिषु कालेषु शतृऽपवादो मा भूत् ॥सुषुपुष , नजिङ् सर्वकालापवादो मा भूत् । अनेहा इति,–वर्तमानकाल एव । अन्यत्र–'अनाहन्ता' ॥ आदधानस्य ।–कानच् श्नश् ताच्छील्यादिषु सर्वकालापवादो मा भूत् । अग्निमादधानस्य । आदधानस्येत्येतेनान्यत्र ॥

॥ ]त्वा इति ङ्वनिब्विधीयते तथापि सुत्वा सुन्वाद्वीति कालभेदो न स्यात् । सति त्वधिकारे कालभेदेन तयोरवस्थानं भवति । सुषुपुष इति । असति भूतवर्तमानाधिकारे विशेषविहितेन नजिङा लिटो बाधनं स्यात् । ताच्छीलिकेषु च वासरूपविधिर्नास्ति । सति त्वधिकारे भूते लिड्वर्तमाने नजिङिति बाध्यबाधकभावाऽभाव । अनेहा इति।'नन्याहन एह चे'ति असिप्रत्ययोऽसत्यधिकारे सर्वस्मिन्काले तृच बाधेत। सति त्वधिकारे वर्तमानकाल एवौणादिकस्तृचं बाधेत। चानशिति। असत्यधिकारे कानचं चानश्बाधेत स्यात्।न पुनरनयोर्भेदो यावताऽभ्यस्तानामादिरिति ल्सार्वधातुके

उ ]भूताऽधिकारे। शता वर्तमानाऽधिकारे।ङ्वनिप्–'सुयजोर्ङ्वनिबि'ति विहितम्। कालभेदो न स्यादिति । वाऽसरूपेण वर्तमानेऽपि ङ्वनिप्प्राप्नोतीति भाव । नजिङेति । 'स्वपितृषोर्नजिङ्' । अय वर्तमानाऽधिकारे । लिट–भूताऽधिकारे। लिट – 'छन्दसि लिट्' लिट कानज्वा' 'क्वसुश्चे'त्यस्य । भाष्ये–सर्वकालाऽपवाद इत्यस्य सर्वकालभवोत्तरप्रत्ययाऽपवाद इत्यर्थ । भूतकाललिटोऽपीति यावत् । असत्यधिकार इति । 'वर्तमान' इत्यधिकारेऽसतीत्यर्थ । सति त्विति । 'वर्तमान' इत्यधिकारे सति 'उणादय' इत्यस्य तदधिकारस्थत्वादसिर्वर्तमानकाल इति भाव । रूढिशब्दत्वादेवौणादिषु वाऽसरूपविधिर्नास्तीति तात्पर्यम् । एतत्प्रयोजनोक्तिरेकदेशिन , उणादीनामव्युत्पन्नत्वेऽसम्भवात् । एवं तृचोऽपि वर्तमानकाल एव साधुत्वस्य तत्सूत्रे भाष्य उक्तत्वेन 'अन्यत्र अनाहन्ता' इत्यस्याऽसङ्गतेश्च । असत्यधिकार इति । भूतवर्तमानयोरधिकारयोरसतोरित्यर्थ । कानच इति । क्वसोरप्युपलक्षणमिदम् । यद्वा कानजुपलक्षितस्य लिट इत्यर्थ। स्यादार्धधातुक इति । तत्र चानश सार्वधातुकत्वेऽपि लादेशत्वाऽभाव । कानचो लादेशत्वेऽपि आर्धधातुकत्वमित्युभयत्राऽप्यन्तोदात्तत्वमेवेति भाव । कथंभिप्राय एवेति । अनसिमस्तु क्वसुरिति भाव । भाष्ये 'चानश्ताच्छील्यादिषु सर्वकालाऽपवादो माभू'दित्युत्तरम्–'अग्निमादधानस्ये'-

१ इद क्वचित् । २ इद द्रुत स्यात् ।

ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ३।२।८७ ॥

किमर्थं ब्रह्मादिषु हन्तेः क्विब्विधीयते न क्विप्चान्येभ्योऽपि दृश्यत इत्येव सिद्धम् ? ॥१॥ ब्रह्मादिषु हन्तेः क्विब्वचनं नियमार्थम् ॥२॥ [ ब्रह्मादिषु हन्तेः क्विब्वचनं नियमार्थम् ]॥ नियमार्थोऽयमारम्भः। ब्रह्मादिष्वेव हन्तेर्भूते[2] क्विब्यथा स्यादिति ॥ किमविशेषेण ?॥ नेत्याह । उपपदविशेषे, एतस्मिंश्च विशेषे ॥ अथ ब्रह्मादिषु हन्तेरणिनिना भवितव्यम् ? ॥ न भवितव्यम् ॥ किं कारणम् ?॥ 'उभयतो नियमात्'। उभयतो नियमोऽयम् । 'ब्रह्मादिष्वेव हन्तेर्भूते क्विब्भवति' । 'क्विबेव च [ हन्तेर्भूते ] ब्रह्मादिष्विति ॥३॥ तथा चोत्तरस्य

प्र ] विधीयते न सार्वधातुकमात्रे'। एवं तर्हि उपमतङ्गनो भेद । यनजात्मनेपदत्वं तत्कर्त्रभिप्राय एव भवति, यानस्तु पुनरविशेषेण । सति त्वधिकारे भूते यनञ्वर्तमाने चानशिति साध्यसाधनभावाऽभाव । [ भूते ] ।

ब्रह्मभ्रूण। किमविशेषेणेति।किं धातूपपदकालप्रत्ययाश्चत्वारोऽपि नियम्यन्ते अथ किं चिदेव नियम्यत इति प्रश्न । उपपदविशेष इति। अनेन धातुनियमं दर्शयति, 'ब्रह्मादिष्वेव हन्तेर्भूते क्विब्भवति नोपपदान्तरे'। तेन पुरुषं हतवानित्यत्र क्विन्न भवति।अथेति।'कर्मणि हन' इत्यनेनेति भाव ।क्विबेवेति।'ब्रह्मादिषु हन्तेर्भूते क्विबेव भवति न प्रत्ययान्तर मिति क्विपि भूतकाले नियम्यत इति कालनियमोऽप भवति। एतदेव नियमद्वयं भाष्यकारेणाभिहितम्।'ब्रह्मादिषु हन्तेरेवभूते क्विब्भवति' 'ब्रह्मादिषु हन्तेः क्विब्भूत एवे'त्येतत्तु नियमद्वयं नाभ्युपगतम् । अन्यैस्त्वाहेतुरयिरुना चतुर्विधो नियमो व्याख्यात , स भाष्यविरोधादनादरणीय. । तथा चेति । यस्माद्ब्रह्म-

उ.] त्येव । सुसुपुषोऽनेहाऽसि'मित्यपाठ. । आत्मनस्येन्येषाऽन्यत्रेति । भूतार्थोऽतिरिक्तवर्तमानत्वविवक्षानामकर्त्रभिप्राये कर्त्रभिप्राये च 'आत्मनस्ये'त्येव । भूते तु कर्त्रभिप्राये एव तदा । अकर्त्रभिप्राये तु ह्युरेवेत्यर्थ. ॥ [ भूते ]

ब्रह्मभ्रूण। किं धातूपपदेति । भाष्ये–'नियमार्थोऽयमारम्भ नियमविशेषेणे'-त्येव पाठ. । 'ब्रह्मादिष्वेवे'त्यादिनियमाकारलेखनस्तु टीकाकृतां प्रमादात्, अन्यथा तदाकारप्रदर्शनेनैव नियमान्तरनिरासात्पुन प्रश्नाऽनुपपत्ते । उपपदविशेष इति । नियमस्य सजातीयापेक्षत्वात् 'हन्तेः क्विबुपपदविशेष एवे'त्यर्थ । एतस्मिंश्च विशेष इति। भूत इत्यर्थं तेन।'भूते हन्तेः क्विब्ब्रह्मादिष्वेवे'ति नियम इति भाव । तदाह–अनेनेति । धातोर्नियमानतिरिक्ते उपपदे भूतकालेऽवच्छिन्नेऽपि वर्तमानात् क्विपोऽसत्त्वबोधकत्वादिति भाव । भाष्ये–अथेति । एतत्कालनियमाऽङ्गीकारे इत्यर्थं । कालनियम इति । भूतकालावच्छिन्नार्थाद्धातो' क्विनातिरिक्तासंबन्ध-

१ इद नास्ति । २ 'हन्ते क्विप्' । ३ इदं क्वचित्। ४ 'क्विब्भूतकाले नियं' ।

वचनार्थं ॥*॥ एवञ्च कृत्वोत्तरस्य योगस्य वचनार्थं उपपन्नो भवति,–'बहुल छन्दसी'ति। यो मातृहा पितृहा भ्रातृहा। न च भवति 'अमित्रघात'इति ॥

कर्मणीनिविक्रियः ॥ ३।२।९३ ॥

॥*॥ कर्मणि कुत्सिते ॥*॥ कर्मणि कुत्सिते इति वक्तव्यम्। इह मा भूत्। धान्यविक्रायः इति ॥[कर्मणीनि]॥

अन्येष्वपि दृश्यते ॥ ३।२।१०१ ॥

॥*॥ अन्येभ्योऽपि दृश्यते ॥*॥ अन्येभ्योऽपि दृश्यत इति वक्तव्यम् ॥ इहापि यथा स्यात् आखाः उखा परिखा ॥ [अन्येष्वपि दृश्यते]।

निष्ठा ॥ ३।२।१०२ ॥

॥*॥ निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः ॥*॥ निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः स्यात् ॥ केतरेतराश्रयता ? ॥ सतो क्तक्तवत्वोः संज्ञया भवितव्यं, संज्ञया च क्तक्तवतू भाव्येते। तदेतदितरेतराश्रयं भवति। इतरेतराश्रयाणि च [कार्याणि] न प्रकल्पन्ते॥*॥ सिद्धं तु वक्तुग्रहणम् ॥*॥ सिद्धं तु वक्तुग्रहणं कर्तव्यं भवति 'क्तक्तवतू भूते'। क्तक्तवतू निष्ठेति। यदि पुनरिहैव

प्र ] द्विर्वचनमिति नियमोऽनेन क्रियत तस्मादुत्तरस्य योगस्य वचने प्रयोजनमस्ति,–उपपदान्तरेऽपि हन्तेश्छन्दसि क्विप्यथा स्यादिति। [ ब्रह्मभ्रूणवृत्रेषु ] ॥

कर्मणि। कर्मणि कुत्सित इति। यस्य सोमक्रयणादेः शास्त्रेण विक्रयः प्रतिषिद्धस्तत्कर्म विक्रये कुत्सितम्। [ कर्मणीनिविक्रियः ] ॥

अन्येष्वपि। अन्येष्विति सप्तमीनिर्देशादुपपदान्तरमेवाश्रित न तु धात्वन्तरमित्याह–अन्येभ्योपीति। [ अन्येष्वपि दृश्यते ] ॥

उ ]शो ब्रह्मादिति भाव। तत्र केवलस्यातो प्रत्ययान्तरमवन्ध्यास्यात्कारणात्तावत्प्रत्ययान्तरनियमोऽयमिति बोध्यम्। नियमद्वयमिति। ब्रह्मादिष्वेव' क्विवेव'ति च कल्प्यमानस्यैवकारस्य शृङ्खलस्याविवेऽन्यथो स्यात्। न च भाष्यप्रामाण्यादुभयत्राऽपीतिरत्नम्। उत्तरस्य वचनार्थं इति। सापेक्षत्वेऽपि गमकत्वात्समासः। धातुनियमश्चेद मात्रमिति दर्शयति–यस्मादिति। नन्वेनदर्थं 'छन्दसि' इत्येवास्तु, सामर्थ्यादुपपदान्तरे भविष्यति नि बहुलग्रहणेनेत्यत आह भाष्ये–न च भवति अमित्रेति। तावन्मात्रोक्तौ 'क्विवेवे'ति नियमात्त स्यान्न भवतीत्येनदर्थं बहुलग्रहणमिति भाव ॥ [ ब्रह्मभ्रूण ] ॥

कर्मणीनि। ननु कर्मणि कथं कुत्सितत्वमत आह–यस्य सोमेति ॥

निष्ठा। 'तौ सदिति वचन' इत्यादि वार्तिक 'तौ स'दिति सूत्रे तेन समान-

१ इदं क्वचिन्न। २ 'निर्विक्रिय'। ३ 'उखा'।

निष्ठासंज्ञाप्युच्येत । 'क्तक्तवतू भूते' । ततो-'निष्ठा' । निष्ठासंज्ञौ च क्तक्तवतू भवत इति ॥ किं कृतं भवति ? ॥ द्विः क्तक्तवतुग्रहणं न कर्तव्यं भवति ॥ एवमपि 'ता'विति वक्तव्यं स्यात्। पश्यति ह्येतत् 'तौ सदि'ति वचनमसंसर्गार्थ'मिति। असंसक्तयोर्भूतकालेन क्तक्तवत्वोर्निष्ठा संज्ञा यथा स्यात् । जिमिदा-मिन्न । निष्विदा-क्ष्विण्णः ॥ यदि पुनरदृष्टश्रुतावेव क्तक्तवतू गृहीत्वा निष्ठासंज्ञोच्येत[१] ॥ नैवं शक्यम् । दृष्टश्रुतयोर्न स्यात् । जिमिदा-मिन्नः । [ निष्विदा-क्ष्विण्णः इति ] । तस्मान्नैव शक्यम् ॥ न चेदेवं द्विः क्तक्तवतुग्रहणं कर्तव्यं भवति इतरेतराश्रयं वा भवति ॥ नैष दोषः, इतरेतराश्रयमात्रमेतद्भवति । सर्वाणि चेतरेतराश्रयाण्येकत्वेन परिहृतानि 'सिद्धं तु नित्यशब्दत्वा'दिति ॥ नेदं तुल्यमन्यैरितरेतराश्रयैः । न हि संज्ञा नित्या ॥ एवं तर्हि

प्र ] निष्ठा । यदि पुनरिति। यौ लौकिके प्रयोगे न दृष्टौ नापीह शास्त्रे श्रुतौ तौ क्तक्तवतू निर्दिश्य संज्ञा विधीयते। एतदुक्तं भवति,—इहैव प्रकरणे क्तक्तवतू निष्ठेति सूत्रं कर्तव्यम्। । यौ भूते क्तक्तवतू तौ निष्ठासंज्ञौ भवत । तत्र संज्ञाविधानान्यथानुपपत्त्या तयोर्भूते विधानमनुमास्यते, इतरेतराश्रयदोषश्च न भविष्यतीति । दृष्टश्रुतयोरिति। यद्यपि क्तवतुरन्यो नास्ति तथापि संज्ञाविधाने द्वयोः सह निर्देशादनादि द्विवचनेन निर्देशो न तु द्वित्वं विवक्षितम्। एकत्वेनेति ।सामान्येनेत्यर्थः ।न हि संज्ञा नित्येति । वृद्ध्यादिका संज्ञा विषयनियतत्वादनित्या । आचार्यदृष्टौ हि प्रयोगे वियन्ते तत्र 'वृद्धिरादै'जित्यादिना साधुत्वज्ञानमन्वाख्यायते—वृद्धिरादैजिति साधुर्भवति । क्तक्तवतू तु सानुबन्धकौ प्रयोगे न विद्येते इति नित्यत्वाऽभाव उक्तो इत्यभिप्रेत्यैतदुक्तम् ।

उ. ]न्यायनिर्दिष्टमित्याह भाष्ये—असंसक्तयोरिति। नत्विदं हि अदर्शनविशेषस्वरूपमात्रपरामर्शात् दोष इति भावः । 'भिन्न' इत्यादौ 'चैत्र स्त' इति वर्तमाने क्तः । यदि पुनरिति भाष्यमूलोक्तेन पुनरुक्तमित्याशङ्क्याह—यौ लौकिके इति । न दृष्टाविति । अनुबन्धविशिष्टौ न दृष्टावित्यर्थः । अपदश्रुतत्वमत आह—एतदुक्तं भवतीति । भाष्ये—दृष्टश्रुतयोरिति । 'भिन्न स' इत्यादौ । अत्र शास्त्रे संज्ञा तस्य प्रत्ययभिन्नता प्रयोगेऽनुबन्धवियोगेऽपि दृष्टत्व बोध्यम् । भाष्ये—द्विः क्तेति।तद्दोषग्रहणमित्यर्थः । क्तक्तवतू भूते तौ निष्ठेति । सामान्येनेति। एकत्वसदेन तदाश्रयो लक्ष्यते । साधारणपर्यायश्च 'एक'शब्द इत्यन्ये । ननु वृद्ध्यादिसंज्ञाऽपि कृत्रिमत्वादनित्यैव, तत्कथं तत्राऽत्र समाधिर्नेत्यत आह—वृद्ध्यादिकेति । विषयनियतत्वादिति । संज्ञाविषयस्य शास्त्रे प्रयोगे चैकरूपत्वेन संज्ञिनो नित्यत्वात्संज्ञा नित्या, साधु वाऽन्वाख्यानस्य च सम्भवो, नैवमत्रेति भावः । ननु संज्ञाया

१ 'क्तक्तवतू निष्ठासंज्ञौ'।२ 'भूतेन कालेन निष्ठा' । ३ 'हि नस्मात्'।४ क्वचित् ।

भाविनी सञ्ज्ञा विज्ञास्यते । तद्यथा कश्चित्कं चित्तन्तुवायमाह'अस्य सूत्रस्य शाटकं वये'ति । स पश्यति-'यदि शाटको, न वातव्य, अथ वातव्यो न शाटकः, शाटको वातव्यश्चेति विप्रतिषिद्धम्, भाविनी खल्वस्य सञ्ज्ञाऽभिप्रेता, 'स मन्ये वातव्यो यस्मिन्नुते शाटक इत्येतद्भवती'ति । एवमिहापि तौ भूते काले भवतो ययोरभिनिर्वृत्तयोर्निष्ठे येषा सञ्ज्ञा भविष्यति ॥

॥ ॥ आदिकर्मणि निष्ठा ॥*॥ आदिकर्मणि निष्ठा वक्तव्या । प्रकृतः कटं देवदत्त इति॥ किं पुनः कारणं न सिध्यति ?॥*॥ यद्वा भवन्त्यर्थे ॥*॥ यद्वा भवन्त्या अर्थे भाष्यते । प्रकृतः कटं देवदत्तः । प्रकरोतिकटं देवदत्त इति ॥*॥ न्याय्या त्वपवर्गात् ॥*॥ न्याय्या त्वेषा भूतकालता ॥ कुतः ? ॥ 'आपवर्गात्' । आदिप्रभृत्यपवृक्तः । एष च नाम न्याय्यो भूतकालो यत्र किं चिद

प्र ]भाविनी सञ्ज्ञेति। सञ्ज्ञिनी भाविन्यास्तञ्ज्ञा भाविनीति। तथा हि निष्ठेत्युक्ते सञ्ज्ञा वाक्यं 'क्तक्तवतू निष्ठे'ति स्मर्यते। तत्र सामर्थ्यात् क्तक्तवतुविधानं सम्पद्यते। आदिकर्मणीति । आद्येषु क्रियाक्षणेषु भूतेषु सर्वस्या क्रियाया भूतत्वाऽभावान्निष्ठा न प्राप्नोतीति वचनम् । न चादिकर्मणि क्तः कर्तरि [च]इत्येतदर्थादेशनमादिकर्मणि निष्ठाया ज्ञापकम् । 'गीतं क्त' इत्यादिना वर्तमानकालविषयस्य क्तस्य सम्भवात्तस्यैवैतदर्थादेशनं स्यात्। यद्वा भवन्त्यर्थ इति । यस्मान्नोऽर्थे विकल्पेन भाष्यते निष्ठा तस्माद्भवन्त्यर्थे । न्याय्येति । आदिभूत एकावयवे समुदायस्य समाप्तत्वादस्ति

उ ]स्वतो भाविस्वमनुपपन्नमत आह-सञ्ज्ञिन इति । सामर्थ्यादिति। अन्यस्योत्पन्नस्य निष्ठासञ्ज्ञाया अभावादिति भावः । आदिकर्मणीति 'कर्म'शब्दः क्रियावाची । एकफलोद्देशप्रवृत्तसमूहरूपा च क्रिया । तत्र वार्तिकस्य दर्शयति-आद्येष्विति । सम्पूर्णसमूहस्य व्यापकत्वे हि भूतव्यवहार इति भावः । क्रियाक्षणेष्विति । अत्र 'क्षण'शब्दः सूक्ष्मप्रायकालोपलक्षणम्, अन्यथा क्षणरूपत्वे क्रियायास्तद्वदेव सूक्ष्मकालाऽवच्छिन्नत्वात्प्रत्यक्षत्वाऽनापत्त्या 'पश्य मृगो धावती'त्यादेर्नापत्तिरिति बोध्यम् । वस्तुतः क्रिया प्रत्यक्षैव परमाऽनुमेया च । तद्वक्ष्यति भाष्ये-अत्यन्ताऽपरदृष्टेति । अवयवरूपेण समुदायरूपेण चाऽप्रत्यक्षेत्यर्थः । 'पश्य मृगो धावती'त्यादिप्रयोगस्तत्प्रयोगदर्शनाऽभिप्रायेण, दृशेर्वा ज्ञानसामान्ये लक्षणा। निरूपयिष्यते चेदं 'वर्तमाने लट्'इति सूत्रे । 'आद्येषु क्रिया लक्षणे'ष्विति क्वचित्पाठः । तत्राद्येषु क्रियाऽवयवेष्वित्यर्थः । 'प्रीतः क्त' इति,-यदि तद्विषयमेव स्याद्वर्तमानग्रहणमेव कुर्यादिति चिन्त्यमिदमिति हरदत्तः । तेन स्वऽनुमानेऽपि क्तवत्वर्थं वचनमावश्यकमित्यपरे। यस्मान्न इति । धात्वर्थस्य वर्तमानत्व एव यतो न्येके विकल्पेन प्रयुञ्जानेऽतो वक्तव्येत्यर्थः । 'यद्भवन्त्यर्थे वा भाष्यत' इति भाष्येऽ-

प्रवृत्त दृश्यते ॥ ॥ वा चाद्यतन्याम् ॥*॥ वा चाऽद्यतन्या भाष्यते । प्रकृत कट देवदत्त । प्राकार्षीत्कट देवदत्त इति॥ किं शक्य त एते शब्दाः प्रयोक्तु मिसतो न्याय्येण भूतकालता ? ॥ नावश्य प्रयोगादेव । क्रिया नामेयमत्यन्ताऽपरदृष्टाऽनुमानगम्याऽशक्या पिण्डीभूता निदर्शयितुम् । यथा गर्भो निर्लुठित इति । साऽसौ येन येन शब्देनाऽभिसम्बध्यते तावति तावति परिसमाप्यते । तद्यथा कश्चित् पाटलिपुत्र जिगमिषुरेकमहर्गत्वाऽऽह–'इदमद्य गत' मिति। न च तावताऽस्यार्थे गतिक्रिया परिसमाप्ता भवति । यत्तु गत तदभिसमीक्ष्यैतत् प्रयुज्यते 'इदमद्य गत मिति। एवमिहापि यत्कृत तदभिसमाक्ष्यैत

प्र ]भूतत्वापत्तिरित्यर्थः ।तदुक्त हरिणा–'समूह स तथाभूत अतिभेद समूहिषु। समाप्यते ततोऽभेदे कालभेदस्य सभव ' ॥ इति । वाचाद्यतन्यामिति । यदुक्त भूतेऽर्थे भाष्यत' इति, तस्य व्यभिचार । लुङोऽपि विषय निरवशेष अय प्रयोगस्तस्मादवश्यमाद्यपवर्गाद्गतते[वि³]टव्या । अन्यथा लुङ् प्रयोगो न स्यादित्यर्थ । किं शक्यन्त इति । यावदभिमतफलप्रयोजनसकलस्यापरिसमाप्तिर्न भवति तावद्वर्तमानत्वमेव क्रियाया न तु भूतत्वम्। ततश्च वस्तुशून्या एवाऽमी शब्दा प्रयुज्यन्त इति भाव । अत्यन्ताऽपरदृष्टेति । पर–प्रधान प्रमाण प्रत्यक्षम् । अनुमानस्य तत्पूर्वकत्वात्। तेन क्रिया न दृश्यते।अवयवसमूहस्य युगपदनुपादानमस्याश्च । तदुक्तम्–'क्रमात्सदसता तेषामात्मानो न समूहिनाम् । सद्वस्तुविषयैर्यान्ति सबन्ध चक्षुरादिभि ' ॥ इति ॥ येन येनेति । शब्देन प्रत्याय्यमाना यत्र येनावयवेन सबध्यते समूहरूपा क्रिया तस्मिन्नेवावयवे समाप्यते। तत्रावयवाना

उ ]न्वय ।भाष्ये–आदिरन्त्यति। आद्यन्तियावयव इत्यर्थ । ननु तस्य भूतत्वेऽपि धात्वर्थस्य क्रियायाः भूतत्व आह–आदिभूत एवेति । समासत्वात्–आरोपितत्वात् । प्रतिभेद–प्रत्यवयवम् । समूहिषु–अवयवेषु । समाप्यते–आरोप्यते इत्यर्थ । अभेदे–अवयव समूहाऽभेदे । तेन क्रिया न दृश्यत इति । अत्यन्तमवयवरा समूहश्च न दृश्यते इत्यर्थ । आवयवानाञ्चेति । अवनाऽवयवस्याऽप्यप्रत्यक्षत्व, क्षणिकत्वनाऽनवस्थानादित्यर्थ । क्रमात्सदसतामिति। भूयोऽवयवसहितस्य समूह प्रत्यक्षे कारणमिति भाव । चक्षुरादिभिरसबन्धे हेतु –सद्वस्तुविषयैरिति । येन शब्देनेति। सामानाधिकरण्ये तदुदेशेऽपि तस्यैव परामर्शात् शब्दे परिसमाप्तिरुक्ता स्यात्, न च सा युक्तिमती यतो वैयधिकरण्येन व्याचष्ट–येनाऽवयवेनेति । सबध्यते–यत्र यत्राऽवयव आरोप्यते इत्यर्थ । यो योऽवयव प्रत्यक्षत्वेन निरूप्यते तत्रैव समाप्यते । तत्रावयव समान समूह एव समाप्यतेऽतीतो भवति

१ 'परिन्द्र' । २ 'न शक्या'। ३ इद क्वचित्र । ४ तत्र्थं ।

प्रयुज्यते 'प्रकुरु कटं देवदत्त' इति । यदा हि वेणिरन्तः कटोऽभिसमीक्षितो भवति 'प्रकरोति कट'मित्येव तदा भवति ॥ [ भूते ] ।

## लिटः कानज्वा ॥ ३।२।१०६ ॥ क्वसुश्च ॥ ३।२।१०७ ॥

किमर्थं कानच्क्वस्वोर्वाचनं क्रियते ? ॥*॥ कानच्क्वस्वोर्वचनं छन्दसि तिङो दर्शनात् ॥ ॥ कानच्क्वस्वोर्वचनं क्रियते ॥ किं कारणम् ? ॥ 'छन्दसि तिङो दर्शनात्' । छन्दसि तिङपि दृश्यते । अह सूर्यमुभयतो ददर्श । अह द्यावापृथिवी आततानेति[2] ॥*॥ न वाऽनेन विहितस्यादेशवचनात् ॥*॥ न चैतत्प्रयोजनमस्ति ॥ किं कारणम् ? ॥ 'अनेन विहितस्यादेशवचनात्' ॥ अस्त्वेनेन विहितस्यादेशः केनेदानीं छन्दसि विहितस्य लिटः श्रवणं भविष्यति ?॥ 'छन्दसि लुङ्लङ्लिट' इत्यनेन ॥ तदेतद्द्वावचनं तिष्ठतु तावत् सान्न्यासिकम् ॥

अथ किरणं किमर्थं नाऽसंयोगाल्लिट्कदित्येव सिद्धम् ॥*॥ किरणं संयोगान्तार्थम् ॥*॥ किरकरणं क्रियते ॥ [ किं प्रयोजनम् ? ] । 'संयोगान्तार्थम्' । संयोगान्ताः प्रयोजयन्ति। यन्धे –'वृत्रस्य यद्बद्धानस्य रोदसी' स्वम-

प्र ]कालनयप्रयोगात् क्रियाया अपि कालनययोग । [ भूते ] ॥

लिटः कानच्। छन्दसि तिङो दर्शनादिति। वासरूपविधिश्च लादेशेषु नास्तीत्युक्तम् । अनेनेति । 'छन्दसि लि'डित्यनेनेत्यर्थः । तस्यैव लिटः इहाऽनुकृतत्वादानन्तर्यादिति भावः । तदेतदिति । उत्तरत्रोपयोक्ष्यत इति भावः । बद्बधानस्येति । 'बन्ध बन्धने'। छान्दसत्वादभ्यासबकारस्य हलादिशेषेण निवृत्त्यभावे हलादिशेषेण जश्त्वमिति चर्त्व दकार । [ लिटः कानज्वा ] ॥

उ ]त्यर्थ । वेणिका–कटचरमाऽऽयन । तदन्तः कट इत्यस्य तदन्तकटनिर्वर्तनं निगमनमूह इत्यर्थः । [ भूते ] ॥

लिटः कानज्वा। क्वसुश्च । वाऽसरूपविधिरिति । ननु 'इणश्वनोरर्क्' चे'ति ज्ञापकादादेशानवरूप्यमादाय 'लविधौ वाऽसरूपो नास्ती'त्युक्तम्, एवञ्च प्रकृते स्यादेव, न च प्रत्ययविधिविषयस्याऽऽदेशेऽभावः, आदेशविधानेऽपि 'प्रत्यय' इत्यस्योपस्थिते 'आद्युदात्तश्चे'ति सूत्रभाष्यसम्मतत्वादिति चेन्न, एतद्ग्रहणादादेशरूपप्रत्ययविधौ तदनुपस्थितिकल्पनात्। तत्फल सदादिभ्यो भूतसामान्ये लिट् क्वसुरेव न पक्षे तिङ इति भावः । उत्तरत्रेति। केचित्तु 'तस्य धातुसम्बन्धे विधाने-नाऽधातुसम्बन्धे पक्षे भूतसामान्ये लिट्स्थानिकतिङ्श्रवणार्थमिदमावश्यकमित्याशयो भाष्यस्ये'त्याहु । यत्तु वृत्तौ 'लिटि'त्यनुवर्त्य विभक्तिविपरिणामेन सिद्धे

१ 'भवितव्यम्'।२ इदं क्वचिन्न। ३ 'अनेन'। ४ 'लिट्लिङ'।५ 'सान्यासिकं'।

र्षेवान् वद्धधानाँ अरम्णो । असेः-आजिवानिति॥ छान्दसौ कानच्क्वसू । लिट् च च्छन्दसि सार्वधातुकमपि भवति । तत्र सार्वधातुकमपित् [ङि]द्भवतीति ङित्वादुपधालोपो भविष्यति ॥*॥ ऋकारान्तगुणप्रतिषेधार्थं वा ॥*॥ ऋकारान्तानां गुणप्रतिषेधार्थं तर्हि कित्त्वं वक्तव्यम् । अयं [ हि ] लिटि ऋकारान्तानां प्रतिषेधविषये गुण आरभ्यते स यथैवेह प्रतिषेधं बाधित्वा गुणो भवति तेरतुः तेरुरिति, एवमिहापि स्यात्-तितीर्वान् तितिराण इति ॥ पुनः किन्करणात्प्रतिषिध्यते । [तस्मात्कित्त्वं कर्तव्यम्] ॥ [ लिटः कानज्वा ]

भाषायां सदवसश्रुवः ॥ ३।२।१०८ ॥

॥*॥ भाषायां सदादिभ्यो वा लिट् ॥*॥ भाषायां सदादिभ्यो वा लिड्वक्तव्यः ॥ किं प्रयोजनम् ? ॥*॥ तद्विषये लुङोऽनिवृत्त्यर्थम् ॥*॥ तस्य लिटो विषये लुङोऽनिवृत्तिर्यथा स्यात् । उपसेदिवान् कौत्सः पाणिनिम् । उपासदत् ॥*॥ अनद्यतनपरोक्षयोश्च ॥*॥ अनद्यतनपरोक्षयोश्च वा लिड्वक्तव्यः । उपसेदिवान् कौत्सः पाणिनिम् । उपासीदत् । उपससाद ॥*॥ अपवादविप्रतिषेधाद्धि तयोर्भावः ॥*॥ अपवादविप्रतिषेधाद्धि तौ स्याताम् ॥ कौ ? ॥ लङ्लिटौ ॥*॥ तस्य क्वसुरपरोक्षे नित्यम् ॥*॥ तस्य लिटो भाषायां क्वसुरपरोक्षे नित्यमिति वक्तव्यम् ॥ अपरोक्षग्रहणेन नार्थः । 'तस्य क्वसुर्नित्य'मित्येव ॥

म ] भाषायां स। इह क्वस्वादेशविधानाद्भूतसामान्ये लिट् सदादिभ्योऽनुमीयते स निशेषविषयत्वाल्लुङो बाधकः प्राप्नोतीति मत्वाह-भाषायामिति। अपवादविप्रतिषेधादिति । लुङोऽपवाद एतस्मादनुमितो लिट्, तथाऽनद्यतने लङ्, परोक्षे लिडिति च, तत्राऽस्य लिटो लङ्लिटोश्च विप्रतिषेधे परत्वाल्लङ्लिटौ स्यातामित्यर्थः । अस्य तु भूतसामान्यमवकाशः । एतदादेशविधानानुमितस्यैव सदादिभ्यो लिटः क्वसुर्न तु परोक्षे लिडित्यनेन विहितस्य,तस्याऽप्रकृतत्वात्। तस्येति। नित्यग्रहणं चेति प्रकृतस्य निवृत्त्यर्थम्, अपरोक्षग्रहणं 'परोक्षे लि'डित्यनेन विहितस्य लिटस्तिदार्थम्। अपरोक्षग्रहणेति।'अनद्यतनपरोक्षयोश्चे'ति वचनेन वा लिडयं विधीयते, तत्र

उ.]लिड्ग्रहणेन लिडादेशस्यादेशो ज्ञाप्यते इति वा वचनमावश्यकमेवं'लुक्, तस्य, प्रकृतभाष्यविरोधादित्याहुः। भाष्ये-पुनः किन्करणादिति ।'आरिवा'निन्यादौ गुणस्तु 'ऋच्छत्यृता'मित्यत्र ऋकारान्तग्रहणेन 'ऋ'धातोः पुनर्विधानाद्बोध्य इति दिक् ॥

भाषायां सद। इति मत्वाहेति । एवञ्च निरुपपदावविधानेऽस्य तात्पर्यमिति भावः । 'अनद्यतनपरोक्षयो'रिति वचनस्य तयोरपि क्वसुर्विधेय, तेन च तद्विषयो लिडनुमातव्य, स च वैयर्थ्य । ननु भूतसामान्येऽनुमितस्य विशेष

१ 'अरम्य'। २ 'ऋकारान्तगुण'। ३'किन्करण कर्तव्यम्'। ४ इदं क्वचित् ।

केनेदानीं लिटः परोक्षे श्रवणं भविष्यति ? ॥ 'परोक्षे लि'डित्यनेन ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् । अनुवृत्तिः करिष्यते । भाषायां सदादिभ्यो वा लिड्भवति । लिटश्च क्वसुर्भवति । ततो 'लुङ्' । लुङ् भवति भूते काले । भाषायां सदादिभ्यो वा लिड्भवति, लिटश्च क्वसुर्भवति । ततोऽनद्यतने लङ्' । अनद्यतने भूते काले लङ् भवति । भाषायां सदादिभ्यो वा लिड् भवति, लिटश्च क्वसुर्भवति । 'परोक्षे लिट्' । परोक्षे लिड्भवति । भाषायां सदादिभ्यो वा लिड्भवति । लिटश्च क्वसुर्भवति । तत्रायमप्यर्थः -'तस्य क्वसुरपरोक्षे नित्य'मित्येतन्न वक्तव्यं भवति॥ [ भाषायां सद ] ॥

उपेयिवाननाश्वाननूचानश्च ॥ ३।२।१०९ ॥

किमर्थमुपेयिवानिति निपातनं क्रियते ? ॥ ॥ उपेयुषि निपातनमिडर्थम् ॥ ॥ उपेयुषि निपातनं क्रियते ॥ [ किं प्रयोजनम् ? ॥ ] 'इडर्थम्' । इडन्यथा स्यादिति ॥ नैतदस्ति प्रयोजनं, सिद्धोऽत्रेड्वस्वेकाजाद्घसामित्येवं । द्विर्वचने कृतेऽनेकाच्त्वान्न प्राप्नोति ॥ इदमिह संप्रधार्य-द्विर्वचनं क्रियतामिडिति, किमत्र कर्तव्यम् ? ॥ परत्वादिडागमः ॥ नित्यं द्विर्वचनं ॥ कृतेऽपीटि प्राप्नोत्यकृतेऽपि प्राप्नोति॥इडपि नित्यः । कृतेऽपि द्विर्वचने प्राप्नोत्यकृतेऽपि प्राप्नोति ॥ नानेकादेशः प्राप्नोति ॥ किं कारणम् ? ॥ 'दीर्घ

प्र ]यस्मिन् परोक्षेऽप्य क्वसुर्भवति तत्र लड्क्रियौ भवतः। ततश्च 'परोक्षे लि'डिति विहितस्य लिटः सूत्रान्तरविहितत्वान् क्वस्वभावात्तिङो भवन्ति । भाषायां सदादिभ्यो वा लिडिति । 'लिटः कानज्वे'त्यतो 'वे'त्यनुवर्तते । तच न क्वसुना सम्बध्यते, किं तर्हि, लिटा । तत्र वानुवृत्त्या पक्षे लुङ्भावः सिध्यति । ततो'ऽनद्यतने लङ्' 'परोक्षे लि'डित्यत्रास्य सूत्रस्यानुवर्तनादनद्यतनपरोक्षयोरपि सदादिभ्यो वा लिड्भवतीत्यर्थः ॥

उपेयिवान् । उपसर्गस्यातन्त्रत्वादीयिवान्, समीयिवान् इत्याद्यपि भवति । उपेयुषीति । इणो लिटः क्वसुः । ततेडागमात्पूर्वं नित्यत्वाद्द्विर्वचनं, दीर्घ इणः किती

उ ]परत्वाऽपि भविष्यति इमिनेनेत्यत आह-भाष्ये-अपवादेति।तथाचाहुः-लुङोऽपवाद इति । नन्वनद्यतनादौ लिडैरपिस्तस्य नित्यं क्वसुरिति 'उपसर्गादे'ति स्यादत आह-एतदादेशेति । 'अनद्यतने'त्यादिवचनेन तयोरप्यनेन लिडनुमानान्न दोषः । ननु 'वा'ग्रहणाऽनुवृत्तौ क्वसोर्विकल्पः स्यादत आह-तच नेति । व्याख्यानादिति भावः ॥ [ भाषायां सदवमथव ] ॥

उपेयिवान् । इडागमादिति । 'वस्वेकाजाद्घसा'मित्येकाज्लक्षणा'दित्यर्थः ।द्वित्वे कृतेऽनेकाच्त्वात्तदप्राप्तेरनित्यत्वमिटः इति भावः । नन्वेकादेशे कृते एकाच्त्वात्त

१ 'ततोऽनद्यत' । २ इदं क्वचिन्न । ३ 'इति' ।

मित्येतदन्यत्॥ः॥नोपेयिवाननिपात्यो द्विर्वचनादिड्विध्यति परत्वात् ।
अन्येषामेकाचां द्विर्वचनं नित्यमित्याहुः ॥
अस्य पुनरिट्‌ नित्यो द्विर्वचनं च न विहन्यते ह्यस्य॥
द्विर्वचने चैकाच्त्वात्तस्मादिड्बाधते द्वित्वम् ॥२॥२॥

## लुङ् ॥ ३।२।११० ॥

॥*॥ लुङ्लृटोरपवादप्रसङ्गो भूतभविष्यतोरविशेषवचनात् ॥*॥ लुङ्लृटोरपवादः प्राप्नोति । अगमाम घोषान्, अपाम पयः, अशयिष्महि पूतीककृणेषु । गमिष्यामो घोषान्, पास्यामः पयः, शयिष्यामहे पूतीककृणेषु ॥ किं कारणम् ? ॥ 'भूतभविष्यतोरविशेषवचनात्' । भूतभविष्यतोर्ह्यविशेषेणैतौ विधीयेते लुङ्लृटौ, तयोर्विशेषविहितौ लङ्लुटावपवादौ प्राप्नुतः ॥ ॥*॥न वापवादस्य निमित्ताभावादनद्यतने हि तयोर्विधानम्॥*॥ न वैष दोषः ॥ किं कारणम्?॥'अपवादस्य निमित्ताभावात्'। नात्रापवादस्य निमित्तमस्ति॥ किं कारणम् ? ॥ 'अनद्यतने हि तयोर्विधानम्' । अनद्यतने हि तौ लङ्लुटौ विधीयेते, न चात्रानद्यतनः कालो विवक्षितः ॥ किं तर्हि ? ॥ भूतकालसामान्यं भविष्यत्कालसामान्यं च॥ यद्यपि तावदेतच्छक्यते वक्तुं—गमिष्यामो घोषान्पास्यामः पयः शयिष्यामहे पूतीककृणेष्विति, यदैतन्न ज्ञायते॥ कदेति । इह तु कथम्—अगमाम घोषान्, अपाम पयः,अशयिष्महि पूतीककृणेष्विति, यदैतन्निर्ज्ञातं भवति—अमुष्मिन्नहनि गतमिति॥ अत्रापि 'नवापवादस्य निमित्ताऽभावादनद्यतने हि तयोर्विधान' मित्येव ॥ कथं पुनः सतो नामाऽविवक्षा स्यात् ? ॥ सतोऽप्यविवक्षा भवति। तद्यथाऽलोमिका एडका। अनुदरा कन्येति ॥ असतश्च विवक्षा भवति । तद्यथा—समुद्रः कुण्डिका, विन्ध्यो वर्धितकमिति॥*॥वसेर्लुङ् रात्रिशेषे॥ ॥वसेर्लुङ् रात्रिशेषे वक्तव्यः ।

प्र ] लुङ् । लुङ्लृटोरिति । कालविशेषस्याश्रयेण चोद्यम् । सामान्यविवक्षाश्रयेण प्रतिसमाधानम्—न वेति । यदैतदिति । विशेषनिश्चयाऽभावात्सामान्यस्यैव युक्ता विवक्षेति भावः । असतश्चेति । विवक्षोपारूढ एवाऽर्थः शब्दप्रयोगनिमित्तमित्येतदनेन दर्शयति । इह तु सत्स्वेव विशेषेषु सामान्यमाश्रित्य लुङादिप्रयोगः

उ.] लुङ् । भाष्ये लुङ्लृटोरिति । तुल्यन्यायत्वाल्लृटोऽप्युपन्यासः । कालविशेषेति । 'अगमाम' इत्याद्युदाहरणेषु अनद्यतनरूपेऽर्थे । सतोऽप्यविवक्षयेति । सतामेव लोम्नां स्वल्पत्वेनाऽविवक्षया नञ्घटितप्रयोग इति भावः । नन्वगतौ विवक्षानिरूपणस्य प्रकृते नोपयोगोऽत आह—विवक्षोपेति । भाष्ये—न्याय्ये प्रत्यु-

१ 'विधीयेते लङ्लुटौ' । २ हि क्वचिन्न ।

न्यायये प्रत्युत्थाने प्रत्युत्थित कश्चित् कंचित् पृच्छति 'क भवानुषित' इति । स आह–'अमुत्राऽवात्स'मिति । 'अमुत्राऽवस'मिति प्राप्नोति ॥*॥ जागरणसन्तती ॥*॥ जागरणसन्तताविति वक्तव्यम् । यो हि मुहूर्तमात्रमपि स्वपिति तत्राऽमुत्राऽवसमित्येव भवितव्यम् ।[ लुङ् ] ॥

अनद्यतने लङ् ॥ ३।२।१११ ॥

॥१॥ अनद्यतन इति बहुव्रीहिनिर्देशोऽद्य ह्योऽभुक्ष्महीति ॥ ॥ अनद्यतन इति बहुव्रीहिनिर्देशः कर्तव्यः । अविद्यमानाऽद्यतनेऽनद्यतन इति ॥ किं प्रयोजनम् ?॥ 'अद्य ह्योऽभुक्ष्महीति' ? । अद्य च ह्यश्चाऽभुक्ष्महीति व्यामिश्रे लुङेव यथा स्यात् ॥ यद्येवमद्यतनेऽपि लङ् प्राप्नोति । न ह्यद्यतनेऽद्यतनो विद्यते ॥ अद्यतनेऽपि ह्यद्यतनो विद्यते ॥ कथम् ? । व्यपदेशिवद्भावेन ॥ ॥*॥ परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये ॥१॥ परोक्षे च लोकविज्ञाते

प्र ]उपपद्यत एव । विशेषविवक्षायां तु लङादिप्रयोग इति न कश्चिद्दोषः । यस्तेलुङिति । रात्रेश्चतुर्थे यामे प्रबुद्धो यदा वास्य प्रयुङ्क्ते 'अमुत्रावात्स'मिति तदा तत्राऽतिक्रान्तरात्रिप्रहरत्रयवसनमनद्यतनमिति लङ्प्रसङ्गे लुङ् वक्तव्यः । एकस्या रात्रेश्चतुर्थो यामो, दिवसश्च सर्वः, द्वितीयायाश्च रात्रेः प्रथमोऽद्यतन इत्याहुः । जागरणसन्तताविति । यदा प्रयोक्ता सकलमतिक्रान्तरात्रिप्रहरत्रयं जागरितवास्तदा लुङ्प्रयोगः । यदा तु सुप्त्वा प्रबुध्य प्रयुङ्क्ते तदा लङ्प्रत्यय एवेत्यर्थः [ लुङ् ] ॥

अनद्यतने । व्यपदेशिवद्भावेनेति । यथा मुख्ये भेदे आधाराधेयभावो भवति 'वटे निष्ठती'ति, तथेहापि समुदायावयवभेदाश्रयेण समुदायेऽद्यतनेऽवयवा अद्यतना सन्तीत्यनद्यतनो न भवतीत्युच्यते । ननु सर्वतोऽवयवव्यतिरिक्तोऽन

उ ]त्थाने इति। पश्चाद्याम जागरण,तत्समये प्रत्युत्थित प्रबुद्धमित्यर्थः । 'प्रत्युपस्थित'मिति पाठेऽप्ययमेवार्थः ।'प्रस्थित'मिति क्वचित्पाठः ।तत्रापि प्रत्युत्थाय प्रस्थितमित्यर्थः । स च रात्रेश्चतुर्थयाम एव,तत्र स्मृत्या प्रबोधस्योक्तेः ।तदाह–रात्रेरिति। अतिक्रान्तरात्रिप्रहरत्रयं जागरितवानिति । एवं हि पूर्वं तस्य 'प्रत्युत्थितं कश्चित्पृच्छती'ति ग्रन्थस्याऽसङ्गतिः ,स्वापं विना प्रत्युत्थानाऽसम्भवात् । तस्माच्चतुर्थे यामे यदा जागरणसन्ततिरिति भाष्यार्थः । तत्र मुहूर्तमपि स्वापे लङेवेत्यर्थ इति केचित् ।[ लुङ् ] ।

अनद्यतने लङ् । अनद्यतन इति । यदि तत्पुरुषः पर्युदासश्च तर्हि व्यामिश्रे दोषः । प्रसज्यप्रतिषेधेऽसमर्थसमासो भूतसामान्ये च स्यादत आह भाष्ये–बहुव्रीहिनिर्देश इति । तथा चाऽविद्यमानाऽद्यतनभूतकालार्थवृत्तेर्धातोरित्यर्थः । एवञ्च व्यामिश्रे न, भूतसामान्येऽपि नेत्यर्थः । गौणार्थत्वाश्रयणे बीजमाह—

१ 'प्रस्थित' । २ 'अभुञ्ज्महि' । ३ 'द्यतनोऽनद्यतन' । ४ 'नेऽप्यद्यतनो' ।

प्रयोक्तुर्दर्शनविषये लङ्वक्तव्यः । अरुणद्यवनः साकेतम् । अरुणद्यवनो मध्यमिकाम्[1] । परोक्ष इति किमर्थम् ?॥ उदगादादित्यः ॥ लोकविज्ञात इति किमर्थम् ?॥ चकार कटं देवदत्तः ॥ प्रयोक्तुर्दर्शनविषय इति किमर्थम् ? ॥ जघान कंसं किल वासुदेवः ॥ [ अनद्यतने लङ् ]।

विभाषा साकाङ्क्षे ॥ ३।२।११४ ॥

किमुदाहरणम् ? ॥ अभिजानासि देवदत्त ! कश्मीरान् गमिष्यामः, तत्र सक्तून् पास्यामः । अभिजानासि देवदत्त ! कश्मीरानगच्छाम, तत्र सक्तूनपिबाम । भवेत्पूर्वं परमाकाङ्क्षतीति साकाङ्क्षं स्यात्, परं तु कथं साकाङ्क्षम् ?॥

परमपि साकाङ्क्षम् ॥ कथम् ? ॥ अस्त्यत्रनिराकाङ्क्षेऽप्यतः साकाङ्क्षम् ॥ ॥ १ ॥ विभाषा साकाङ्क्षे सर्वत्र ॥ १ ॥ विभाषा साकाङ्क्षे सर्वत्रेति वक्तव्यम् ॥

प्र ] समुदाय आधारोऽस्ति। तदुक्तं हरिणा–'कालस्याप्यपरः काल निर्दिशन्त्येव लौकिकाः । न च निर्देशमात्रेण व्यतिरेकोऽनुगम्यते ॥' इति ॥ परोक्षे चेति । अननुभूतत्वात्परोक्षोऽपि प्रत्यक्षयोग्यतामात्राश्रयेण दर्शनविषय इति विरोधाभावः ॥

विभाषा सा । भवेत्पूर्वमिति । यदतिप्रसिद्धं वासगमनादि तल्लक्षणं, तच्च परार्थमुपादीयमानं वक्ष्यमाणमपेक्ष्य भोजनादि प्रति भवतु साकाङ्क्षं, लक्ष्यं तु प्रधानमपरोपकारि कथं साकाङ्क्षमित्यर्थः । अस्त्यत्रेति । सहशब्दो विद्यमानार्थवृत्तिः । तेन विद्यमानाकाङ्क्षं साकाङ्क्षमुच्यते। लक्ष्यलक्षणयोश्च परस्परापेक्षत्वाद्द्वयोरपि साकाङ्क्षत्वमित्यर्थः । सर्वत्रेति। 'वर्त्त'ति नानुवर्तते, तेनोभयत्र विभाषेयमिति भावः ।

उ ] न ॥ लभ्यत इति। कालस्याप्यतीति। यथा दिने 'मुहूर्त' इति । न च तावन्मुहूर्तसमुदायाऽनिर्दिष्टं दिनमस्तीत्यर्थः । अनुगम्यते–प्रमाणविषयो भवति । कंसं जघानेति । कंसवधो हि नेदानीन्तनप्रयोक्तृदर्शनयोग्योऽपीत्यर्थः । 'अरुण'दित्युदाहरणे तु तुल्यमतः प्रयत्नेति बोध्यम् ॥ [ अनद्यतने ] ॥

विभाषा सा । साकाङ्क्षेऽर्थे वर्तमानाद्धातोरित्यर्थः । ननु कस्य साकाङ्क्षत्वेऽप्युभयत्र कथं लृटिति शङ्कते–भवेत्पूर्वमिति । वदतीति । वासगमनादेर्लक्षणत्वे हेतुमाह–तच्चेति । कथनोपनायमुपादीयते तदेव लक्षणमित्यर्थः । लक्ष्यत्वेनाभिमतं तस्य भोजनादि, तत्प्रति भवतु तस्य साकाङ्क्षत्वमित्यर्थः । यद्यपि पूर्वस्य गमनाद्वेशऽर्थानां साकाङ्क्षत्वमस्त्येव, आकाङ्क्षाया उभयनिष्ठत्वात्, तथाऽपि तस्यापि 'गमनेन सक्तुपानं बोधयिष्यामी'त्येवाकाङ्क्षा न तु विपरीतेति भावः । द्वयोरपीति । उत्थाऽऽकाङ्क्षा द्वयोरपि विद्यमानेति भावः । परस्परापेक्षत्वादिति चिन्त्यं,

१ 'मध्यमिकाम्'। साकेत –अयोध्या। मध्यमिका च तन्नाम्नी प्रसिद्धा नगरी। (वर्तमान 'मऊ' एव नि० आजमगढ ) इति गोंडा. । २ 'लक्ष्यमाण' ।

'परोक्षे लिडिति ॥ कस्मिन्नु परोक्षे [ लिड्भवति ] ? ॥ काले ॥ न वै कालाधिकारोऽस्ति ॥ एवं तर्हि धातोरिति वर्तते, धातौ परोक्षे ॥ धातुर्वै शब्दो न च शब्दस्य प्रत्यक्षपरोक्षतायां संभवोऽस्ति ॥ शब्देऽसंभवादर्थे कार्यं विज्ञास्यते, परोक्षे धातौ,परोक्षे धात्वर्थ इति ॥ कः पुनर्धात्वर्थः ?॥ क्रिया। क्रियायां परोक्षायामिति। यद्येवं ह्योऽपचदित्यत्रापि लिट्प्राप्नोति ॥ किं कारणम् ? ॥ क्रिया नामेयमत्यन्तापरिदृष्टाऽनुमानगम्याऽशक्या पिण्डीभूता निदर्शयितुम्। यथा गर्भो निर्लुठितः ॥ एवं तर्हि साधनेषु परोक्षेषु ॥ साधनेषु च [परोक्षेषु] भवतः कः संप्रत्ययः ?॥ यदि गुणसमुदायः साधनं, साधन-

प्र ]वेति। निर्भाग समुदाय एवेन्द्रियाऽगोचरार्थवाची नित्यपरोक्ष इत्यर्थः। स्थल इति। यथा स्थलस्य नित्यपरोक्षस्य उपाधिभेदाद्भूतादिव्यपदेशस्तथा परोक्षत्वेनापि। अनित्यक्रिया-रूपकालपक्षे तु स्वत एव परोक्षत्वम्। न च शब्दस्येति। प्रत्यक्षश्रुतेः शब्दस्यो-च्चार्यमाणस्याऽनुभूतत्वात्परोक्षत्वाऽसंभवः। ततो यथा प्रत्यक्षत्वव्यभिचारा-च्छब्दस्य विशेषणं न संभवति, एवं परोक्षत्वमप्यसंभवादविशेषणमित्यर्थः। कः पुन-रिति। यद्येकः क्षणो धात्वर्थस्तदा तस्य प्रत्यक्षत्वपरोक्षत्वसंभवाद्युक्तं विशेषणम्। अथ समूहस्तस्य युगपत्संनिधानादप्रत्यक्षत्वाऽव्यभिचारात्परोक्षत्वमविशेषणमिति मत्वा प्रश्नः। क्रियेति। समूहरूपेति भावः। साधनेष्विति। शक्तिशक्तिमतोरभेद-विवक्षया साधनशब्देन शक्तिमन्ति द्रव्याण्युच्यन्ते। इतरो यथोक्तमभिप्रायमजान-न्पृच्छति–साधनेष्विति। गुणसमुदाय इति। शब्दादिसमुदाय इत्यर्थः।

उ.]निर्भाग इति। सभागनिर्भागस्य गुरुत्वादिति भावः, अवयवाऽर्थोऽप्रतीतेः। इन्द्रियाऽगोचरार्थवाचीति। तद्विषयकज्ञानजनकत्वाभावादिति बोध्यम्। ननु कालः सर्व-स्याऽपि 'इदानीं'मित्यादिव्यवहारेणाऽपरोक्ष एवेत्यत आह–यथेति। नित्यपरोक्ष इति। नित्यपरोक्ष इत्यर्थः। भाष्ये–प्रत्यक्षपरोक्षतायामिति। प्रत्यक्षत्वपरोक्ष-त्वयोर्विशेषणताऽभावादित्यर्थः। तत्र प्रत्यक्षत्वेन विशेषणस्य व्यभिचाराभावादुपपादनमनाव-श्यकम् आह–यथा प्रत्यक्षत्वमिति। युगपत्संनिधानादिति। सत्त्वसंनिधानेऽपि इन्द्रियैर्न गृह्यते इत्यप्रत्यक्षत्वमित्यर्थः। एवं चैकस्य प्रत्यक्षत्वेऽपि समूहरूपो धात्वर्थः परोक्ष एव। अत एव 'पिण्डीभूता निदर्शयितुमशक्ये'त्युक्तमिति भावः। वस्तुतोऽ-वयवानामप्रत्यक्षत्वमेवेत्युक्तं प्राक्। क्रियाऽवयवानां प्रत्यक्षत्वे एतदवयवानां समुदायरूपापरोक्षेण मूर्त्यादिवत् प्रत्यक्षत्वस्याऽपि सम्भवेन तद्व्यावृत्त्यर्थं 'परोक्ष' इति विशेषणोपपत्तौ साधनादेरप्रत्यक्षत्वेन तदप्रत्यक्षत्वोपपादनं भाष्योक्तमसङ्गतं स्यात्। अत एव 'अत्यन्ताऽपरिदृष्टे'ति 'अत्यन्त' पदं चरितार्थम्। नन्वप्रत्यक्षता

१ इदं क्वचिन्न। २ इति क्वचिन्न। ३ अपरे।

मप्यनुमानगम्यम् । अथाऽन्यद्गुणेभ्यः साधनं, भवति प्रत्यक्षपरोक्षताया सम्भवः ॥ अथ यदाऽनेन रथ्यायां तण्डुलोदकं दृष्टं कथं तत्र भवितव्यम् ? ॥ यदि तावत् साधनेषु परोक्षेषु, पपाचेति भवितव्यम् । भवन्ति हि तस्य साधनानि परोक्षाणि ॥ अथ य एते क्रियाकृता विशेषाः स्थालीसंस्काराः फूत्काराश्चेति तेषु परोक्षेषु ? ॥ एवमपि पपाचेति भवितव्यम् ॥ कथंजातीयकं पुनः परोक्षं नाम ? ॥ केचित्तावदाहुः –'वर्षशतवृत्तं परोक्ष'मिति ॥ [अपर आहुः –'वर्षसहस्र

प्र ]समुदायग्रहणं सर्वासां स्वरूपादिशक्तीनां क्रियाभेदो निमित्तत्वाऽविशेषात्साधनत्व प्रतिपादनार्थम् । तत्र यावदुक्तं 'सर्वा शक्तय साधन' मिति, तावद्'गुणसमुदाय साधन'मिति । साधनमपीति । शक्तीनां नित्यानुमेयत्वात् । अथान्यदिति । शक्ति व्यतिरिक्तं शक्तिमद्द्रव्यमित्यर्थः । तत्र इन्द्रियप्रत्यक्षत्वेन साधनस्य क्रियाप्रत्यक्षत्वाभिमानः, तत्परो ऽत्र क्रियापरोक्षत्वमित्यर्थः । यदि तावदिति । इहापि तण्डुलोदक दृष्ट न निश्चितम्–अनेन साधनेन पच्यन्तेऽथ हूयन्तेऽथ क्रुद्यन्ते इति, प्रमाणाऽन्तरेण यदा तावन्नरे प्रयोक्ता पाकमवगम्य वाक्यं प्रयुङ्क्ते तदा साधन स्वरूपस्य परोक्षत्वात् पपाचेति युक्तम् । अथेति । क्रियाकृतविशेषप्रत्यक्ष त्वेऽपि तत्स्य क्रियाप्रत्यक्षत्वाऽभिमानः । तत्परोक्षत्वे तु पपाचेत्येव भाव्यमित्यर्थः ।

कथं जातीयकमिति । यस्मिन् भूतानद्यतनपरोक्षे लिट् भाव्य तत्परिज्ञानाय प्रश्नः । केचिदिति । भूतभविष्यदर्शनाभ्याऽनेकदर्शनोपन्यासः । इन्द्रियाऽगोचरसाधन साधितानद्यतनक्रियावाचिनस्तु धातोर्लिड्भवत्येव इति निर्णयः । तथा 'सुप्तोऽहं किल विललाप' 'मत्तोऽहं किल विललाप'

उ ]सांनिध्यादयत्नस्य नेऽप्ये तन्मनस्य प्रत्यक्षत्वस्याप्न आह–अशक्येति । पिण्डी भूताऽपि निदर्शयितुमशक्या अवयवानां क्षणिकत्वेन पिण्डीभावस्यैवाऽभावादिति भाव इति बोध्यम् । सा तर्हि चेति भाष्ये साधनपदेन किं भवानमन्यत इत्यर्थः ।

ननु तस्या अपि शक्तेरप्रत्यक्षत्वात्समुदायग्रहणं व्यर्थमत आह–समुदायेति । नित्याऽनुमेयत्वादिति । तत्रत्याऽतीन्द्रियत्वाद्बोध्यम् । ननु तण्डुलोदकदर्शनकाले पाकस्य भूतत्वाऽभावात्कथं लिट्प्रयोगोऽत आह–इहाऽपीति । साधनस्य–तच्छक्तया श्रयस्य । स्वरूपस्यति । स्वरूप शक्तिस्तदाश्रितरूपस्येत्यर्थः । 'सरम्भ' शब्दोऽर्श आद्यजन्तः । 'पपाचेति युक्त मिति पाठः । भाष्ये–'स्थालीसंस्काराः फूत्काराश्च'ति पाठः । क्रियाकृतविशेषप्रत्यक्षत्वेऽपीति । अपिना साधनप्रत्यक्षत्वेऽपीत्यर्थः । इन्द्रियाऽगोचरसाधनेति । तत्र क्रियाकृतविशेषस्थालीसंस्कारादिविशिष्टस्य सरब्ध रूपस्य चेन्द्रियाऽगोचरत्वं बोध्यम् । चित्तव्याक्षेपस्थले उत्तमाऽसिद्धाविष्टापत्ति सूचयन् चित्तव्याक्षेपे तदुदाहरणमाह भाष्ये–सुप्तेति । जागरेऽमत्तत्वेऽपि पारोक्ष्य

१ इदं क्वचित् । २ 'स्थालीसंस्काराः' । ३ 'प्रयुङ्क्ते' ।

यद्यविशेषेण किं कृतं भवति। न स्मपुराद्यतन इति वक्तव्यमनेनेह॥ ॥ लादिविधिः पुरान्तो यद्यविशेषेण भवति किं वार्तिककारः प्रतिषेधेन करोति—न स्मपुराद्यतन इति॥ ॥ अनुवृत्तिरनद्यतनस्य लट् स्म इति तत्र नास्ति न वार्तम्॥ ॥

लट् स्म इत्यत्रानद्यतन इत्येतदनुवर्तिष्यते ॥ ॥ अपरोक्षेऽनद्यतने ननौ च नन्वोश्च विनिवृत्तौ॥ न पुराऽद्यतन इति भवेदेतज्ज्ञापकम्—॥ ॥ अत्रैतावद्वक्तव्यं स्यान्न पुराद्यतन इति॥ ॥—तत्र चापि लुङ्ग्रहणम्॥ ॥ तत्र चापि लुङ्ग्रहणं ज्ञापकं न पुरालक्षणोऽद्यतने भवतीति ॥ ॥ अयं बुद्धिरविशेषात्स्मपुरा हेतुः—॥ ॥

प्र ]एतन्नरस्मिन् वार्तिके स्मपुराशब्दानुवर्तनक्षणमेतन्नाथय यदी। तत्र पूर्वस्मिन् परस्मिन् वा विशेषणमस्य पृच्छति । इतरो वार्तिकमन्याख्यानाय मया विवक्षितमेतदित्याह—स्मादिविधिरिति । लट् स्मे, अपरोक्षे च, पुरि लुङ् चास्मे इत्येतेषु योगेष्वनद्यतनग्रहणमनुवृत्तेस्तस्यार्थस्य सिद्धत्वात् स्म पुराद्यतन इति वार्तिकं न कर्तव्यमित्यर्थः । यदि 'लट् स्म'इत्यत्रानद्यतनग्रहणमनुवर्तते तदा 'ननौ पृष्टप्रतिवचने' 'नन्वोर्विभाषे'त्यनयोरप्यनुवर्तेतेत्यत आह—अपरोक्षानद्यतनाविति । तेन भूतमात्रे एताभ्यां योगाभ्यां विधिरित्यर्थः । पुरि लुङ् चास्मे इत्यत्राप्यनद्यतनग्रहणनिवृत्तौ भूतमात्रे विधिः प्राप्नोतीत्याह—न पुरेति । तत्रेति । पुरि लुङ् चास्मे इत्यत्रानद्यतनग्रहणमनुवर्त्य इत्येतल्लुङ्ग्रहणेन ज्ञाप्यते । यदि तु भूतमात्रेऽयं विधिः स्यात्तदा 'नन्वोर्विभाषे'त्यतो विभाषाग्रहणानुवृत्त्या विकल्पेन लटो विधानात् पक्षे लुङ् भविष्यति किं लुङ्ग्रहणेन । अनद्यतनानुवृत्तौ तु लुङ्ग्रहणमन्तरेण पक्षे लुङ् लभ्यते, लङ् बाधितत्वादिति भावः । अयं बुद्धिरिति । लट् स्मे पुरि लुङ् चास्मे इत्येतावद्यन्तौ योगौ यदि भूतमात्रे भवत इत्यर्थः । स्मपुराहेतू इति । स्मपुराशब्दौ प्रत्ययोत्पत्तेर्निमित्ते इत्यर्थः ।

उ.]मध्यमौ योगौ लभ्येते इति।आद्यन्ताभ्यां पदसूत्राभ्यामेवपि सूत्रद्वये 'भूतमात्रे' इति विशेषोऽरेमध्यमयोरेवेतल्लभ्यमित्याशयेनेदमुक्तं। ननावेति नन्वोरिति च मध्यमौ योगौ । इति प्रश्न इति । तत्र विनिगमनाऽभावादिति भावः । भाष्ये—स्मायर्थमिति । अनद्यतनविज्ञानो बहुव्रीहिरिति बोध्यम् । विशेषणमस्यायमिति । अक्षरन्यूनवाक्यस्वरूपं विनिगमकमित्यर्थः । अन्यथा पदविशेषस्य स्पष्टतया तदग्रहणे स्पष्टैव। अपरोक्षाऽनद्यतनाविति । 'अपरोक्षे चे'ति सूत्रस्थनपरोक्षग्रहणमिति बोध्यम् । एतच्च तन्निवृत्तिरिव 'अनद्यतन' इत्यस्याऽपि निवृत्तिर्निष्प्रतीति निषेधवार्तिकव्यर्थेत्याशय । तन्निवृत्तौ न क्षतिरित तदाह—नेनेति । इत्यत्राऽनद्यतनमेनेति । मण्डूकप्लुत्येति भावः । ज्ञापकमुपपादयति—यदि त्विति । द्वितीयपक्षेऽपि

१ अवक्तव्यमिदम् । २ 'इत्यत्र' ।

अथ बुद्धिरियमविशेषेण स्मपुरा हेतू इति ।

॥५॥ तत्र चापि शृणु भूयः ॥ अपरोक्षे चेत्येष प्राक् पुरि सशब्दनाद्विनिवृत्तः ॥
सर्वत्रानद्यतनस्तथा सति नष्ट इतिमिह कार्यम् ॥
स्मादावपरोक्षे चेत्यनार्थमिति[2] शक्यमेतदपि विद्धि ॥
शक्यं हि निवर्तयितुं परोक्ष इति लट् स्म इत्यत्र ॥
स्यादेषा तव बुद्धिः स्मलक्षणेऽप्येवमेव सिद्धमिति ।
लट् स्म इति भवेत्कार्यं तस्मात्तत्र परार्थं तु ॥४॥
एवं तर्हि ज्ञापयत्याचार्यः 'स्मलक्षणं पुरालक्षणं चानद्यतने भवति' इति॥
[ ॥६॥ स्मादिविधिः पुरान्तो यद्यविशेषेण किं कृतं भवति ।
न स्म पुराऽद्यतन इति ब्रुवता कात्यायनेनेह ॥१॥
अनुवृत्तिरनद्यतनस्य लट् स्म इति तत्र नास्ति नञ्कार्यम् ।
अपरोक्षानद्यतनौ ननौ च नन्वोश्च निवृत्तौ ॥२॥
न पुराऽद्यतन इति भवेदेतद् द्वाभ्यं तत्र चाऽपि तद्ग्रहणम् ।
अथ बुद्धिरविशेषात्स्मपुरा हेतू तत्र चापि शृणु भूयः ॥३॥

---

प्र ] तत्रचापीति। अयमर्थः। न स्म पुराऽद्यतन इत्यत्र निषेधो यद्यप्यतीतपरिक्षिप्तमध्यम योगविषयस्तदा न कर्तव्य एव। अपरोक्षग्रहणं ननौ पृष्टप्रतिवचने नन्वोर्विभाषे-त्यत्राप्यनुवर्तिष्यते, तदनुवृत्त्याऽनद्यतनग्रहणानुवृत्तिरनुमास्यते। यस्मादपरोक्षानद्यतन यो प्रकृतत्वेऽन्यतरनिवृत्तिर्यत्नेन क्रियमाणा द्वितीयस्याऽनुवृत्तिमनुमापयति। अप-रोक्षग्रहणेन हि परोक्षाधिकारो निवर्त्यते। यथाऽद्वन्द्वग्रहणं द्वन्द्वाधिकारग्रहणनिवृत्त्य-र्थमित्युक्तम्॥ इदानीमपरोक्षे चेत्येतत् सूत्रं प्रत्याख्यातुमाह—स्मादावित्ति। स्मादि-ग्रहणेन स्मादिविधिः पुरान्त इत्येष पक्षो लक्ष्यते। लट् स्म इत्यादिसूत्रेषु परोक्ष ग्रहणस्य निवृत्तत्वादपरोक्ष चेत्येतत्सूत्रं न कर्तव्यमित्यर्थः। इदानीमाचार्यः सूत्र समर्थयितुमाह—स्यादेवेति। यदि त्वं मन्यसे लट् स्म इत्यत्र परोक्षग्रहणनिवृत्तौ

उ ] वैयर्थ्यमुपपादयति भाष्ये—अथ बुद्धिरिति। भूतमात्रे त्वं 'स्म' 'पुरा' शब्दौ हेतू इत्यर्थः। निवर्त्यत इति। 'लट् स्मे' इत्यत्र परोक्षाऽनद्यतनयोर्निवृत्त्या स भूतमात्रे सिद्धः। एवञ्च 'अपरोक्षे' इत्यस्याऽयमर्थः,—उत्तरसूत्रद्वये 'परोक्षे' इति निवृत्तमिति। तेन तत्र अनद्यतनाऽनुवृत्तिर्भवतीत्युत्तरवार्तिकं व्यर्थमेवेति भावः। प्रत्याख्यातुमाहेति। 'प्रथमपक्ष' इति शेषः। प्रथमपक्षे लाघवेन स एव पक्षः परिग्राह्य इति बोधयितुमिति भावः। इदानीमिति। तत्पक्षस्यैव ज्ञापकतया सूत्रं

---

१ इदं प्रायो लुप्तम्। २ 'कार्यमपि शक्यमेतदिति'। ३ इमानि श्लोकवार्तिका-न्यन्ते भाष्यशैल्या पाठ्यान्यपि सर्वत्र लुप्तानीति गौडाः। ४ 'दैव तद्वाच्य'।

अपरोक्षे चेल्लेष प्राक्पुरिमिशब्दनादवेनिवृत्तः ।
सर्वज्ञानद्यतनस्तथा सति ननु त्रिनिह कार्यम्[१] ॥४॥
स्मादावपरोक्षे चेल्लक्ष्यमिति वाक्यनेनदपि विद्धि ।
वाक्यं हि निवर्तयितुं परोक्ष इति लट् स्म इत्यत्र ॥५॥
स्यादेषा तव बुद्धिः स्मलक्षणेऽप्येव सिद्धमिति ।
लट् स्म इति भवेत्सार्थस्तस्मात्तावत् पर्यन्तु ॥६॥ ॥*॥ ]

ननौ पृष्टप्रतिवचने ॥ ३।२।१२० ॥

॥*॥ननौ पृष्टप्रतिवचन इत्यशिष्य क्रियाऽसमाप्तेर्विवक्षितत्वात्॥*॥'ननौ पृष्टप्रतिवचन' इत्यशिष्यो लट् ॥ किं कारणम्?॥ 'क्रियाऽसमाप्तेरविवक्षितत्वात्'। क्रियाया अत्राऽसमाप्तिर्विवक्षिता । एषो नाम न्याय्यो वर्तमानः कालो यत्र क्रियाया असमाप्तिर्भवति, तत्र 'वर्तमाने लट्' इत्येव सिद्धम् ॥ यदि 'वर्तमाने लट्' इत्येव लड्भवति शतृशानचौ प्राप्नुतः ॥ इष्येते शतृशानचौ । ननु मां कुर्वन्तं पश्य । ननु मां कुर्वाणं पश्येति ॥ [ ननौ पृष्टप्रतिवचने ] ।

प्र ]मन्यां परोक्षे चापरोक्षे च लट् भविष्यतीति नार्थोऽपरोक्षे चेत्येन सूत्रेणेति भावः। यस्मादपरोक्षग्रहणमनद्यतनानुवृत्तिज्ञापनार्थं कर्तव्यम् । लट् स्म इत्ययं योगः परोक्षानद्यतने वर्तते । यदि तत्र परोक्षग्रहणं निवर्तेत तदा तत्संबद्धमनद्यतनग्रहणमपि निवर्तेत। तस्मादपरोक्षे चेति सूत्रारम्भाल्लट् स्मे इत्ययं योगः परोक्षानद्यतनविषयः, अपरोक्षे चेत्ययमपरोक्षानद्यतनविषयः, 'पुरि लुङ् चास्मे' इत्ययं तु लुङ्लडनद्यतनविषयः, सप्तमी तु भूतमात्रविषयाविति सूत्रेणैव व्यवस्थायाः सिद्धत्वात्। अर्थो वार्तिकारम्भेणेत्यर्थः । ननौ पृष्टप्रतिवचन इत्ययं च योगो येन नाप्राप्तिन्यायेन लुङो बाधकः, परत्वेन लिङ्टो । [ लट् स्मे ] ॥

ननौ पृष्ट । असमाप्तिरिति । निवृत्तायामपि पाकादिक्रियायां तत्कृतस्य धर्मादेरनुवर्तनात्तस्या एवाऽसमाप्तिविवक्षया लडिह इत्यर्थः । 'इष्येते' इत्यनेन प्रत्याख्यानं दर्शयति । यदि हि भूतार्थो लट् क्रियेत तदा वर्तमानाधिकाराद्वर्तमाने

च.]मनर्थयितुमित्यर्थः ।सप्तमी त्विति।'परोक्ष'ग्रहणस्याऽपरोक्षग्रहणस्य च निवृत्तौ तत्सहचरितानद्यतनग्रहणस्याऽपि निवृत्तेरिति भावः । भाष्ये—एवन्तर्हि ज्ञापयत्याचार्यः, स्मलक्षणः पुरालक्षणश्चाऽनद्यतने इति । तत्र स्मलक्षणे इदं ज्ञापकम्, पुरालक्षणे तु लुङ्ग्रहणमिति विवेको बोध्यः । नन्वेवं 'ननु'योगेऽनद्यतने लिङ्टौ स्याताम्, तस्या येन नाप्राप्तिन्यायेन तद्बाधाऽयोगादत आह—नत्वादिति ।

ननौ पृष्ट।असमाप्तिविवक्षया हेतुमाह—तत्कृतस्य धर्मादेरिति। प्रत्याख्यान-

१ 'एव एवं' । २ 'चौ च प्रा' ।

## पुरि लुङ् चास्मे ॥ ३।२।१२२ ॥

॥*॥ हशश्वद्भ्यां पुरा ॥*॥ हशश्वल्लक्षणात्पुरालक्षणो भवति विप्रतिषेधेन । हशश्वल्लक्षणस्यावकाशः —इति हाऽकरोत् । इति ह चकार । शश्वदकरोत् । शश्वच्चकार । पुरालक्षणस्यावकाशो—रथेनाथ पुरा याति । रथेनाथ पुराऽयासीत् । इहोभयं प्राप्नोति—रथेन ह शश्वत्पुरा याति । रथेन ह शश्वत्पुराऽयासीत् । पुरालक्षणो भवति विप्रतिषेधेन । ॥*॥ स्म सर्वेभ्यो विप्रतिषेधेन ॥*॥ स्मलक्षणः सर्वेभ्यो भवति विप्रतिषेधेन, हशश्वल्लक्षणात्पुरालक्षणाच्च । हशश्वल्लक्षणस्यावकाशः —इति हाकरोत्, इति ह चकार । शश्वदकरोत् शश्वच्चकार । पुरालक्षणस्यावकाशः —रथेनाथ पुरा याति । रथेनाथ पुराऽयासीत् । स्मलक्षणस्यावकाशः —धर्मेण स्म कुरवो युध्यन्ते । इह सर्वं प्राप्नोति—न ह स्म वै पुरा शश्वदग्निरपरशुवृक्णं दहति । स्मलक्षणो भवति विप्रतिषेधेन । [ पुरि लुङ् ] ॥

## वर्तमाने लट् ॥ ३।२।१२३ ॥

॥*॥ प्रवृत्तस्याऽविरामे शिष्या भवन्त्यवर्तमानत्वात् ॥*॥ प्रवृत्तस्याऽविरामे शासितव्या—भवन्ती । इहाधीमहे । इह वसामः । इह पुष्यमित्रं याजयामः इति ॥ किं पुनः कारणं न सिध्यति ? ॥ 'अवर्तमानत्वात्' ॥*॥ नित्यप्रवृत्ते च कालाऽविभागात् ॥*॥ नित्यप्रवृत्ते च शासितव्या भवन्ती । तिष्ठन्ति पर्वताः ।

---

प्र ]निहितस्य लटो विधीयमानौ शतृशानचावस्य लटो न स्याताम् । अथ पृष्टग्रहणं किमर्थं यावता प्रश्नपूर्वकमेव प्रतिवचनं भवति[1]। नैतदस्ति। विरुद्धमपि वचनं, वचनाभिमुख्यमपि तथा, वचनं वचनं प्रति प्रतिवचनमित्यनेकार्थसंभवात् पृष्टग्रहणं कर्तव्यम्।

पुरि लुङ् । स्म सर्वेभ्य इति । परविप्रतिषेधेन पूर्वविप्रतिषेधेन च । स तथा पुरि लुङ् चाऽस्मे इत्यत्र 'अस्मे' इति न वक्तव्यं भवतीति भावः ॥[पुरि लुङ्]॥

वर्तमाने। प्रवृत्तस्येति । इहाधीमहे इत्यध्ययनं प्रवृत्तं प्रारब्धं, न च तद्विरतम् । यदा च भोजनादिकां क्रियां कुर्वन्तो नाधीयते तदाऽधीमहे इति प्रयोगो न प्राप्नोतीति वचनम् । भवन्तीति,—लटः पूर्वाचार्यसंज्ञा । नित्यप्रवृत्ते चेति ।

---

उ ]मिति। सूत्राऽऽरम्भे इष्टाऽसिद्धेरिति भावः । 'ननु'शब्दयोगे लुङ्लिङ्गमनभिधाना माश्रयणीयमिति तात्पर्यम् । [ ननौ पृष्ट ] ।

पुरि लुङ् । पूर्वविप्रतिषेधेनेति । 'पुरि लुङ् चाऽस्मे' इत्यत्र स्मे लडित्यतः पूर्वं इति भावः । ननु 'अस्मे' इत्युक्ते स्मयोगे 'पुरि लुङ्' इत्यस्याऽप्राप्ते कथं विप्रतिषेधोऽत्र आह—तत्तश्चेति । [ पुरि लुङ् ] ।

वर्तमाने । ननु प्रवृत्तं न च विरतमथ च न वर्तमानमिति विरुद्धमत आह—

---

१ इदं वार्त्तिकम् । २ श्लोकवार्त्तिकम् । ३ 'भवन्ती'ति ।

स्रवन्ति नद्य इति॥ किं पुनः कारणं न सिध्यति?॥ 'कालाविभागात्'। इह भूतभविष्यत्प्रतिद्वन्द्वो वर्तमानः कालः, न चात्र भूतभविष्यन्तौ कालौ स्तः। ॥*॥ न्याय्या त्वारम्भानपवर्गात् ॥*॥ न्याय्या त्वेषा वर्तमानकालता॥ कुतः?॥ 'आरम्भानपवर्गात्'। आरम्भोऽत्रानपवृक्तः। एष नाम न्याय्यो वर्तमानः कालो यत्रारम्भोऽनपवृक्तः ॥*॥ अस्ति च मुक्तसंशये विरामः ॥*॥ [ अस्ति च मुक्तसंशये विरामः ], य खल्वपि भवान्मुक्तसंशयं वर्तमानकालं न्याय्यं मन्यते भुङ्क्ते देवदत्त इति, तेनैतत्तुल्यम्। सोऽपि ह्यवश्यं भुञ्जानो हसति वा जल्पति

प्र.] 'पर्वताः स्तिष्ठन्ती'त्यादौ स्थानादेः सर्वदा सद्भावात्साध्यत्वाभावात्क्रियात्वाभावात्तद्वर्तमानत्वस्याप्यभाव इति भावः। भूतेति। साध्यस्यार्थस्यानित्यत्वादवश्यं भविष्यत्त्वेन भाव्यम्। उत्पन्नस्यापि नाशाद्भूतत्वेनेति भूतभविष्यत्प्रतिद्वन्द्वो वर्तमानो धात्वर्थः, नित्यप्रवृत्तस्य भूतभविष्यत्त्वाऽभावाद्वर्तमानत्वाऽभावः, क्रियात्वस्याऽभावश्चेत्यर्थः। न्याय्या त्विति। अध्ययनं यदा प्रवृत्तं न चोपरतं तदा तस्य भोजनादिक्रियानान्तरीयकत्वादव्यवधायिका। अथ वाऽध्ययनस्यैवावयवक्रियेति भावः। तदुक्तं हरिणा—'व्यवधानमिवोपैति निवृत्त इव दृश्यते। क्रियासमूहो भुज्यादि-

उ.] रित्यादि। न च तद्विरतमिति। सर्वथा न समाप्तमित्यर्थः। क्रियारूपत्वाऽभावादिति। भूतभविष्यद्वर्तमानव्यवहारविषयत्वस्वभावत्वात्तस्या इति भावः। त्रिविधव्यवहारविषय एव हि साध्यत्वमित्यभिमानः। ननु विद्यमानकालसंबन्धित्वरूपं वर्तमानत्वमसाध्यस्यापि सम्भवतीत्यतो भाष्ये—भूतेत्यादि। तथाचष्टे—साध्यस्येति। अनित्यत्वात्—वर्तमानप्रागभावप्रतियोगित्वात्। उत्पन्नस्याऽपीति। 'भावस्ये'ति शेषः। तेन ध्वंसस्याव्याप्तिरिति केचित्। वस्तुतो ध्वंसस्याऽपि प्रलयेऽदर्शनरूपो नाशोऽस्त्येव, न ह्यभावनाशः प्रतियोगिरूप एवेति नियमः, अधिकरणरूपत्वादेरिति परे। प्रतिद्वन्द्व इति। प्रतियोगिसत्ताकाले तयोरसम्भवात्तद्विरोधि वर्तमानत्वमिति भावः। वर्तमानत्वाऽभाव इति। भूताऽऽदिविरोधिवर्तमानत्वाऽभाव इत्यर्थः। तादृशमेव वर्तमानत्वं सूत्रे विवक्षितम्, पूर्वं 'भूते' इत्युक्तेः, अग्रे च 'भविष्यती'ति वक्ष्यमाणत्वादिति भावः। क्रियारूपत्वाऽभावश्चेति। यतो भूतभविष्यद्विरोधिवर्तमानत्वाऽभावोऽतः क्रियात्वाऽभाव इत्यर्थः। तदुक्तम्—'क्रियाभेदाय कालस्तु सङ्ख्या सर्वस्य भेदिका'। इति। भाष्ये—आरम्भोऽत्रेति। कर्मणि घञ्। आरब्ध इत्यर्थः। अथवाऽध्ययनस्यैवेति। भोजनादिकं विना तदनिर्वाहात्तदवयवत्वेनैव तस्या ग्रह इति भावः। व्यवधानमिवेति। अव्यवधायकोऽपि व्यवधान-

१ 'एव एव च नान'। २ इद लुप्तं स्यात्।
३ 'वर्तमान काल'। ४ 'मन्येत'। ५ 'भुज्यादि'।

वा पानीयं वा पिबति । यद्यत्र युक्ता वर्तमानकालता दृश्यते इहापि युक्ता दृश्यताम् ॥*॥ सन्ति च कालविभागाः ॥८॥ सन्ति [ च ] खल्वपि कालविभागाः । तिष्ठन्ति पर्वताः स्थास्यन्ति पर्वतास्तस्थुः पर्वता इति॥ किं शक्यन्त एते शब्दाः प्रयोक्तुमित्यत सन्ति कालविभागाः ? ॥ नावश्यं प्रयोगा देवाः इह हि भूतभविष्यद्वर्तमानानां राज्ञां याः क्रियास्तास्तिष्ठतेरधिकरणम् । इह तावत्तिष्ठन्ति पर्वता इति,–सम्प्रति ये राजानस्तेषां याः क्रियास्तासु वर्तमानासु । स्थास्यन्ति पर्वता इति,–इत उत्तरं ये राजानो भविष्यन्ति तेषां याः क्रियास्तासु भविष्यन्तीषु । तस्थुः पर्वता इति,–इह हि ये राजानो बभूवु

प्र ]रन्तरालप्रवृत्तिभिः ॥ न च विच्छिन्नरूपोऽपि सोऽविरामान्निवर्तते । सर्वैव हि क्रियाऽन्येन सङ्कीर्णैवोपलभ्यते ॥ तदन्तरालदृष्टा या सर्वैवावयवक्रिया । सादृश्यात्सति भेदे तु तदङ्गत्वेन गृह्यते' । इति । 'नित्यप्रवृत्तस्य चे'त्यस्योत्तर सन्तीति । इहेति । प्रसिद्धपरिमाणा क्रियैव क्रियान्तरपरिच्छेदात्काल इत्युक्तम् । तत्र राज्ञां स्थितिर्भूतादिभेदेन भिन्ना पर्वतादिस्थित्यादेर्भेदिकेति क्रियारूपस्य कालत्रययोगश्चोपपन्न इत्यर्थः । उक्तञ्च हरिणा–'परतो भिद्यते सर्वमात्मा तु न विकल्पते । पर्वतादिस्थितिस्तस्मात्पररूपेण भिद्यते ॥ प्रसिद्धभेदा व्यापारा विरूपावयवस्य क्रिया । साहचर्येण भिद्यन्ते सरूपावयवक्रिया ॥' इति ॥ ता इति । तासामेव

उ. ]मिव प्राप्नोति, अनिवृत्तोऽपि निवृत्त इव दृश्यत इत्यर्थः । अन्तरालप्रवृत्तिभि –हासादिभि । अविरामात्–फलनिर्वृत्त्या विरामस्याऽभावात् । विच्छिन्नरूपोऽपि–विच्छिन्न इव भासमानोऽपि, फलानिर्वृत्तेर्न निवर्तते–सर्वथा न निवर्तत इत्यर्थः । सङ्कीर्णैवेति । तथा च नान्तरीयकत्वात्तासां न व्यवधायकत्वमिति भावः । पक्षान्तरमाह–तदिति । तन्मध्यदृष्टा सर्वा तदवयवक्रियैवेत्यन्वयः । एवञ्च स्वाऽवयवक्रिया यथा स्वस्या न व्यवधायिकास्तथेमा अपीत्यर्थः । एवञ्चाऽत्र पक्षे भोजनाद्यप्यध्ययनशब्दार्थत्वेनाभिनामिति तात्पर्यम् । ननु कथं तदवयवत्वेन ग्रहोऽत आह–सादृश्यादिति । तत्फलनिर्वाहकत्वेनेत्यर्थः । सतिभेदे त्विति । तुरप्यर्थे । अत्यन्तभिन्नाया अपि क्रियाया मध्यपातिनया तदङ्गत्वेन ग्रहात्साऽत्र न व्यवधायकमिति भावः ।

भाष्ये–नाऽवश्यमिति । किन्त्वर्थसत्त्वादपीत्यर्थः । ननु कालः क्रियाऽधिकरणं, न तु क्रियाऽत आह–प्रसिद्धेति । वस्तुनोऽनवस्थापत्त्या चिन्त्यमिदम् । भाष्ये 'क्रिया'पदेन तदधिकरणकालो लक्ष्यत इति वक्तुमुचितम् । तिष्ठतेरिति । तत्तत्क्रियाविशिष्टतिष्ठतेरित्यर्थः । क्रियारूपत्वमिति । तत्तद्राजक्रियासमानाऽधिकरणपर्वतादिस्थित्यादेरित्यर्थः । यत कालत्रययोगोऽत क्रियारूपत्वमित्यर्थः । आत्मा–द्रव्यम् ।

१ इदं क्वचित्र । २ 'हैहयेषु राजानो' ।

स्तोका याः क्रियास्तास्ववर्तमानासु[1] ॥

अपर आह,[2]—नास्ति वर्तमानः काल इति॥ अपि चात्र श्लोकानुदाहरन्ति[3]॥

'न वर्तते चक्रमिषुर्न पात्यते न स्यन्दन्ते सरितः सागराय ।
कूटस्थोऽयं लोको न विचेष्टितास्ति यो ह्येवं पश्यति सोऽप्यनन्धः ॥

प्र ] कालरूपत्वात्कालस्य च क्रियाधिकरणत्वादिति भावः । नास्तीति । निष्पन्नस्यार्थस्य भूतत्वादनिष्पन्नस्यार्थस्य भावित्वान्निष्पन्नाऽनिष्पन्नव्यतिरेकेण रूपान्तरस्याऽभावः । न वर्तत इति । परिवर्तनक्रियाया वर्तमानाया अभावादिति भावः । कूटस्थ इति । स्वरूपस्थो न तु वर्तमानक्रियाविशिष्ट इत्यर्थः । अत एवाह—न विचेष्टितेति । व्यापारस्य न कर्तेत्यर्थः । एवं यो वेत्ति सोऽप्यनन्धः—किं पुनर्योऽनुष्ठाता योगीत्यर्थः । स ह्यविकृतमात्मानमेव भावयन्प्रत्यक्षीकरोति । तथा चोक्त

उ ] न विरमन्त इति । न स्वरूपेण भिन्ना इत्यर्थः । विरूपाऽवयवक्रिया व्यापाराः प्रसिद्धभेदा न तु साध्यभेदा इत्यर्थः । स्वरूपाऽवयवक्रियास्तु गिरिस्थित्यादयो रातक्रियादि साहचर्येण भिद्यन्त इत्यर्थः । साहचर्यमत्र कल्पयन्तीति बोध्यम् । तासामेवेति । अत्र यद्वक्तव्यं तदुक्तम् । क्रियाकारणत्वादिति । आधारतयेति भावः । 'क्वचित्क्रियाऽधिकरणत्वा'दित्येव पाठः । इदानीं क्षणभङ्गवादी सूत्रमाक्षिपतीत्याह—अपर आह नास्तीति । वर्तमानकालक्रिया नास्तीत्यर्थः । एवञ्च क्षणभङ्गुरे पदार्थमात्रे क्रियाश्रयत्वाऽसम्भवात्क्रियायाः भूतभविष्यत्प्रतिद्वन्द्विवर्तमानत्वाऽभावेन कालविभागाऽनवगते 'वर्तमाने लट्' इति सूत्रमसङ्गतमिति भावः । तद्भाष्यं व्याचष्टे—निष्पन्नस्येति । रूपान्तरस्याऽभाव इति । प्रतिक्षणनश्वरत्वाद्वर्तमानक्रियाश्रयस्याऽभावेन सर्वथा वर्तमानत्वाऽभाव इति भावः । अतीताऽनागतानां तत्त्वादेव न वर्तमानत्वेन व्यवहारप्रयोजकता, क्रियां प्रति द्रव्यस्य समवायिकारणतयोत्तरक्षणे क्रिया वाच्या, तत्तु न, उत्तरक्षणेऽन्यस्यैव भावादिति तात्पर्यम् । तदुपपादयति भाष्ये—अपि चाऽत्रेत्यादिना । 'वर्तते चक्र'मित्यादिर्वर्तमानप्रयोगो निरालम्ब इत्यर्थः । तदाह—परिवर्तनेति । अत्र 'विचेष्टिता लोको नास्ती'त्यनेन दृश्यस्य क्षणभङ्गुरता सूचिता । यद्यप्ययं श्लोकः—'क्रियाश्रयो नात्मा, यतोऽयं कूटस्थोऽपरिणामीत्यर्थः, नाऽपि लोको दृश्यः पदार्थः, यतो दृश्यचेष्टाश्रयः स्थिरो नास्ति, प्रतिक्षणपरिणामित्वात्पदार्थानामिति संसाराऽनित्यत्वाऽतिशयबोधकः, तथापि आपातार्थमादाय क्षणभङ्गवादिना स्वसाधकत्वेनोपन्यस्तः । एवं यो वेत्तीति । यथावस्थितं जानातीत्यर्थः । 'अपि'द्योत्यमर्थमाह—किम्पुनरिति । सर्वदा तथाभावनावानित्यर्थः । एवञ्च तत्कृते क्रियाराहित्यज्ञानवानपि योगितुल्यः, अत्यन्ताऽस्थिरत्वस्य दृश्येषु

१ 'तासु भूतासु' । २ 'अपर आहुः' । ३ 'हरन्ति' ।

मीमांसको मन्यमानो युवा मेधाविसम्मतः ।
काकं स्मेहाऽनुपृच्छति 'किं ते पतितलक्षणम्' ॥
अनागते न पतसि अतिक्रान्ते च काक न ।
यदि संप्रति पतसि सर्वो लोकः पतत्ययम् ॥'

हिमवानपि गच्छति ॥

'अनागतमतिक्रान्तं वर्तमानमिति त्रयम् ।
सर्वत्र च गतिर्नास्ति गच्छतीति किमुच्यते' ?॥

---

प्र ]भगवता–'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः । तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्'॥ इति । मीमांसक इति । विचारकः । युवेत्यनेन प्रज्ञापाटवं दर्शयति । मेधाविसम्मत इति । मेधावी चासौ सम्मतश्चेति विशेषणसमासः । षष्ठीसमासस्य तु 'क्तेन च पूजाया'मिति निषेधात् । पतितलक्षणमिति । पातः पतितं । तस्य किं रूपं, नास्त्येव पतनक्रियेत्यर्थः । अनागत इति । अनागतत्वादेवाऽसत्त्वात् पातक्रियाया 'पतसी'ति व्यपदेशोऽनुपपन्न इत्यर्थः । अतिक्रान्त इति। तत्रैव क्रियाया असत्त्वात् । सर्वो लोक इति । क्रियाया वर्तमानत्वाभावेऽपि यदि 'पतसी'ति व्यपदेशस्तदा विशेषाऽभावात् पर्वतादावपि 'पतसी'ति व्यपदेशप्रसङ्ग इत्यर्थः । अनागतमिति । एक एव क्षण उपलभ्यते, नातीतोऽनाप्यनागतो,

---

उ ]महान्, आत्मन्यपरिणामित्वस्थिरत्वप्रकाशत्वयुक्तं भवति । अविकृतमात्मतत्त्वम्–अपरिणाम्यात्मतत्त्वम् । स हि तथा जडं भासयन् तत्कारणतयाऽविकृतमात्मतत्त्वं प्रत्यक्षीकरोतीत्यन्वयः । अत्रैवाऽर्थे सम्मतिमाह–तथाचेति । प्रकृतिपुरुषविवेकादेव हि तथा साक्षात्कार इति योगशास्त्रीयो सिद्धान्तः । अथ पदार्थानां स्थिरत्वेऽपि वर्तमानकालाऽभावमुपपादयति भाष्ये–मीमांसक इति । मन्यमानः–आत्मानं विचारकं मन्यमान इत्यर्थः । सम्मतश्चेति । अर्थान्मेधाविनामेवेति गम्यते । पृच्छति स्म–पप्रच्छ । लट् स्मे इति लट् । भाष्ये 'ऽतिक्रान्ते च न पतसी'त्यन्वयः । काकपर्याय'वायस'शब्दस्य 'काके'ति संबोधनम् । सम्प्रति–प्रयोगकाले वर्तमानत्वाऽभावेऽपीति । क्रियाया वर्तमानत्वाऽभावेऽपि यदि 'पतसी'ति व्यवहारस्तदाऽयं सर्वो लोकः पततीति व्यवहारविषयः स्यादित्यर्थः । तदाह–हिमवानपीत्यादि । भाष्यस्य 'व्यवहारः स्या'दिति शेषः । अयं भावः,–त्रिक्षणस्थायिन्या अपि क्रियाया अतिसूक्ष्मत्वादिन्द्रियप्रत्यक्षत्वाऽसम्भवेनाऽज्ञानेन च व्यवहाराऽसम्भवो, ज्ञानेन च व्यवहारेऽतिप्रसङ्ग इति । उक्तमेवाऽर्थं दर्शयति–अनागतमिति । एक एव क्षण उपलभ्यत इति । उपलम्भयोग्यो भवितुमर्हतीत्यर्थः । न चैकस्येति । एकक्षणवर्ती पदार्थगतनिरवयवो ज्ञानयोग्यः सम्भवतीत्यर्थः । ननु कालवाचक-

'क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद्विचेष्टितम् ।
तत्समीक्ष्य प्रयुञ्जीत गच्छतीत्यविचारयन्' ॥

प्र.]न चैकस्य क्षणस्य गमनादिक्रियावेशः सम्भवतीति भावः। सर्वत्रेति। चलकृतित्वा-ऽविवक्षया दाष्टान्तयो न कृत । क्रियाप्रवृत्ताविति—परिहारः । हेतुः प्रयोजनं, गमनस्य देशान्तरप्राप्तिः तदर्थं फलार्थमित्यर्थ । इह प्रत्यभिज्ञानात् क्षणभङ्गनिराकरणे देवदत्तस्य देशान्तरप्राप्तिर्निर्हेतुका न संभवतीति गमनक्रियैव तस्या निमित्तम् । तदालम्बनश्च गच्छतीति प्रत्ययोऽबाधित उत्पद्यत इति सत्त्वं तावदवगम्यते क्रियाया । वर्तमानत्वाऽभावे च भूतभविष्यतोरप्यभावप्रसङ्ग, वर्तमानो हि भूतत्वं भविष्यत्त्वञ्च प्रतिपद्यते । तत्राऽनेकक्षणसमूहात्मकं क्रियाप्रबन्धरूपं बुद्ध्या सङ्कल्प्य गच्छतीत्यादिप्रयुञ्जत इत्यर्थ । अविचारयन्निति । युक्तिरन्यत्रालङ्कारेणेत्यर्थः ।

उ.]त्वात् 'सदे'ति भाष्यमत आह—कालेति। भाष्ये 'सर्वत्रे'त्यस्य 'काले'इति शेष । सर्वत्र गतिर्नास्तीत्यस्योपलब्धियोग्या नास्तीत्यर्थ । अनुपलब्धिप्रमाणाच्च तदभावनिश्चय इति भाव । क्षणभङ्गवादेनाऽत्र पर्यवसानं तु न युक्तं, तस्य 'मेधाविनंनर' इति विशेषणाऽनुपपत्ते । 'यदि सम्प्रती'त्यादेरुत्तरत्र उक्तिसम्भवाऽभावाच्च । इदानीं सिद्धान्तमाह—क्रियाप्रवृत्ताविति भाष्ये । क्रियाऽऽरम्भे यो हेतुः प्रयोजकः, फलं, तदर्थं—यद्विचेष्टितं क्रियासमूहस्तदनुकूलत्वेन समीक्ष्य—बुद्धिविषयीकृत्य बौद्धसमूहस्य बौद्धवर्तमानत्वमादाय 'गच्छती'ति प्रयोगोपपत्तिरित्यर्थ । क्षणभङ्गवादे बुद्धेरप्येकस्या अभावादाह—इहेति। कदाऽप्यवर्तमानस्य शशविषाणादितुल्यस्य भूतभविष्यत्वे अपि खलसम्भवे न सम्भवत इति 'गच्छती'त्यबाधितप्रत्ययबलात्सत्ता मानमिति भाव । गच्छतीति प्रत्ययोऽबाधित उत्पद्यत इति सत्त्वं तावदवगम्यत इति । एतेनाऽवयवतोऽपि अप्रत्यक्षत्वं सूचितम् । अन्यथा 'अवयवगतस्य समूहे आरोप' इत्येव वदेत् । ननु अवयवानामभावे समूहोऽप्यसम्भवी, तत्राह—तत्राऽनेकेति । बौद्धो वैकल्पिक एवाऽयं समूह इत्यर्थः, 'शब्दज्ञानाऽनुपाती वस्तुशून्यो विकल्प' इति पातञ्जलोक्ते । समूहस्य वर्तमानत्वं तु प्रारब्धाऽपरिसमाप्तत्वमुक्तमेव । तदपि बौद्धमेव । तस्यांऽनेकक्षणसमूहात्मकत्वेनैकत्वेन प्रसिद्धं क्रियाप्रबन्धरूपं तत्त्वेन न प्रसिद्धमविचारितरमणीयमेव बुद्ध्या विषयीकृत्येत्यर्थ । अन्यथा पूर्वं सर्वथा वर्तमानकालाऽभावस्योक्तत्वेन तत्साधकैर्दोषैरसङ्गत्यापत्ते । एवं वास्तववर्तमानक्रियाऽभावमङ्गीकृत्याऽनुमितबौद्धसमूहरूपक्रियां तद्वर्तमानत्वञ्च बौद्धमाश्रित्य प्रयोगानुपपत्तिरिदानीं वास्तववर्तमानक्रियां तत्र क्षणवर्तिनीं योगिप्रत्यक्षप्रमाणिकामाश्रित्य समाधत्ते—अपर आह अस्ति वर्तमान काल इति । क्रियाया नि-

१ 'भवत इति' । २ 'बौद्धम्' । ३ इद क्वचित ।

अपर आह—अस्ति वर्तमानः काल इति । आदित्यगतिवन्नोपलभ्यते । अपि चात्र श्लोकमुदाहरन्ति,—

'विसस्य वाला इव दह्यमाना न लक्ष्यते विकृतिः संनिपाते ।
अस्तीति तां वेदयन्ते त्रिभावाः,सूक्ष्मो हि भावोऽनुमितेन गम्यः'॥ इति।

॥ ५॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये तृतीयाध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥ ॥

**लटः शतृशानचावप्रथमासमानाधिकरणे ॥ ३।२।१२४ ॥**

॥ * ॥ लस्याऽप्रथमासमानाधिकरणेनाऽयोगादादेशानुपपत्तिर्थाऽन्यत्र ॥ * ॥

---

प्र ] विसस्येति। विसस्य वाला निर्दह्यमाने दह्यमाना अपि न प्रत्यक्षं दह्यमानत्वेनावगम्यन्ते। किं तर्ह्यनुमानेन विनाशान्तर्गतत्वात्तदाहे तेषामपि दाह प्रतीयते । तथा कारकसंनिपाते एकैकक्षणग्रहणे क्रियानेकलक्षणा विकृति प्रत्यक्षेण न लक्ष्यते।तां तु त्रिभावा 'अस्ती'ति निश्चिन्वन्ति। त्रिषु कालेषु भावो भावना येषां ते त्रिभावा —योगिनः ये भावनावशेन त्रीनपि कालान् योगिप्रत्यक्षेण विदन्ति । सूक्ष्म इति । अनेकक्षणसमूहात्मकस्य धातुवाच्यस्य अर्थस्य क्रियाख्यस्य युगपदसंनिधानादनुमीयत इत्यर्थ ॥ इति श्रीकैयटकृते भाष्यप्रदीपे तृतीयस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥

---

उ ] क्षणाऽवस्थायित्वादिति भाव ।आदित्यगतिवन्नोपलभ्यते।'प्रत्यक्षेणे'ति शेष ।क्रियाप्रत्यक्षत्वाऽभिमानिनो यथाऽतिदूरगमनत्वात्तद्गतिरनुमेया तथाऽतिसूक्ष्मत्वात्क्षणावच्छिन्नत्वादेकैकक्षणाऽवच्छिन्ना क्रियाऽप्यनुमेयैवेति भाव । ननु कार्येणोत्तरदेशसंयोगादिना एकैकक्षणवर्तिसूक्ष्मवर्तमानक्रियाया कथमनुमानमत आह भाष्ये—अपि चेति । विसदाहे वालदाहवत्कारकसंनिपाते विकृति । एकैका क्रिया यद्यपि न लक्ष्यते तथापि त्रिभावा योगिनस्तामस्तीति वेदयन्त इत्यर्थ । अनेन योगिप्रत्यक्षप्रमाण दर्शितम्। नन्वस्मदादिभ्यस्तत्र कथमत आह—सूक्ष्मो हीति। समूहान्यथाऽनुपपत्ति , वर्तमाने ल'डिति शास्त्रं च तदनुमापकमिति भाव । एकैकक्षणग्रहणे, एकैकक्षणस्य वर्तमानग्रहणेन ग्रहणे, तत्क्षणाऽवच्छेदेन क्रियाविशेषलक्षणा विकृति प्रत्यक्षेण न लक्ष्यत इत्यक्षरार्थ ।नन्वेकैकक्षणस्य सूक्ष्मत्वेऽपि समूह प्रत्यक्ष स्यादत आह—अनेकेति । एवञ्चाऽवयवरूपा समुदायरूपा च क्रियाऽनुमानगम्यैवेति तात्पर्यम् । अत्र पक्षेऽनुमितैकैकक्षणवृत्तिक्रियायां धात्वर्थसमूहरूपताऽऽरोपेण वर्तमानप्रयोग इत्याद्यूह्यम् इति दिक् । इति॰नागेशभट्टविरचिते भाष्यप्रदीपोद्योते तृतीयाऽध्यायस्य द्वितीयपादे द्वितीयमाह्निकम् ॥

[२] लटः शतृ । भाष्ये—लस्येत्यादि। समानाऽधिकरणेनाऽप्रथमान्तेन लवाच्यस्य

---

१ 'विसस्य वाला' । २ इति क्वचित् ।

लस्याऽप्रथमासमानाधिकरणेनाऽयोगादेशयोरनुपपत्तिर्यथाऽन्यत्र । तद्यथा, अन्यत्रापि लस्याऽप्रथमासमानाधिकरणेन योगो न भवति ॥ क्वान्यत्र ? ॥ लङि । अपचदोदनं देवदत्त इति ॥ २ ॥ योग इति चेदन्यत्रापि योगः स्यात् ॥ ३ ॥ अथ मतमेतत् , भवति योग इति, अन्यत्रापि योगः स्यात् ॥ क्वान्यत्र ? ॥ लङि । अपचदोदनं देवदत्त इति । न क्वचिद्योग इति कृत्वाऽत्र सर्वत्र योगेन भवितव्यम् । क्वचिद्वाऽयोग इति कृत्वा सर्वत्राऽयोगेन । तद्यथा समानमीहमानानां चाऽधीयानानां च केचिदर्थैर्युज्यन्तेऽपरे न । न चेदानीं कश्चिदर्थवानिति सर्वैरर्थवद्भिः शक्यं भवितुं, कश्चिद्वाऽनर्थक इति सर्वैरनर्थकैः । तत्र किमस्माभिः शक्यं कर्तुं—यल्लटोऽप्रथमासमानाधिकर-

प्र ] लटः शतृ । लस्येति । इहाय लकारो 'लः कर्मणि च भावे चे'त्यनेन कर्तृकर्मणोर्विधीयमानो गुणभूते क्रियां प्रति कर्तृकर्मणी प्रतिपादयति । तथा च 'पचत्योदनं देवदत्तः' 'ओदनः पच्यते देवदत्तेने'ति क्रियाप्रधानत्वात् क्रियान्तरयोगाऽभावाच्छक्त्यन्तरावेशाऽभावः । अन्ये तु कृतः प्राधान्येन कर्त्रादीनि प्रतिपादयन्ति । तथा च क्रियान्तरयोगे शक्त्यन्तरावेशो भवति,—पाचकं पश्य, पक्त्रेन कृतं इति । ततश्च लङादिवल्लटोऽपि क्रियान्तरयोगाऽभावाद्वितीयाद्यन्तैः पदैरप्रथमान्तैः सामानाधिकरण्यं नोपपद्यत इत्यर्थः । अपचदिति । तथा चाऽपचदोदनं देवदत्तं पश्ये-त्यादि प्रसज्येतेत्यर्थः । न क्वचिदिति । निष्ठभाविनो लकारस्य गुणभूतकर्त्राद्यभिधानम् । शत्रादिविषयस्य ॥ क्रियोपसर्जनकर्त्राद्यभिधानम् । तथा च क्रियान्तरनिमित्तद्वितीयादिसामानाधिकरण्योपपत्तिरित्यर्थः । शक्यं कर्तुमिति । प्रतिपत्तुमित्य

उ ] कारकस्याऽयोगादित्यर्थः । ननु 'पचन्तं देवदत्तं पश्ये'त्यादौ तत्सामानाऽधिकरण्यमस्त्येवेत्यत आह—इहेति । गुणभूते इति । 'क्रियाप्रधानमाख्यात'मिति सिद्धान्तादिति भावः । इति क्रियेति । इत्यस्य क्रियाप्रधानत्वादित्यर्थः । क्रियान्तरयोगाऽभावादिति । एकत्र विशेषणत्वेनान्वितस्य कारकस्याऽन्यत्र तथाऽन्वयाऽयोगात्कर्त्रादेरनिरुक्तस्याऽनभिहितशक्त्यन्तराऽऽवेशाऽभावेन नियमेन प्रथमान्तेनैव सामानाऽधिकरण्यादिति भावः । प्राधान्येनेति । 'सत्त्वप्रधानानि नामानी'त्युक्ते । लङादिवदिति । लङादिवाच्यकारकसमानाऽधिकरणत्वं शत्राद्यवाच्यकारकसमानाऽधिकरणस्येत्यर्थः । अप्रथमान्तेन—नञर्थेन । इत्यादि प्रसज्येतेति । शत्रादिवल्लङ्यपि लकारार्थस्तु प्राधान्यं स्यादिति भावः । यद्यन्तरङ्गा प्रथमा तथाऽपि प्रधानानुरोधित्वेन बलवती द्वितीयैव स्यादित्यर्थः । कर्त्राद्यभिधानमिति । तदभिधानशक्तिरित्यर्थः । द्वितीयादीति । द्वितीयाद्यन्तार्थेत्यर्थः । प्रतिपत्तुमित्यर्थ इति । लङादेरस्याऽप्रथमान्तसमानाऽधिकरण्यं न भवति, लटादेरस्य भवति यत्तत्र किं

विप्रतिषेधो वक्तव्य ?॥ न वक्तव्य । 'अनद्यतने लु डित्यत्र 'यावत्पुरानिपातयो र्लं डित्येतदनुवर्तिष्यते॥ [ यावत्पुरा ]॥

लिप्स्यमानसिद्धौ च ॥ ॥३।३।७ ॥

किमर्थमिदमुच्यते न लिप्स्यमानसिद्धिरपि लिप्सैव, तत्र 'किंवृत्ते लिप्सायामित्येव सिद्धम् ? ॥[-॥अकिंवृत्तार्थ ॥ ] ॥ अकिंवृत्तार्थोऽयमारम्भ । यो भवतामोदन ददाति ॥ स्वर्गं लोक गच्छति । यो भवतामोदन दास्यति स स्वर्गं लोक गमिष्यति ॥ [ लिप्स्यमानसिद्धौ च ]॥

तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ॥ ३।३।१० ॥

किमर्थं क्रियायामुपपदे क्रियार्थायां ण्वुलिविधीयते नाऽविशेषेण विहितो ण्वुल् क्रियायामुपपदे क्रियार्थायामन्यत्र च भविष्यति ॥ ण्वुलि सकर्मकग्रहण चोदितम्, अकर्मकार्थोऽयमारम्भ । 'आसको व्रजति, शायको व्रजतीति ॥ प्रत्याख्यात तत् 'न वा धातुमात्राद्दर्शनाण्ण्वुल' इति ॥ एव तर्हि- वृत्तादिषु वर्तमानकालोपादान चोदितम् अवर्तमानकालार्थोऽयमारम्भ ॥ तदपि प्रत्याख्यात 'न वा कालमात्रे दर्शनादन्येषा मिति ॥ इद तर्हि प्रयोजनम्, 'अकेनोर्भविष्यदाधमर्ण्ययो रित्यत्र षष्ठ्या प्रतिषेध उक्त स यथा

प्र ] लिप्स्यमान । अकिंवृत्तार्थ इति । पूर्वेन तु किंवृत्तग्रहण लिप्स्यमानसिद्धि रहिताया लिप्सायामकिंवृत्ते लन्निवृत्त्यर्थम् । [ लिप्स्यमानसिद्धौ च ]।

तुमुन् । अकेनोरिति । सति भविष्यत्काले ण्वुलिविधौ तदनुवादेन षष्ठीनिषेधो विधातु शक्यते नान्यथेति भाव ।लप्स्यन्तेऽस्येति। यावच्छब्दो भविष्यति वर्तते यस्मात् तं यावद्भिष्यन्तिन न तु ते याचितवन्त । तत्र भविष्यदधिकारविधानाऽभावा

उ ] यावत्पुरा । यावत्पुरादिष्विति भाष्ये —आदिना इत आरभ्य तुमुन्सूत्र पर्यन्तसूत्रसन्दर्भसङ्ग्रह । लडित्येतदनुवर्तिष्यत इति । इत्यादिसूत्रसन्दर्भा पञ्चमणमिदम् ॥ [ यावत्पुरानिपातयोर्लट् ] ।

लिप्स्यमान । भाष्ये—न लिप्स्यमानसिद्धिरपि लिप्सैवेति । लिप्सा व्यापारार्थ । एवञ्च लिप्सायामित्यत्राऽपि गम्यमानत्वमस्त्येवेत्याशय । सिद्धिरहितायामिति । 'भवानश्च मन्नमगनाम लभिष्यती'त्यादौ । सिद्धिविषयोदाहरणन्तु 'यो भक्त ददाति स स्वर्गं गच्छती'त्यादौ ॥ [ लिप्स्यमानसिद्धौ च ] ॥

तुमुन्ण्वुलौ । भाष्ये—इत्यत्र षष्ठ्या इति । तत्र सूत्रे, 'अरस्य भविष्यती त्यत्र ...'तिके येत्यर्थ । ननु सामान्यण्वुलोवाऽन्य निषेधोऽस्त्वत आह-

१ इद इत्र स्यात् । २ 'स्वर्गलोक' ।
३ 'चोपपदे' । ४ 'मात्रदर्शनात्' ।

स्यात्॥ एतदपि नास्ति प्रयोजनं–य एषोऽविशेषेण विहितः स यदा भविष्यति भविष्यति तदाऽस्य प्रतिषेधो भविष्यति॥ एवं तर्हि भविष्यदधिकारविहितस्य प्रतिषेधो यथा स्यादिह माभूत्,–'अग्ने ! यजतां लप्स्यन्तेऽस्य याजका.। ये एनं याजयिष्यन्ती'ति ॥ नैष भविष्यत्कालः ॥ कस्तर्हि ? ॥ भूतकालः ॥ कथं तर्हि भविष्यत्कालता गम्यते ? ॥ 'धातुसंबन्धे प्रत्यया' इति ॥ यस्तर्हि न धातुसंबन्ध 'इमेऽस्य याजका' 'इमेऽस्य लावका' इति॥ एषोऽपि भूतकालः॥ कथं तर्हि भविष्यत्कालता गम्यते ? ॥ संबन्धात्। स च तावदेव याजितो भवति, तस्य च तावत्संज्ञा अवगता भवन्ति। उच्यते च ॥ इदं तर्हि प्रयोजनम्, अयं क्रियायामुपपदे क्रियार्थायां तुमुन्विधीयते स विशेषविहितः सामान्यविहितं ण्वुलं बाधेत ॥ एतदपि नास्ति प्रयोजनम्। भावे तुमुन्विधीयते कर्तरि ण्वुल्, तत्र क प्रसङ्गो यद्भावे विहितस्तुमुन्कर्तरि विहितं ण्वुलं बाधेत ?॥ लट् तर्हि बाधेत ॥ वासरूपेण ण्वुलपि भविष्यति ॥ अत उत्तरं पठति–॥ * ॥ 'ण्वुलः क्रियार्थोपपदस्य पुनर्विधानं तृजादिप्रतिषेधार्थम् ॥ * ॥ ण्वुलः क्रियार्थोपपदस्य पुनर्विधानं क्रियते ॥ [ किं प्रयोजनम् ? ] ॥ तृजादिप्रतिषेधार्थम् ॥

प्र.]दस्येति षष्ठी न प्रतिषिध्यते। अस्य याजका इति। एतद्याचष्टे–य एनमिति। कस्तर्हि भूतकाल इति। शब्दशक्तिस्वाभाव्याद्याजकशब्दस्य भूतकालविषयत्वमिति भाव। धातुसम्बन्ध इति। याजकत्वस्यैव भविष्यत्त्वं प्रतीयत इत्यर्थ। सम्बन्धादिति। भाविन्यपि याजकत्वादिकमारोप्य तथाऽभिधानादित्यर्थ.। तृजादिप्रतिषेधार्थमिति। तेन कर्ता व्रजति विक्षिपो व्रजतीत्यादि न प्रयुज्यत इत्यर्थ ॥

उ.]भवतीति। तदनुवादेन विहितो हि तद्धर्मो भवतीत्यर्थ। भाष्ये–य एनमिति। भविष्यत्क्रियाश्रयत्वप्रतीतिकत्वमेव ण्वुलि भविष्यत्त्वमिति भाव। धातुसम्बन्ध इति। लप्स्यन्त इति धात्वर्थसम्बन्धोऽस्तीति भाव.। न च 'धातुसंबन्ध' इत्यनेनाऽपि कालान्तरे प्रत्यया विधीयन्त इत्यस्यापि भविष्यत्कालत्वसम्भवेनेति वाच्यं, 'धातुसंबन्ध' इत्यादिना तद्व्याख्यानप्रकारस्मारणेनाऽदोषात्। 'याजका' इत्यस्य तथा व्यवहरिष्यमाणा इत्यर्थात्। तदाह–याजकत्वस्यैवेति। तद्व्यवहारस्यैवेत्यर्थ। भाष्ये–यस्तर्हीति। तत्र लक्षणायां न प्रमाणमिति तत्र शब्दार्थ एव भविष्यत्त्वमिति भाव ॥ तत्राऽपि 'प्रकरणाद्यवगतेः' सुतराम्। संबन्धशब्देन प्रकरणमुच्यत इत्याह–स च तावदिति। भावियाजकत्वादिकमारोप्येति। तद्व्यवहारमित्यर्थ। 'ओदनं भोजको व्रजती'त्यादौ च भविष्यत्त्वेनैव धात्वर्थप्रतीतेर्निषेधागतिरिति भाव। कर्ता व्रजतीति। करिष्यामीति व्रजतीत्यर्थ ॥

१ 'अविशेषविहित'। २ 'एन'। ३ इद हस्व स्यात्। ४ 'ज्ञापनार्थम्'।

किं ज्ञाप्यम्?॥ एतज्ज्ञापयत्याचार्यः–'क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्ती'ति। ण्वुलपि तृजादिः ॥ [ तुमुन्ण्वुलौ ] ॥

## भाववचनाश्च ॥ ३।३।११ ॥

किमर्थमिदमुच्यते नाऽविशेषेण भावे प्रत्यया[1] ये विहितास्ते क्रियायामुपपदे क्रियार्थायामन्यत्र च भविष्यन्ति॥[अत उत्तरं पठन्ति[2]]॥१॥भाववचनानां यथाविहितानां प्रतिपदविध्यर्थम् ॥*॥ भाववचनानां[च][3]यथाविहितानां प्रतिपदविध्यर्थोऽयमारम्भः। इदानीमेव ह्युक्तं, 'क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्ती'ति। भाववचनाश्चापि तृजादयः॥अस्ति प्रयोजनमेतत्। किं तर्हीति॥*॥यथाविहिता इति तु[वक्तव्यम्]॥२॥[यथाविहिता इति तु वक्तव्यम्]॥ किं प्रयोजनम्?॥याभ्यः[4] प्रकृतिभ्यो येन विशेषणे[5] भावे प्रत्यया विहिताास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषेणे क्रियायामुपपदे क्रियार्थायां यथा स्युर्घ्यति करो मा भूदिति॥ तत्तर्हि वक्तव्यम्?॥ न वक्तव्यम्।इह भावे प्रत्यया भवन्तीत्येव[6] सिद्धम्।सोऽयमेवं सिद्धे सति यद्वचनग्रहणं करोति तस्यैतत्प्रयोजनं वाचका यथा स्यु'रिति। यदि च याभ्यः प्रकृतिभ्यो येन विशेषेण भावे प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेन विशेषेण क्रियायामुपपदे क्रियार्थायाम् [अपि] भवन्ति ततोऽमी वाचकाः कृताः स्युः।अथ हि प्रकृतिमात्रोद्वा[7][8] स्युः, प्रत्ययमात्रं वा स्यात्ताऽमी बाधकाः कृताः स्युः ॥ [ भाववचनाश्च ] ॥

## अण्कर्मणि च ॥३।३।१२॥

किमर्थमिदमुच्यते नाऽविशेषेण कर्मण्यणि यद्विहितः स क्रियायामुपपदे

प्र ]भावव। प्रतिपदविध्यर्थमिति। ज्ञापकेन निराकृतानां पुनः प्रतिपद-साक्षाद्विधानार्थो योग इत्यर्थः। यथा विहिता इति। येन प्रकारेण विहिता यथा विहिता इत्यसमस्तं पदद्वयम्। अथ वा यथा विहितं विधानं येषां ते 'यथाविहिता' इति बहुव्रीहिः। अव्ययीभावे तु 'यथाविहित'मिति स्यात्। वचनग्रहणमिति। वचनग्रहणेन लोकप्रसिद्धं वाचकत्वमवगम्यत इत्यागमोऽस्य न भवति। [भाववचनाश्च]।

उ ] भाववचनाश्च। ज्ञापकेनेति। यद्यपि तुमर्थः भावोऽसत्त्वभूतो, घञादिवाच्यस्तु सत्त्वभूत इति 'तुमर्थगेभ्यः' इति सूत्रे भाष्यकैयटयोरुक्तत्वेन तेषां कथं तुमर्थत्वं वा कथं, तथाऽप्यवान्तरविशेषाऽविवक्षया भाष्यं बोध्यम्। एकदेश्युक्तिवेदं भाष्यम्। यथा विहिता इति। साकल्यद्योतकत्वादव्ययीभावः। लोकप्रसिद्धमिति। यथाविधानं विहितानामेव तथा वाचकत्वमिति भावः ॥ [भाववच]॥

---

१ 'येप्रत्यया'। २इदं क्वचिन्न। ३ इदं भाष्यमित्यन्ये। ४ 'इह याभ्य' पा०। ५ विशेषणेन'। ६ 'भवन्तीयता'। ७ 'धातुमात्रात्'। ८ मात्राद्वा स्यु'।

## लृट् शेषे च ॥ ३।३।१३ ॥

शेषवचनं किमर्थम्?॥*॥ लृटि शेषवचनं क्रियायाः प्रतिपदविध्यर्थम् ॥*॥ लृटि शेषवचनं क्रियते॥[ किं प्रयोजनं ?] ॥ 'क्रियायाः प्रतिपदविध्यर्थम्' ?॥ [क्रियायां] प्रतिपदविधिर्यथा स्यात्॥*॥अविशेषेण विधाने लृटोऽभावः प्रतिषिद्धत्वात् ॥१॥ अविशेषेण हि विधाने सति लृटोऽभावः स्यात् । करिष्यामीति व्रजति।हरिष्यामीति व्रजतीति ॥ किं कारणम्?॥ 'प्रतिषिद्धत्वात्' ॥ इदानीमेव ह्युक्तम्–'क्रियायामुपपदे क्रियार्थायां वासरूपेण तृजादयो न भवन्तीति। लृडपि तृजादि ' ॥ अस्ति प्रयोजनमेतत् ॥ किं तर्हीति ॥ साधीयस्तु खलु शेषग्रहणेन क्रियार्थोपपदाल्लृण्निर्भज्यते ॥ किं कारणम् ? 'अक्रियार्थोपपदत्वात्' । शेष इत्युच्यते । शेषश्च कः ?॥ यदन्यत्क्रियायाः क्रियार्थायाः ॥ एव

प्र ]भाव ।प्रत्येकं चेति। 'कर्मणि' 'क्रियाया'मिति पृथक्सप्तमीनिर्देशात्प्रत्येकमुपपदसंज्ञा भवति, निमित्तसद्भावादित्यर्थः । [ अण्कर्मणि च ] ।

लृट् शेषे च । शेषग्रहणमिति । 'क्रियायां क्रियार्थाया'मिति निवर्तिष्यत इति भावः । लृटीति । अयं भावः –'लृट्'इत्येतावत्युच्यमाने करिष्यतीत्यादावेव स्यात् 'करिष्यामीति व्रजती'त्यादौ ण्वुला बाधितत्वान्न स्यात्। शेषग्रहणात्तु क्रियायां क्रियार्थायामित्यस्य सन्निधिरनुमीयते इति तत्रापि लृङ्भविष्यति, शेषे च विषये । साधीयस्त्विति । विपर्ययसाधनं प्रत्युत शेषग्रहणमिति भावः । एव तर्हीति । 'च'शब्दसहिताच्छेषग्रहणात्क्रियायामप्युपपदे लृङ्भविष्यतीति वार्तिककारस्याशय

ड ]त्यर्थः ।भविष्यति काले क्रियार्थोपपदेऽसत्यपि 'कम्बलदाय' इत्यादौ कादिशब्दधर्मेण स्यादिति भावः । भाष्ये–चेनैवेति । उपपदसंज्ञयोरपि समुच्चय इति भावः । युक्त्यन्तरमाह–प्रत्येकञ्चेति । तथाचष्टे–कर्मणीति ॥ [ अण्कर्मणि च ] ।

लृट् शेषे च । क्रियायामिति । तन्निवृत्त्यैवोभयत्र सिद्धिरिति भावः । ण्वुला बाधितत्वादिति । वाऽसरूपन्यायाऽभावस्य ज्ञापनात् । 'वाऽसरूपन्यायेन लृ'डिति हरदत्तस्तु चिन्त्य एव। शेषग्रहणादिति । तत्सामर्थ्याद्योगविभाग इति भावः । सूत्रपाठस्तु 'च'रहित इति तात्पर्यम् । अन्यथा 'शेषवचनं क्रियार्थक्रियायाः प्रतिपदविध्यर्थ'मिति भाष्याऽसङ्गतिः । चकारसत्त्वे हि तस्याऽयमर्थो, न 'शेष'ग्रहणस्येति स्पष्टमेव। ननु तत्सामर्थ्यात्क्रियोपपदे नेत्येव कल्पना स्यादिति मत्वा शङ्कते–साधीय इत्यादि । भाष्ये–निर्भज्यते । विभज्यत इत्यर्थः । अक्रियाऽर्थोपपदत्वादिति । क्रियाऽर्थोपपदभिन्नोपपदार्थकत्वादित्यर्थः । स्वाशयं प्रकटयति–एव तर्हीति । 'च'घटित पाठः कर्तव्य इति भावः । वार्त्तिककारस्येति । तेन वार्त्तिक-

१'ग्रहणं'।२इदं क्वचित्।३इदं भाष्यमित्यन्ये। वार्त्तिकमित्यन्ये ।४'कश्च शेषः'।

तर्हि ॥*॥ लृटि शेषवचनं क्रियायाः प्रतिपदविध्यर्थम् ॥*॥ लृटि शेषवचनं क्रियते ॥ [ किं प्रयोजनं ? ॥ 'क्रियायाः प्रतिपदविध्यर्थम्' ]। क्रियायां प्रतिपदविधिर्यथा स्यात्। 'लृट्शेषे च'। करिष्यति हरिष्यतीति ॥ क्व 'च' ? ॥ क्रियायामुपपदे क्रियार्थायामिति ॥ स तर्हि चकारः कर्तव्यः ? ॥ न कर्तव्यः। [कथम् ?॥]। इह लृड्वतीतीयता सिद्धम्। सोऽयमेवं सिद्धे सति यच्छेषग्रहणं करोति तस्यैतत्प्रयोजनं योगाङ्गं यथोपजायेत। सति च योगाङ्गे योगविभागः करिष्यते। [ 'लृट्' ]। लृड्भवति क्रियायामुपपदे क्रियार्थायामिति। ततः 'शेषे'। शेषे च लृड्भवतीति।

## लृटः सद्वा ॥ ३।३।१४ ॥

॥*॥ सद्विधिर्नित्यमप्रथमासमानाधिकरणे ॥*॥ [ सद्विधिर्नित्यमप्रथमासमानाधिकरणे ]। सद्विधिरप्रथमासमानाधिकरणे नित्यमिति वक्तव्यम्। पश्यन्तं पश्य, पश्यमाणं पश्य ॥ क्व तर्हीदानीं विभाषा ? ॥ प्रथमासमानाधिकरणे। पश्यन्, पश्यति। पश्यमाणः, पश्यते ॥ [ लटः सद्वा ]॥

## अनद्यतने लुट् ॥ ३।३।१५ ॥

॥*॥ योगविभागः ॥*॥ [ योगविभागः ] कर्तव्यः। 'अनद्यतने'। [ अनद्यतने ] लृटः सत्संज्ञौ भवतः। श्वोऽग्नीनाधास्यमानेन। श्वः सोमेन यक्ष्यमाणेन। ततो 'लुट्'। लुड्भवत्यनद्यतने। श्वः कर्ता। श्वोऽध्येता ॥ केन विहितस्यानद्यतने लृटः सत्संज्ञावुच्येते ? ॥ एतदेव ज्ञापयति 'भवत्यनद्यतने लृ'डिति यदयमनद्यतने लृटः सत्संज्ञे शास्ति। एवं च कृत्वा सोऽप्यदोषो

प्र.]इत्यर्थः। इदानीं योगविभागाश्रयणेन चकारं प्रत्याख्यातुमाह—स तर्हीति ॥

लटः सद्वा। सद्विधिरिति। अप्रथमासमानाधिकरणग्रहणमुपलक्षणं सूत्रोपात्तानामर्थानामिति यथोपलक्षणं लक्षणं हेतुश्च क्रियाया गृह्यते। [ लटः सद्वा ]।

अनद्य। एवं चेति। भविष्यच्छब्दस्याऽनद्यतनेपि वर्तनात्तन्त्रेण, एकशेषेण वा द्वयोर्भविष्यच्छब्दयोर्निर्देशादिति भावः। भविष्यन्त्यर्थ इति। 'भविष्यन्त्या'-

उ.] इत्त्वतोऽयं 'च'शब्दपठितो न्याय इति सूचितम्। चकारं—वार्तिके लृडुक्तम् ॥

लटः स। सूत्रोपात्तानामितीदृक्पूर्वस्यादिव्यवहारा प्रयोगरत्त्वयाऽवसेयम्॥

अनद्यतने लुट्। अनद्यतनेऽपीति। 'लृट् शेषे' इति सूत्रेण केवलं भविष्यति, ज्ञापकेन अनद्यतने भविष्यतीत्यर्थः। तत्राऽन्यतरनिर्देशेऽन्यतरस्मिन् स्यादत आह—तन्त्रेणेति। एकशेषेणेति। विभक्त्यन्तैकशेषेणेत्यर्थः। एतच्च ज्ञापकं

१ 'प्रतिपदविध्यर्थं स्यात्'। २ इदं दृष्टं स्यात्। ३ 'यथा नित्यायेन'। 'नित्यायेन'। ४ 'पश्यतीति'। ५ 'इदं भाष्यमित्यन्ये'। ६ च. क्वचित्।

भवति यदुक्त-'भविष्यतीष्यनद्यतन उपसङ्ख्यान'मिति ॥*॥ परिदेवने श्वस्तनीभविष्यन्त्यर्थे ॥*॥ [परिदेवने श्वस्तनीभविष्यन्त्यर्थे]। परिदेवने श्वस्तनीभविष्यन्त्या अर्थे इति वक्तव्यम् ॥ इयं नु कदा गन्ता येयं पादौ निदधाति ॥ अयं नु कदाऽध्येता य एवमनभियुक्त इति ॥*॥ कालप्रकर्षात्तूपमानम्' ॥*॥ कालप्रकर्षात्तूपमानं भविष्यति । गन्तेवेय गन्ता। नेयं गमिष्यति। अध्येतेवाऽयमध्येता । नाऽयमध्येष्यते ॥ न वै तिङन्तेनोपमानमस्ति ॥ एवं तर्ह्यनद्यतन इवानद्यतन इति । [ अनद्यतने लुट् ] ॥

पदरुजविशस्पृशो घञ् ॥३।३।१६ ॥

॥*॥ स्पृश उपतापे ॥*॥ स्पृश उपतापे इति वक्तव्यम् । इह मा भूत् कम्बलस्पर्श इति । [ पदरुज ] ॥

सृ स्थिरे ॥३।३।१७॥

॥*॥ व्याधिमत्स्यबलेषु ॥*॥ व्याधिमत्स्यबलेष्विति वक्तव्यम् । अतीसारो व्याधि । विसारो मत्स्य । बले-शालसार । खादिरसार । [ सृ स्थिरे ] ॥

प्र.] शब्देन पूर्वाचार्यसंज्ञया लुडुच्यते। अनद्यतन इति। प्रयोगदर्शनन्याय गौणेऽप्यनद्यतने प्रत्ययो भवति । [ अनद्यतने लुट् ] ।

पदरुज। स्पृश उपताप इति। उपतापो रोग । स्पर्शो नाम व्याधिविशेष । अन्यार्थे घञ् न भवति । स्पर्शो विशेष । [ पदरुजविशस्पृशो ] ॥

सृ स्थिरे॥ स्थिर कालान्तरस्य प्रापको ऽर्थ उच्यते। व्याधीति। अस्थिरार्थं वचनम्।

उ.] तद्विषयलुट् एवेति विज्ञेयलुटोऽनद्यतनेऽसाधुत्वमेवेति केचित् । सामान्येन एव साधुत्वमित्यन्ये । भाष्ये-परिदेवनम्-अनुशोचनम् । श्वस्तनीति लुट्संज्ञा । भविष्यन्त्यर्थे-लृडर्थे भविष्यत्सामान्य इत्यर्थं । येयमिति । विलम्बितम् । अनभियुक्त-अभ्यासहीन । अनद्यतनविषयमेतत्प्रयोगद्वयम् ॥

पदरुज । स्पर्शो नामेत्युदाहरणम् । अन्यत्र-व्याध्यतिरिक्ते ॥ [पदरुज] ।

सृ स्थिरे । कालान्तरस्य प्रापक इति । प्रसिद्धानित्यर्थ , कालान्तरस्थायीति यावत् । अस्थिरार्थमिति । 'विसारो मत्स्य' इत्यत्रैकदेशस्थस्य कालान्तराऽप्राप्त्याऽस्थिरत्वम् । बले-दृढोंऽश । सारो वृक्षेऽपि शरीरे दृढभूतोऽशस्तेन तदर्थं वानुपपन्नम् । न्यायस्याऽपि दृढत्वादेव तथाऽपि सारशब्द सिद्ध । एवं गेहेऽपि । खादिरसारादौ वैयर्थ्योपस्थिरत्वाऽभावश्चिन्त्य । तस्मात् सूत्रस्थेन स्थिरपरिमाणमिदं, विप्रकर्षणाऽस्थिरत्वस्य वैयर्थ्योपस्थिरत्वप्रतिद्वन्द्विनो

१ इद द्वौ । २ 'नु' । ३ 'कम्बलस्य स्पर्शं' पा० । ४ इदं क्वचित्र । ५ 'सार' । ६ 'अन्यथा' । ७ 'इत्यर्थं' ।

भावे ॥ ३।३।१८ ॥

॥*॥ भावे सर्वलिङ्गो निर्देशः ॥*॥ भावे सर्वलिङ्गो निर्देशः कर्तव्यः । भूतौ भवने भावे इति ॥ किं प्रयोजनम्? ॥ सर्वलिङ्गे भावे एते प्रत्यया यथा स्युरिति ॥ किं पुनः कारणं न सिध्यति? ॥ पुंलिङ्गेनायं निर्देशः क्रियते, एकवचनान्तेन च। तेन पुंलिङ्गे एव भावे एकवचने चैते प्रत्ययाः स्युः स्त्रीनपुंसकयोर्द्विवचनबहुवचनयोश्च न स्युः ॥ ॥*॥ नात्र निर्देशस्तन्त्रम् ॥*॥ कथं पुनस्तेनैव च नाम निर्देशः क्रियते, तच्चाऽतन्त्रं स्यात्।अस्कारी च भवास्तद्वैपी च'॥ नान्तरीयकत्वादत्र पुंलिङ्गेन निर्देशः क्रियते एकवचनेन च । अवश्यं कया चिद्विभक्त्या केन चिच्च लिङ्गेन निर्देशः कर्तव्यः । तद्यथा, कश्चिदन्नार्थी शालिकलापं सतुषं सपलालमाहरति, नान्तरीयकत्वात् । स यावदादेयं ताव-

प्र ] भावे । सर्वलिङ्ग इति । लिङ्गस्योपलक्षणार्थं वाच्यवचनसङ्ख्या इत्यपि बोद्धव्यम् । पुंलिङ्गेनेति। ततश्च शब्देन योऽर्थः प्रतिपाद्यते यदि तद्गतलिङ्गसङ्ख्याभिधायकत्वेन नाव्यमिति क्रिया भाव इति सामानाधिकरण्येन सम्बन्धस्याऽसंभवात् क्रियात्वकर्तरि कारके तिङ्प्रत्ययः स्यात् । भावे तु पुंसि । एवं 'नपुंसके भावे क्तः' इत्यनाऽकर्तरि च कारके इत्यस्य निवृत्तत्वान्नपुंसके कर्तरि क्तः स्यात् । भावे तु पुंसि । द्वित्वबहुत्वयोश्च पाकौ पाकाः इत्यादौ प्रत्यया न स्युरित्यर्थः । नात्रेति । सत्यभूतोऽर्थो विना लिङ्गं सङ्ख्या च न निर्देष्टुं शक्यत इति तयोः शब्देनोपादानम्।शब्दसंस्कारमात्रमेव तु तदुपादाने प्रयोजनमित्यर्थः । नान्तरीयकत्वादिति । अन्तरशब्दो गहादिषु पठ्यते, स च विनार्थे वर्तते। अन्तरे भवम् अन्तरीयम्। तत नञ्समासे कृते पृषोदरादित्वाद्भाष्यकारवचनप्रामाण्याद्वा नलोपाऽभावः । तत स्वार्थे

उ ] निरूपयितुमशक्यत्वादित्यर्थः ॥ [ सू स्थिरे ]।

भावे । ततश्च शब्देनेति । 'भाव' इति शब्देनेत्यर्थः । योऽर्थः-सिद्धाऽवस्थः । नन्वेवं 'क्रिया क्तिन्निति सूत्राऽस्वारसेन आह-क्रियां भाव इति। नन्वेवमपि 'नपुंसके भावे' इत्यसङ्गतं स्यात्, सत्राऽर्थान्तराऽनुकूल्यमाह-एवमिति। कर्तरीति । 'कर्तरि कृ'दित्यनेन लब्धे इत्यर्थः । लिङ्गसङ्ख्ययोर्नान्तरीयकत्वमुपपादयति-सत्येति । प्रातिपदिकमात्रं निर्दिश्यतामिति वदन्तं प्रत्याह-शब्देति । 'न केवला प्रकृतिः' इति निषेधादिति भावः । भाष्ये-कयाचिद्विभक्त्येति । सङ्ख्यायेत्यर्थः । विनाऽर्थे इति । एतद् वद्विना यत्र भवति तत्ताऽन्तरीयकमित्यर्थः । भाष्यकारवचनप्रामाण्याद्वेति । 'वा' शब्दो हेतौ, ततो हेतौ पृषोदरादित्वमित्यर्थः । नलोपाऽभाव इति । निषेधाऽर्थकोऽननुबन्धको 'न'-

१ इदं वार्तिकं । भाष्यमित्यन्ये । २ 'चिच्चिङ्गेन' ।

दादाय तुषपलालान्युत्सृजति । तथा कश्चिन्मांसार्थी मत्स्यान्सशकलान्सकण्टकानाहरति नान्तरीयकत्वात् । स यावदादेयं तावदादाय शकलकण्टकान्युत्सृजति । एवमिहापि नान्तरीयकत्वात्पुंलिङ्गेन निर्देशः क्रियते एकवचनान्तेन च । न ह्यत्र निर्देशोऽतन्त्रम् । कया चिद्विभक्त्या केन चिच्च लिङ्गेन निर्देशः कर्तव्यः । अथ वा कृत्स्नमयं क्रियासामान्यवाचिनं, क्रियाविशेषवाचिनः पचादयः । यथाऽत्र पचतेर्भवतिर्भवति न तद्वत्ते पचतिर्भवति । यथा भवते पचतिर्भवति न तत्पचतेर्भवतिर्भवति ॥

प्र ]स्त्वप्रत्ययः । सुतुषपलालानीति । तुषसहितानि पलालानीत्युत्तरपदलोपी समासः । द्वन्द्वे तु 'जातिरप्राणिना'मित्येकवद्भावप्रसङ्गः । एवं शकलकण्टकानीति बोद्धव्यम् । कण्टकशब्दश्चोभयलिङ्गः । एवमिहापीति । प्रयोगमन्तरेणाप्यान्वाख्यानासम्भवे प्रयोगे च गत्यन्तराभावे भावे प्रत्ययानां दर्शनादिह च लिङ्गसङ्ख्ययोरविवक्षेत्यर्थः । अथ वेति । पाकादिषु क्रियाविशेषेषु भिन्नलिङ्गसङ्ख्यानुगतेष्वपि भावशब्दवाच्यं सामान्यमेकमेवाविशिष्टं नित्यं भिन्नं, तच्चैकं पुंस्त्वानुगतं चेति तदाश्रित्य प्रत्यया विधास्यन्त इत्यर्थः । पचादय इति । भावः सामान्यमेव, पचादयो विशेषा एवेत्यर्थः । भूतिर्भवन-मित्यादि पाकादिकर्त्रादिभेदाद्भावविशेष एव भावसामान्यानुगत इति द्रष्टव्यः ।

उ ] शब्दो नास्त्येवेति भावः । ननु कण्टकस्य पुंस्त्वात्कण्टकानीत्यनुपपन्नमत आह–कण्टकशब्दश्चेति । अर्धर्चादित्वादिति भावः । प्रयोगमूलत्वादिति । अनुवादे गत्यन्तरादर्शनाच्चेति तत्त्वम् । न ह्यत्रेति भाष्यस्य–अनाऽनुवादे इत्यर्थः ॥ विवक्षितं वक्तुं विवक्षायामपि न दोष इत्याह–अथ वेति । भाष्ये कृत्स्नमिति दृष्टान्तार्थं ग्रहणं । पाकसमभिव्याहारे साध्यत्वेन भासमानं भूत्वाऽर्थ इति तस्य सामान्य वाचित्वम् । भिन्नलिङ्गेति । पाकः पक्तिः पचनमित्येवमिति भावः । भिन्नलिङ्ग सङ्ख्याऽनुगतेषु—तद्विशिष्टेषु । सामान्य–सत्त्वभावरूपाऽऽविष्टत्वाऽऽत्मकम् । तच्चैकं पुंस्त्वाऽनुगतञ्चेति । अन्यथा 'पक्तिर्भावः' इत्याद्युपपादनम् । धर्मपरस्थाऽपि धर्मधर्मिणो रभेदाभासनाऽधिकरण्यम् । तदाश्रित्येति । एवञ्च लिङ्गसङ्ख्ययोर्विवक्षायामपि न दोषः । न चैवं 'पक्ति'रित्यादौ पुंस्त्वापत्तिः, तादृशविशेषगतसामान्यस्य भावशब्द-वाच्यस्य सिद्धरूपस्य पुंस्त्वेनान्वयो सत्त्वेऽपि तदाश्रयविशेषस्य नानालिङ्गत्वा त्स्त्रीत्वाद्युपपत्तिरिति भावः । सामान्यमिति । तद्गतसिद्धसाध्यो धर्म इत्यर्थः । विशेषा इति । तदाश्रया व्यक्तय इत्यर्थः । ताश्च भावविहितप्रत्ययान्तवाच्या अनेकलिङ्गा इति भावः । कर्त्रादिभेदादिति । स्त्र्यादिभेदादित्यपि बोध्यम् । क्व चित्तु पुस्तके तथैव पाठः । सामान्याऽनुगत इति । सिद्धस्वरूपसामान्याऽनुगत

१'नान्तरीयकत्वात्' इति वार्तिकमिति कोश । २'एकवचने' । ३'यथाऽत्र'।

किं च पचतेर्भवतिर्भवति ?॥ सामान्यम् ॥ किं च भवते पचतिर्भवति ?॥ विशेष ।तद्यथा, उपाध्यायस्य शिष्यो मातुलस्य भागिनेयं गत्वाह, 'उपाध्यायं 'भवानभिवादयता' मिति । स गत्वा मातुलमभिवादयते । तथा मातुलस्य भागिनेय उपाध्यायस्य शिष्यं गत्वाह–'मातुलं भवानभिवादयता'मिति । ॥ गत्वोपाध्यायमभिवादयते । एवमिहापि पचतेर्भवतौ यत्तन्निर्दिश्यते ॥

अकर्तरि च कारके संज्ञायाम् ॥ ३।३।१९ ॥

॥*॥ कारकग्रहणं किमर्थम् ? ॥*॥ कारकग्रहणमनादेशे स्वार्थविज्ञानात्

प्र.]तद्यथेति।यथैकस्मिन्वस्तुनि मातुलत्वमुपाध्यायत्वं च भिन्नसंबन्ध्याश्रयं परस्परन-बाधेन व्यवस्थितं,तथा पाकादिषु विशेषरूपता भावशब्दस्य वाच्यश्च सामान्यं। तदुक्तं हरिणा–'आचार्यो मातुलश्चेति यथैको व्यपदिश्यते । संबन्धिभेदादर्थात्मा स विधि पक्तिभावयो'॥ इति॥ भवतौ यदिति । भवतौ धातौ वाच्यत्वेनावस्थितं यत्सामान्यं पचादिधातुवाच्यविशेषसमवेतं तत्प्रत्ययार्थत्वेन निर्दिश्यत इत्यर्थः। तत्र पाक इत्यादौ प्रकृतिभागः साध्यरूपतयैवाह । प्रत्ययभागस्तु सत्त्वरूपताम् । तदुक्तं हरिणा–'आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता। प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ॥ साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना । सत्त्व-भावस्तु यस्तस्याः स घञादिनिबन्धनः ॥' इति ॥ [भावे] ।

अकर्तरि । कारकग्रहणं किमर्थमिति । अकर्तरीति पर्युदासपक्षे कर्तृसदृशस्य

उ.]इत्यर्थ । स विधिरिति । प्रकार इत्यर्थः । यथैकस्मिन्नेवात्मनि मातुलत्वं संबन्धि-भेदात्, तथैकस्मिन्नेव पाकादिषु साध्यत्वविशिष्टतत्तत्क्रियात्वरूपविशेषरूपता, भावशब्दवाच्यं सामान्यञ्चेत्यर्थः ।तच्च तत्र यथा निरूपकभेदाद्भिन्नम्, एवम्प्रकृतेऽपि वाचकभेदात् प्रकृतिनिरूपितं साध्यत्वं, क्रियान्तरानिरूपितेन सिद्धत्वमिति बोध्यम् । वाच्यत्वेनेति । धनेकार्थत्वाद्धातूनां सिद्धत्वमपि भवत्यर्थभूधातोरर्थ इति भावः । यत्सामान्यमिति । साध्यत्वविशिष्टतत्तत्क्रियात्वरूपविशेषसमवेतेऽपि यत्सिद्धत्वाख्यं सामान्यं पचाद्यर्थगतं भवतिभवतिवाच्यं तत्प्रत्ययार्थत्वेन निर्दिश्यत इत्यर्थः । न च तत्संवत्सापुंस्त्वाच 'चिकीर्षे'त्यादौ टबादि न स्यादिति वाच्यं,तस्य सामान्य सिद्धत्वस्यसंख्यापुंस्त्वविशिष्टस्य विशेषणत्वेन लिङ्गादिनियामकत्वात् । विशेष-णत्वेन भासमानेनाऽपि तेन स्वाश्रयस्य क्रियायोग्यताऽपनीयत इति न दोषः ।

प्रकल्पितामिति।एवञ्च सिद्धत्वसाध्यत्वरूपोभयधर्मविशिष्टो धात्वर्थः पाकादि-पदार्थ इति भावः । आख्यातशब्दे–पचतीत्यादौ। भागाभ्यां–प्रकृतिप्रत्ययाभ्याम् । साध्यसाधने–क्रियाकारके बोध्येते इत्यर्थः ॥ [ भावे ] ॥

अकर्तरि च। विधिप्रतिषेधयोरिति । एकदिशत्वे विरुध्याऽऽपत्तेस्त्वादेनेर-

॥४॥ कारकग्रहणं क्रियते॥ '[किं कारणम्] ?॥ 'अनादेशे स्वार्थविज्ञानात्'। अनिर्दिष्टार्था प्रत्ययाः स्वार्थे भवन्तीति। तद्यथा, 'गुप्तिज्किद्भ्यः सन्' 'यावादिभ्यः क'निति। एवमिमेऽपि प्रत्ययाः स्वार्थे स्युः। स्वार्थे मा भूवन्कारके यथा स्युरित्येवमर्थमिदमुच्यते॥ नैतदस्ति प्रयोजनम्। विहितः प्रत्ययः स्वार्थे 'भावे घ'ञिति। तेनाऽतिप्रसक्तमिति कृत्वा नियमोऽयं विज्ञायेत 'अकर्तरि संज्ञायामेवे'ति॥ अस्ति चेदानीं कश्चित्संज्ञीभूतो भावो यदर्थो विधिः स्यात् ?॥ 'अस्ती'त्याह। आवाहः विवाह इति॥ किमर्थं तर्ह्ययं नियमो भवति ?॥ विधेयं नास्तीति कृत्वा॥ इह चास्ति विधेयम्॥ किम् ?॥ अकर्तरि च कारके संज्ञायां घञ्विधेयः। तत्राऽपूर्वो विधिरस्तु नियमोऽस्त्वित्यपूर्व एव विधिर्भविष्यति न नियमः॥ तदेव तर्हि प्रयोजनं 'स्वार्थे मा भूव'न्निति॥ ननु चोक्त 'विहितः प्रत्ययः स्वार्थे भावे घञि'ति॥ अन्यः स भावो बाह्यः प्रकृत्यर्थात्। अनेनेदानीमाभ्यन्तरे भावे स्यात्॥ कः पुनरनयोर्भावयोर्विशेषः ?॥ उक्तो भावभेदो भाष्ये॥ एतदपि नास्ति प्रयोजनम्॥५॥नञिव-

प्र.] कारकस्य ग्रहणं जिज्ञास्यते। प्रत्ययप्रतिषेधेऽपि वाक्यभेदेन संज्ञायां घञ्भवति कर्तरि न भवतीति विधिप्रतिषेधयोर्विधानाद्भावे च पूर्वसूत्रेण विहितत्वात्संज्ञायां पर्यायार्थमवस्थिति कारके एव सामर्थ्याद्विज्ञास्यत इति प्रश्नः। स्वार्थ इति। साध्यमानरूपे स्वार्थे इत्यर्थः। विहित इति।–भावभेदमनुपश्यन्नाह। आवाह इति। कन्याया आनयनमुच्यते। विवाहस्तु नयनम्। तत्राऽपूर्व इति। अन्यथा भावे संज्ञायामित्येकमेव योगं कुर्यात्। योगविभागात्तु विध्यर्थत्वमस्य योगस्येत्यर्थः। अन्य इति। कारकभावलक्षण इत्यर्थः। अनेनेति। साध्यमानरूपो धात्वर्थ आभ्यन्तरः। उक्त इति। 'सार्वधातुके य'गित्यत्र भावभेदः प्रतिपादितः। उद्द-

उ.] कारकनिरपेक्षविधेरिति भावः। ननु भावेऽपि घञ्यमेव स्यादत आह–भावे चेति। ननु स्वार्थे[ऽस्त्वे]विधानमपि 'भावे' इत्यनेन सिद्धमत आह–साध्यमानेति। 'अकर्तरी'ति तु सामान्यप्रापकपर्यर्थोऽसत्कार्थं स्यादिति भावः। भाष्ये–विहित इति। एवञ्च सामर्थ्यात्कारक एव भविष्यतीति भावः। इतर आह–तेनेति। 'अकर्तरि संज्ञाया-मेवे'ति तात्पर्यम् 'कर्तरि कृ'दिति सूत्रप्राप्तकर्तरि न, किन्तु भावे, तत्र च संज्ञायामेवेत्यर्थः। संज्ञाभूत इति। संज्ञारूप इत्यर्थः। भाव–भावप्रत्ययान्त इत्यर्थः। यदर्थो विधिरिति। नियमविधिरित्यर्थः। योगविभागादेवेति। 'अक-र्तरि' ग्रहणमपि क्षेप्यम्, नियमपक्षे तस्याऽपि वैयर्थ्यादित्याहुः। उक्तो भाव-

१ इदं रूपं स्यात्।२ 'अनादेशे अनादिष्टार्थाः'।३ 'इहापि'।४ इदं क्वचित्।
५ 'नियमो विज्ञायते'। ६ 'संज्ञाभूतो'। ७ 'अभ्यन्तरे'। ८ 'रनयो'।

तुकमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ॥*॥ नन्युक्तमिवयुक्तं चान्यस्मिंस्तत्सदृशे कार्यं विज्ञायते। तथा ह्यर्थो गम्यते। तद्यथा 'अब्राह्मणमानये'त्युक्ते ब्राह्मणसदृशं पुरुषमानयति नासौ लोष्टमानीय कृती भवति। एवमिहापि-'अकर्तरी'ति कर्तृप्रतिषेधादन्यस्मिन्नकर्तरि कर्तृसदृशे कार्यं विज्ञास्यते॥ किं चान्यदकर्तृ कर्तृसदृशम्[1]॥ कारकम्॥*॥[उत्तरार्थं तु कारकग्रहणम्]॥*॥उत्तरार्थं तर्हि कारकग्रहणं कर्तव्यम्। 'परिमाणाख्यायां सर्वेभ्यः'।कारके यथा स्यादिह मा भूत्,-'एका तिलोच्छ्रितिः' 'द्वे सृती' इति। 'घञनुबन्धगमनकिरपये, अवचने हि स्त्रीप्रत्ययानामप्यपवादविज्ञान'मिति वक्ष्यति तत्र वक्तव्यं भवति॥ एतदपि नास्ति प्रयोजनम्। अत्राप्यकर्तरीत्येवानुवर्तिष्यते॥*॥ सञ्ज्ञाग्रहणानर्थक्यं च सर्वत्र घञो दर्शनात्॥*॥ सञ्ज्ञाग्रहणं चानर्थकम्॥ किं कारणम्?॥ 'सर्वत्र घञो दर्शनात्'। असञ्ज्ञायामपि हि घञ् दृश्यते। को भवता दायो दत्तः। को भवता लाभो लब्ध इति॥ यदि सञ्ज्ञाग्रहणं न क्रियतेऽतिप्रसङ्गो भवति। 'कृतः कटः' इत्यत्र 'कारः कटः' इति प्राप्नोति॥ ॥*॥ अतिप्रसङ्ग इति चेदभिधानलक्षणत्वात्प्रत्ययस्य सिद्धम्॥*॥ अतिप्रसङ्ग इति चेत्तन्न॥ किं कारणम्?॥'अभिधानलक्षणत्वात्प्रत्ययस्य सिद्धम्'। अभिधानलक्षणा कृत्तद्धितसमासा अनभिधानान्न भविष्यन्ति। [ अकर्तरि च ]॥

परिमाणाख्यायां सर्वेभ्यः॥ ३।३।२०॥

सर्वग्रहणं किमर्थम्?॥ सर्वेभ्यो धातुभ्यो घञ्यथा स्यादजपोरपि विषये। एकस्तण्डुलनिश्चायः। द्वौ शूर्पनिष्पावौ॥*॥ सर्वग्रहणमनर्थकं परिमाणाख्या-

---

[ ]रार्थमिति। तेन 'परिमाणाख्यायां सर्वेभ्य'इत्यनेन घञ्कारके भवति न [ ] भाव इति एका तिलोच्छ्रितिर्द्वे सृती इत्यत्र भावे घञोऽप्रसङ्गादेतदर्थं 'घञनुबन्धग'मित्यादि न वक्तव्यं भवति। [ अकर्तरि च कारके ]॥

परिमाणा। अजपोरपीति। अन्यथा 'पुरस्तादपवादा' इति न्यायेनाऽचमेव

---

[ ]भेदो भाष्ये इति,शङ्कितानैरिचस्य व्याख्यानस्य भाष्यविरोध इति।भगवत एवेत्यन्ये। भाष्ये-नन्विवयुक्तमिति। प्रसज्यप्रतिषेधात्पर्युदासो न्याय्य इति भावः। घञनुबन्धगमित्यादीति। 'परिमाणाख्याया'मित्यादिः घञ्विधानमजपोरेव बाधकं न तु स्त्रीप्रत्ययाना'मित्यर्थं हि तद्वार्त्तिकमिति भावः। ननु 'परिमाणाख्याया'मित्यत्र 'कारके' इत्यनुवृत्तावपि कर्मणि क्तिन बाधित्वा घञा भाव्यमित्यर्थं तदावश्यकमिति चेन्न, परिमाणाख्यायां भाव एव क्तिन कर्मण्यभिधानस्वाभाव्यादिति न दोषः॥

परिमाणा। परिमाणं-परिच्छित्तिः, तस्या आख्यानं-कथनं तदित्यर्थः।

---

१'इदं भाष्यमित्यन्ये'। २इदं त्रुटितम्। ३'श्रुती'। ४इदं कोष्ठितम्।५'इति'।६'भाव'।

यामिति सिद्धत्वात् ॥ ४॥ सर्वग्रहणमनर्थकम् ॥ किं कारणम् ? ॥ 'परिमाणा ख्यायामिति सिद्धत्वात्'। 'परिमाणाख्याया'मित्येव घञ्सिद्धोऽजपोरपि विषये, नार्थः सर्वग्रहणेन ॥ अस्त्यन्यदेतस्य वचने प्रयोजनम् ॥ किम् ? ॥ एकः पाकः द्वौ पाकौ त्रयः पाका इति ॥ पूर्वेणाप्येतत्सिद्धम्॥ न सिध्यति। 'संज्ञाया'मिति पूर्वो योगो, न चैषा संज्ञा ॥ प्रत्याख्यायते संज्ञाग्रहणम् ॥ अथापि क्रियते एवमपि न दोषः । अजपावपि संज्ञायामेव । यथाजातीयक उत्सर्गस्तथाजातीयकेनाऽपवादेनापि भवितव्यम् ॥ ५॥ उत्तरार्थं तर्हि ॥ ५॥ [ उत्तरार्थं तर्हि वक्तव्यम् ]॥'इङश्च'।सर्वेभ्योपि यथा स्यात्।ननु चायमिङ् एक एव पठ्यतेऽङ्गरूपः । सनपु साधनेषु यथा स्यात् । उपेत्याऽधीयते तस्मादुपा

प्र ]धन्याधेन साऽपमिति भावः ।द्वौ शूर्पनिष्पावाविति। यद्यप्यत्र निरभ्यो पूल्वो'रिति घञ्सिध्यति तथापि सर्वापवादार्थं सर्वग्रहणीयाद्यादनेनैव भवितुमर्हतीत्युपन्यासः । सर्वग्रहणमिति । बाध्यमानापेक्षया समुदायापेक्षया वा पुरस्तादपवादन्यायो नास्तीति भावः । एकः पाक इति । कर्मण्यपि घञ् भवतीति भावः । सर्वेष्विति । सर्वेभ्य इति तादर्थ्ये चतुर्थी तेनायमर्थो लभ्यत इति भावः । तेना

उ ] परिच्छित्तिश्च प्रत्ययार्थस्येति भावः । सा चैकादिशब्दैरुदाहरणेषु स्पष्टैव । पुनर्निधानादेवाऽजब्विषये भवनात्यत आह—अन्यथेति । उपादानादनेनैवेति । 'परिमाणाख्याया'मित्यनेनेवेत्यर्थः । निरभ्योः पूल्वो'रिति च न कार्यमिति भावः । निश्चायनिष्पावौ कर्मणि घञन्तौ । 'तण्डुल'शब्देन 'शूर्प'शब्देन च तत्पुरुषः । निधीयते स भावसाधनो वा । निश्चायो—राशिः । अत्र राशेरनन्तेन परिच्छेदः । निष्पूयते तुषाद्यपनयनेन स निष्पावस्तण्डुलराशिः । अत्रापि सङ्ख्यया परिच्छेदः । निश्चाये 'ग्रहवृदृ'त्यप्प्राप्तिः । बाध्यमानाऽपेक्षायामिति । सामान्यचिन्तायामिदम् । बाध्यविशेषचिन्तायामपि प्रकारविशेषमाह—समुदायाऽपेक्षाया चेति ।

ननु 'भावे' इत्यनेनैव सिद्धमत आह—कर्मण्यपीति । परिमाणज्ञापनार्थं भाष्ये एकादिपदोपादानम् । भाष्ये—अथाऽपीति । एवञ्च पाकादिशब्दानामसंज्ञात्वादकर्तरि चेत्यनेन न सिद्धमित्यर्थः । एतस्याऽभावार्थं 'परिमाणाऽऽख्याया'मित्यस्य चारितार्थ्यादजपोर्विषये घञर्थं 'सर्व'ग्रहणमावश्यकमिति भावः । समाधत्ते—अजपावपीति । एवञ्च 'तण्डुलनिश्चाय' इत्यादावप्यसंज्ञात्वादपोऽप्राप्तौ 'परिमाणाख्याया'मित्येव घञ्सिद्ध इति नार्थः सर्वग्रहणेनेत्यर्थः । अजपोः संज्ञाविषयत्वे युक्तिमाह—यथाजातीयक इति । अन्यथाऽसंज्ञायां तयोश्चारितार्थ्येन घञपवादत्वमेव न स्यादिति भावः । षष्ठी—सूत्रमार्ये । ननु धातुविशेषस्य 'सर्वेभ्य' इति पञ्चम्यन्तात् सर्वेष्विति कथं लभ्यतेऽत आह—सर्वेभ्य इति । तादर्थ्ये इति ।नन्वपादानेऽकर्मीरि

ध्यायः। अधीयते तस्मिन्नध्याय ।' अध्यायन्यायोद्यावसंहारा[धारावाया]श्चे'त्ये- तन्निपातनं न कर्तव्यं भवति ॥ एतदपि नास्ति प्रयोजनम् । क्रियते न्यास एव ॥ उत्तरार्थमेव तर्हि वक्तव्यम् । 'कर्मव्यतिहारे णच्स्त्रिया'मिति सर्वेभ्यो यथा स्यात् ॥ एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत्–"कर्मव्यतिहारे स्त्री- ग्रहण व्यतिपाकार्थम् । पृथग्ग्रहणं बाधकबाधनार्थं व्यावचोरीत्याद्यर्थम् । तत्र व्यतीक्षादिषु दोष ,सिद्धं तु प्रकृते स्त्रीग्रहणे णजग्रहणं णिञ्ग्रहण चे"ति॥ उत्तरार्थमेव तर्हि।'अभिविधौ भावइनुण्'।सर्वेभ्यो यथा स्यात्। सांराविणम्॥

एतदपि नास्ति प्रयोजनम्। वक्ष्यत्येतत् "अभिविधौ भावग्रहण नपुंसके क्तादिनिवृत्त्यर्थम्। पृथग्ग्रहण बाधकबाधनार्थं, न तु ल्युट" इति ॥ इद तर्हि प्रयोजन,प्रकृत्याश्रयो योऽपवादस्तस्य बाधन यथा स्याद्यार्थाश्रयो योऽपवादस्तस्य बाधनं मा भूदिति । एका तिलोच्छिूतिः। द्वे सृते इति ॥ 'घञनुक्रमणमज- ब्विषये, अवचने हि स्त्रीप्रत्ययानामप्यपवादविज्ञान'मिति चोदयिष्यति तन्न वक्तव्य भवति । ॥ ५॥ घञनुक्रमणमजब्विषये ॥*॥ घञनुक्रमणमजब्विषय- इति वक्तव्यम् । ॥*॥ अवचने हि स्त्रीप्रत्ययानामप्यपवादविज्ञानम् ॥*॥ अनु- च्यमाने ह्येतस्मिन्स्त्रीप्रत्ययानामप्यपवादोऽयं विज्ञायेत । एका तिलोच्छिूतिः, द्वे सृती इति ॥*॥ दारजारौ कर्तरि णिलुक् ॥*॥ दारजारौ कर्तरि वक्तव्यौ ।

---

प्र.]धिकरणे घं बाधित्वा घञ् भवति । प्रकृत्याश्रय इति । 'सर्वेभ्य' इति पञ्चमी- निर्देशादयमर्थो लभ्यत इति भाव.। अर्थाश्रय इति। 'स्त्रिया'मित्यर्थं निर्दिश्य क्तिनो विधानादर्थाश्रयत्वम् । एकेति । ननु कारकानुवृत्त्याऽत्र भावे घञ् न भविष्यति । नैतदस्ति । उभयाधिकारात् । दारजाराविति । णिलोपे सति तस्य स्थानिवत्त्वा- द्वृत्त्याश्रया वृद्धिर्न स्यादिति णिलुग्विधीयते। तस्य हि अपरनिमित्तकत्वात्, वि उत्-

---

उ ] घं कारके इत्युक्ते सिद्धमत आह–तेनाऽधिकरणे[ई]ति।अपादानन्तु दृष्टान्ता र्थमिति भाव । तदुदाहरणम्–अधीयते तस्मिन्नध्याय इति । रूपाद्यमाल इत्य- र्थं । भाष्ये–णच्स्त्रियामिति सर्वेभ्य इति । 'व्यावचोरी'त्यादौ युजादिविषये- ऽपीत्यर्थं । भाष्ये–कर्मव्यतिहारे इत्यादि । 'तत्र णच्प्रत्ययके सूत्रे 'स्त्री'ग्रहणं 'व्यतिपाको वर्तते' इत्यत्र णजभावार्थम् , 'स्त्रियां क्तिन्'इत्यत्र. पृथग्ग्रहणन्तु व्यावचोरी'त्यादौ 'ण्यासे'ति युजादीन् बाधकानां बाधनार्थम् , न च व्यतीक्षा- दिषु 'गुरोश्च हल' इत्यस्यापि बाधकमतः, 'स्त्रियां क्ति'न्नित्यधिकारे एव 'कर्मव्य- तिहारे णच्', ततो 'स्त्रिय'इति न्यासेन सिद्धे'रिति तद्भाष्यितार्थः । इनुण्सर्वेभ्य इति । 'सांराविण'मित्यादौ भावघञादिविषयेऽपीत्यर्थं । अभिविधाविति । 'शब्द-

---

१ 'ऽस्मिन्न'अस्मिन्नधीयते इत्य' । २ क्वचिन्न ।३ 'पृथक्तु'।४ 'सृती' 'श्रुती' ।

समि मुष्टाविति वचनमनर्थकम् ॥ किं कारणम् ? ॥ 'परिमाणाख्यायामिति सिद्धत्वात्' ॥ 'परिमाणाख्याया'मित्येवात्र घञ्सिद्धः ॥*॥ अपरिमाणार्थं तु ॥*॥ अपरिमाणार्थोऽयमारम्भः । मल्लस्य सङ्ग्राहः । मुष्टिकस्य सङ्ग्राह इति । ॥*॥ उद्ग्राभनिग्राभौ च च्छन्दसि स्रुगुद्यमननिपातनयोः ॥*॥ उद्ग्राभो निग्राभ इतीमौ शब्दौ छन्दसि वक्तव्यौ, स्रुगुद्यमननिपातन[योरर्थ]योः । उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् ॥ [ समि मुष्टौ ] ॥

कर्म-व्यतिहारे णच्स्त्रियाम् ॥ ३।३।४३ ॥

स्त्रीग्रहणं किमर्थम् ? ॥*॥ कर्मव्यतिहारे स्त्रीग्रहणं व्यतिपाकार्थम् ॥*॥ कर्मव्यतिहारे स्त्रीग्रहणं क्रियते ॥ [किं प्रयोजनम् ?॥] 'व्यतिपाकार्थम्'। इह मा भूत्,–व्यतिपाको वर्तते ॥

अथ किमर्थं पृथग्ग्रहणं ? ॥*॥ पृथग्ग्रहणं बाधकबाधनार्थम् ॥*॥ पृथग्ग्रहणं क्रियते॥[किं प्रयोजनम् ?]॥ 'बाधकबाधनार्थं'। ये तस्य बाधकास्तद्बाधनार्थम् ॥ किं प्रयोजनम् ? ॥*॥ व्यावचोरीव्यावचर्च्यर्थम् ॥*॥ [व्यावचोरी-व्यावचर्च्यर्थम् ] । व्यावचोरी वर्तते । व्यावचर्ची वर्तते ॥*॥ तत्र व्यतीक्षादिषु दोषः ॥*॥ तत्र व्यतीक्षादिषु दोषो भवति । व्यतीक्षा वर्तते । व्यतीहा वर्तते । ॥*॥ सिद्धं तु प्रकृते स्त्रीग्रहणे णज्ग्रहणं णिज्ग्रहणं च॥*॥सिद्धमेतत्॥

[...] ]वाच्याश्रयेण तु परिहारः । [ समि मुष्टौ ] ॥

कर्म । पृथग्ग्रहणमिति । प्रकरणोत्कर्षात् त्रिनो बाधकानामप्यनेन बाधनमिति भावः । व्यतीक्षादिष्विति । 'अप्रत्ययात्' 'गुरोश्च हलः' इत्यकारस्यापि बाधप्रसङ्गादित्यर्थः । सिद्धं त्विति । यथैव व्यावक्रुष्टिरिति त्रिन् भवति ।

उ.] समि मुष्टौ । अङ्गुलीति । इदमुपलक्षणेनाऽन्वाख्यायते । मुष्टिकस्येति भाष्ये । 'मुष्टौ सुखम्' इत्यर्थे आकर्षादित्वात् ष्ठल् । निपातनम्–अधः पातनम् ॥

कर्मव्य । भाष्ये–व्यतिपाकार्थमिति । पुंलिङ्गे भावे मा भूदित्यर्थमित्यर्थः । अकर्तृकारके तु नाऽनभिधानादिति भावः । प्रकरणोत्कर्षादिति। स्त्रिया त्रिसे'त्येतदपेक्षयेति भावः । बाधकानामिति। 'व्यावचोरी'त्यादौ 'व्याम्ये'ति युजादीनामित्यर्थः । अत्रेदं बोध्यम्–त्रिनोऽयमपवादः, अत एव पक्षे वासरूपविधिना सोऽपि । अन्येषां तदपवादानान्तु पृथक् पाठेन पूर्वविप्रतिषेधरूपतया बाधकः । अत एव व्यतीक्षेत्यसिद्धिः शङ्किता भाष्ये, विप्रतिषेधविषये वाऽसरूपस्याऽप्रवृत्तेः । णिज्ग्रहणञ्चेति । इह 'व्यावचोरी'त्यादौ बाधकबाधनार्थम् । व्यावक्रुष्टिरिति । स्पष्टश्चाऽयम्प्रयोगो वाऽसरूपसूत्रे । 'व्यात्युक्षी'ति च भाष्ये । त्रिचेति । स्त्र्यधिकारे वाऽसरूप-

१'त्रित्येतद्भ'। २'मित्येव सिद्ध'मिति मिद्ध।३ 'योरर्थयो।४ इतिसा।५ 'पृथगु'।

कथम् ?॥ प्रकृत एव स्त्रीग्रहणस्य योग कर्तव्य । 'स्त्रियां क्तिन्'। तत 'कर्म व्यतिहारे णच्' । ततो 'णिच ' ॥ [ कर्मव्यतिहारे णच् ] ॥

अभिविधौ भाव इनुण् ॥३।३।४४ ॥

भावग्रहण किमर्थम् ? ॥*॥ अभिविधौ भावग्रहण नपुसके क्तादिनिवृत्त्यर्थम् ॥ ॥ अभिविधौ भावग्रहण क्रियते॥ [किं प्रयोजनम् ]॥ 'नपुसके क्तादिनिवृत्त्यर्थम्' । नपुसकलिङ्गे भावे क्तादयो मा भूवन्निति ॥ अथ किमर्थं पृथग्ग्रहण क्रियते ? ॥ ॥ पृथग्ग्रहण बाधकबाधनार्थम् ॥*॥ पृथग्ग्रहण क्रियते ॥ [ किं प्रयोजनम्? ] ॥ 'बाधकबाधनार्थम्' । ये तस्य बाधकास्तद्बाधनार्थम् । ॥*॥ न तु ल्युट ॥ ॥ ल्युटो बाधन नेष्यते साङ्कूटनमित्येव भवति ॥

परश्च् ॥ ३।३।५६ ॥

॥*॥ अभिविधौ भयस्योपसङ्ख्यानम् ॥ ॥ अभिविधौ भयस्योपसङ्ख्यान कर्तव्यम् । भयम् ॥ अत्यल्पमिदमुच्यते 'भयस्ये ति । ॥*॥ भयादीनामिति

प्र ]क्त्याल्युटौ च न सिध्यति। नैष दोष । कृत्यल्युटो बहुल'मिति बहुलवचनाद्यथेष्ट लाभप्रयोजनात् । [ कर्मव्यतिहारे णच् ] ॥

अभिविधौ । भावे भारम' इति द्वयेऽपि प्रकृते शब्दशक्तिस्वाभाव्याद्भाव एवेनुण्भविष्यतीति मत्वाह–भावग्रहणमिति। नपुसक इति । 'मध्येऽपवादा पूर्वान्विधीन् बाधन्त'इति इनुण् घञमेव बाधेत न तु क्तादीन्।भावग्रहणात्त्वधिकविधानार्थात्तानपि बाधत इति भाव । अथेति । नपुसके भावे' इत्यस्यानन्तरमिद वक्तव्यमिति भाव । पृथग्ग्रहणमिति। 'वासरूपोऽस्त्रिया मिति वचनात्पक्षे क्तादय स्युरिति

उ ]निषेधाभावात्पक्षे ल्युटप्रसङ्गाद्विप्रतिषेधेन 'युवोरे स्यप्रत्ययप्रसङ्गादिति भाव । एवञ्च 'वाऽसरूप'सूत्रस्थप्रयोगाऽनुगतस्वभाष्यविरोधात् सिद्धान्त्वन्यायतरसूत्रस्थवार्तिकमेवन्देसुक्तिरिति भाव । व्यावचोरीत्यती ने बहुलग्रहणाद्भाष्ये इति तात्पर्यम् । उत्तरन्तु–स्त्रियामित्यधिकरणप्रयुक्तलाघवाद्बाहुल्यस्य तत्राऽप्यावश्यकत्वाच्च वार्तिकोक्तमेव युक्तमिति ॥ [ कर्मव्यतिहारे णच् ] ।

अभिविधौ । द्वये ऽपि प्रकृते इति । प्रकरणे इत्यर्थ । 'द्वयोरपि प्रकृते' इति पाठान्तरम्। भाव एवेति । णज्वादेरिति भाव । मध्येऽपवादा इति । बाध्य सामान्यचिन्तयेद सिद्धमिति 'वाऽसरूप न्यायेन पक्षे प्राप्तयोरपि तयोर्बाधनार्थं भाव ग्रहणमिति भाष्याऽभिप्रायवर्णनमुचितम् । वाऽसरूप इति । स्त्र्यधिकारे एव 'वाऽसरूप'निषेध इति प्राक् प्रतिपादनादिति भाव । भाष्ये–ये तस्येति । घञ्य बाध का तत्पर्या इत्यर्थ उचित । कैयटोक्तार्थे नाऽऽरम्भारस्य, भावग्रहणस्तादविरो

१इद लुप्त । २'पृथक्तु' । ३ इद भाष्यमित्यन्ये । ४ प्रयोजनात्' । ५ द्वयोरपि' ।

वक्तव्यम् ॥८॥ इहापि यथा स्यात् भयं वर्षम् ॥ किं प्रयोजनम् ? ॥९॥ नपुंसके क्तादिनिवृत्यर्थम् ॥१०॥ नपुंसकलिङ्गे भावे क्तादयो मा भूवन्निति ॥११॥ क्तादिभ्यः प्रतिषेधः ॥१२॥ क्तादिभ्यः प्रतिषेधो वक्तव्यः । क्तः अर्थः मन्त्र [ इति ] ॥१३॥ जवसवौ छन्दसि ॥१४॥ जवसवौ छन्दसि वक्तव्यौ । ऊर्वोरस्तु मे जवः । अयं मे पञ्चौदनः सवः । [ एरच् ] ॥

ग्रहवृदृनिश्चिगमश्च ॥ ३।३।५८ ॥

किमर्थं निस्पूर्वाच्चिनोतेरब्विधीयते नाऽचैव सिद्धं, न ह्यस्ति विशेषो निस्पूर्वाच्चिनोतेरपो वा, अचो वा, तदेव रूपं स एव [च] स्वरः॥ न सिध्यति 'हस्तादाने चेरस्तेये' इति घञ्प्राप्नोति तद्बाधनार्थम् । अत उत्तरं पठति॥१॥ अब्विधौ निश्चिग्रहणमनर्थकं स्तेयस्य घञ्विधौ प्रतिषेधात्॥२॥ अब्विधौ निश्चिग्रहणमनर्थकम् ?॥ किं कारणम् ॥ 'स्तेयस्य घञ्विधौ प्रतिषेधात्' । स्तेयस्य घञ्विधौ प्रतिषेध उच्यते । निस्पूर्वश्चिनोतिः स्तेये वर्तते ॥ [॥३॥ अस्तेयार्थन्तु ॥४॥] अस्तेयार्थं तर्हीदं वक्तव्यं निस्पूर्वाच्चिनोतेरस्तेयेऽप्यपो यथा स्यात् । ॥५॥अस्तेयार्थमिति चेन्नाऽनिष्टत्वात्॥६॥अस्तेयार्थमिति चेत्तन्न॥किं कारणम्?॥ 'अनिष्टत्वात्'। नहि निस्पूर्वाच्चिनोतेरस्तेयेऽबिष्यते॥ किं तर्हि?॥ घञेवेष्यते ॥ एवं तर्हि सिद्धे सति यन्निस्पूर्वाच्चिनोतेरप् शास्ति तज्ज्ञापयत्याचार्यो यत्तदन्त –

प्र.]प्रकरणेनान्वयेण क्तादरूपविधिर्बाध्यत इत्यर्थः । [ अभिविधौ भावे ] ॥

एरच् । वर्षमिति । वर्षणमित्यपि भवति । 'वृषभो वर्षणा'दिति भाष्यकारवचनात् । क्तद इति । ण्यन्तेभ्योऽपि प्रतिषिद्धे घञेव भवति । 'एरजण्यन्ताना'मिति तु वचनमनार्षम् । जवसवाविति । अपि प्राप्तेऽब्विधिः । स्तरे विशेष ।

ग्रहवृ । एष स्वर इति । मध्योदात्तत्वं हृस्वरेण भवति । घनिरण्योरिति ।

उ.]पथा । अत्राऽप्येवकरणात्पूर्वविप्रतिषेधस्त्वनेनेति तात्पर्यम् । सङ्कूटनमित्येवेति । सङ्कूटनमिति भवत्येवेत्यन्वयः । अत एव 'पुंयोगा'दिति सूत्रस्य 'साधूटिन'मिति भाष्यप्रयोग सङ्गच्छते ॥ [ अभिविधौ ]

एरच् । भाष्यकारवचनादिति । ततो धातुवान्युडपीति भाव । स्वरे इति । अपि आद्युदात्तम्, घन्यन्तोदात्तमित्यर्थः ॥ [ एरच् ] ।

ग्रहवृ । भाष्ये स एव[च]स्वर इति।'थाऽथघ'ञिति सूत्रेणेति भाव ।भाष्ये-स्तेये वर्तते इति । हस्तादानविषये इति भाव । किन्तर्हि घञेवेति। हस्ताऽऽदानविषये इत्यर्थः । 'प्रकृतसूत्रे 'निश्चि'ग्रहणं स्तेयार्थमेवाऽप्राप्तेरेव सिद्धम् ।

१ 'क्तादिभ्य इति' । २ इति क्वचित । ३ 'एतावत्' । ४ 'चेन्न प्राप्तत्वात्' । ५ इदं उक्तं स्यात् । ६ 'चे यथा' ।

थाथघन्त्ताञविग्रकरणेमिति तन्निपूर्वाच्चिनोतेर्न भवतीति ॥ किमेतस्य ज्ञापने प्रयोजनम् ?॥ निश्चय । एष स्वर सिद्धो भवति ॥ ॥ वशिरण्योश्चो पसङ्ख्यानम् ॥१॥ वशिरण्योश्चोपसङ्ख्यानं कर्तव्यम् । मवश स्वन्धवम् । धन जय रणे रणे ॥*॥ घनर्थे कविधान स्थास्नापाव्यधिहनियुध्यर्थम् ॥२॥ घनर्थ को विधेय ॥ किं प्रयोजनम् ? ॥ स्थास्नापाव्यधिहनियुध्यर्थम्' । स्था-प्रति ष्ठन्तेऽस्मिन्धान्यानीति प्रस्थ । प्रस्थे हिमवत शृङ्गे । स्था ॥ स्ना-प्रस्ना न्ति तस्मिन्निति प्रस्न । स्ना । पा-प्रपिबन्त्यस्यामिति प्रपा । पा ॥ व्यधि-आविध्यन्ति तेनाऽऽविधम् । व्यधि ॥ हनि-विघ्नन्ति तस्मिन्मनांसि विघ्न । हनि ॥ युधि-आयुध्यन्ते तेनाऽऽयुधम् ॥ [ प्रहृष्टनिधि ] ।

स्तम्बे क च ॥ ३।३।८३ ॥

कस्मादय को विधीयते ?॥ 'हन्ते'रित्याह ॥ तद्धन्तिग्रहण कर्तव्यम् ?॥ न कर्तव्यम् । प्रकृतमनुवर्तते ॥ क प्रकृतम् ? ॥ 'हनश्च वध' इति ॥ तद्वा अनेकेन निपातनेन व्यवच्छिन्न न शक्यमनुवर्तयितुम् ॥ नैतानि निपातनानि । हन्तेरेते आदेशा ॥ यद्यादेशा घनस्वरो न सिध्यति । घर्न ॥ सन्तु तर्हि निपातनानि ॥ ननु चोक्त 'तद्वा अनेकेन निपातनेन व्यवच्छिन्न न शक्यमनुवर्तयितु'मिति ॥ सबन्धमनुवर्तिष्यते ॥ अथ वा पुन सन्त्वादेशा ॥ ननु चोक्त 'स्वरो न सिध्यती'ति ॥ नैष दोष । अकारान्ता आदेशा ॥ अथ यदे षीकया स्तम्बो हन्यते कथ तत्र भवितव्यम् ?॥ के चित्तावदाहु -'स्तम्बघ्न'

प्र ]घनि प्राप्ते वचनम् । वशन वश । रणन्त्यस्मिन्निति रण । घनर्थ इति। भाव कर्तृवर्जित च कारक घनर्थ । [ प्रहृष्टनिश्चिगमश्च ] ।

स्तम्बे क च । घनस्वर इति । अन्तोदात्तत्व न सिध्यति, अप्स्वरेणाद्युदात्त त्वप्रसङ्गादित्यर्थ । अकारान्त इति । तनाऽन्त्यो लोपे कृते उदात्तनिवृत्तिस्वरेणाप

उ ]अस्त्येयार्थं चेत्तत्र, नि पूर्वाच्चिनोते पूर्वविप्रतिषेधेन घन एवष्ट'रिति भाष्यार्थ । घञ् चेति पाठे 'च'शब्द एवार्थो द्रष्टव्य । कृत्स्वरेणेति । 'गतिकारकोपपदा'दिति विहितेन ॥ [ प्रहृष्टनिश्चिगमश्च ] ।

स्तम्बे क च । अनेकेनेति । घनाऽन्तर्वनप्रघणप्रघाणोद्घनाऽपघनरूपेणे त्यर्थ । अप्स्वरेणाद्युदात्तेति । निपातने तु निपातनात् 'फिषोऽन्त' इति सिद्धि-रिति भाव । तत्राऽन्त्यो लोप इति । प्रत्ययसन्नियोगशिष्टतया विधानादार्द्धधातुक इति लोप इति भाव । आदेशाश्च स्थानिस्वरेणान्तरतम्यादन्तोदात्ता इति तात्पर्यम् । तस्य सर्वोऽपवादत्वादिति । यद्यपि पुम्यय चरितार्थस्तथापि 'बहुल'ग्रहणादिति

१ 'अस्मिन्' । २ इति क्वचिन्न । ३'आविध' । ४ 'घन इति' । ५ 'रणति' ।

ति भवितव्यम् ॥ अपर आहु –'स्तम्बहेति'रिति भवितव्यम्, ऊतियूति-जूतिसातिहेतिकीर्तयश्चेति निपातनमिति। अपर आहु.–स्तम्बहननीति भवितव्यमिति।वक्ष्यत्येतत्''अजब्भ्यां स्त्रीखलना स्त्रिया· खलनौ विप्रतिषेधेने'ति।

## यजयाचयतविच्छप्रच्छरक्षो नङ् ॥ ३।३।९० ॥

॥*॥ यजादिभ्यो नस्य ङित्त्वे सम्प्रसारणप्रतिषेध ॥*॥ ॥*॥ यजादिभ्यो नस्य ङित्त्वे सम्प्रसारणस्य प्रतिषेधो वक्तव्य । प्रश्न इति ॥ एवं तर्ह्यङिन्करिष्यते ॥*॥ अङिति गुणप्रतिषेध· ॥*॥ यद्यङिद्गुणस्य प्रतिषेधो वक्तव्य. । विश्न इति । सूत्रं च भिद्यते ॥ यथान्यासमेवास्तु । ननु चोक्त 'यजादिभ्यो नस्य ङित्त्वे सम्प्रसारणप्रतिषेध' इति ॥ नैष दोष [ ॥*॥ निपातनात्सिद्धम् ॥*॥ ] निपातनादेतत्सिद्धम् ॥ किं निपातनम्?॥प्रश्ने चासन्नकाल इति॥

## स्त्रियां क्तिन् ॥ ३।३।९४ ॥

॥*॥ स्त्रिया क्तिनाबादिभ्यश्च ॥*॥ स्त्रिया क्तिन्निच्चबाधादिभ्यश्चेति वक्तव्यम् । आप्ति· । राद्धि· । दीप्ति· ॥*॥निष्ठाया वा सेटोऽकारवचनात् [सिद्धं]॥*॥ निष्ठायां वा सेटोऽकारवचनात्सिद्धम् । अथ वा निष्ठाया सेटोऽकारो भवतीति वक्तव्यम् ॥ यदि निष्ठायां सेटोऽकारो भवतीत्युच्यते स्रंसा ध्वंसेति न सिध्यति । स्रस्ति· ध्वस्तिरिति प्राप्नोति ॥ किं पुनरिदं परिगणनं आहो स्विदुदाहरणमात्रम् ?॥ किं चात· ? ॥ यदि परिगणनं भेदो भवति । अथोदाहरणमात्रं नास्ति भेदः । स्रस्ति· ध्वस्तिरित्येव भवितव्यम् ॥

## स्थागापापचो भावे ॥३।३।९५॥

॥*॥ स्थादिभ्य· सर्वापवादप्रसङ्ग ॥*॥ स्थादिभ्य· सर्वापवाद· क्तिन्-

---

प्र.]उदात्तत्व भवतीति भाव· । स्तम्बघ्नेति घकप्रत्यये रूपं । तस्य सर्वापवादत्वादिति भावः । स्तम्बहेतिरिति । निपातनस्य सर्वापवादत्वादिति भाव ॥

स्त्रियां क्तिन् । स्रस्तिरिति । स्रंसा ध्वंसेति नैव भवतीति भाव ।

स्थागापा । स्थादिभ्य इति । बाध्यमात्रापेक्षया, बाध्यसमुदायापेक्षया वा

---

उ.]भाव । भाष्ये–अजब्भ्यामिति । 'हेति'रिति निपातनसत्त्वे चारितार्थ्यमिति भाव· । निपातितहेतिशब्द शस्त्रे रूढ इत्यन्ये ॥ [ स्तम्बे क च ] ।

स्त्रिया क्तिन्।क्तिन्नाबादिभ्य इति वचनं 'गुरोश्च हल' इत्येतत्प्राप्तियोग्यविषयं, 'निष्ठाया वा सेटोऽकारवचना'दित्यनेन समानयोगक्षेमत्वादित्याहु· । एवं निष्ठाभावेऽपि सूत्रप्राप्तिविषया आबादय इति फलितम् ॥ [ स्त्रियां क्तिन् ] ॥

---

१ 'निपातनादिति'। २ इदं क्वचित्। ३ 'क्तिन्नाबा'। ४ केचित्तु सिद्धत्वमित्यनेनेदं वार्तिकमित्याहु· ।

प्राप्नोति, स यथैवाऽटं बाधते एवं ण्वुलिमपि बाधेत । का त्व स्थायिका-मस्था । को त्व स्थायिम् ॥*॥ सिद्धमद्विधाने स्यादिप्रतिषेधात् ॥ ३॥ सिद्ध-मेतत् ॥ कथम् ?॥[अद्विधाने 'स्यादिप्रतिषेधात्'॥]अद्विधाने एव स्यादीना प्रतिषेधो वक्तव्य । प्रतिषिद्धे तस्मिन् क्तिनेव भविष्यति ॥ सिध्यति । सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवास्तु । ननु चोक्त 'स्यादिभ्य सर्वापवादप्रसङ्ग' इति ॥ नैष दोष । 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरा'नित्येव-मय क्तिया क्तिनवं बाधिष्यते ण्वुलिजी न बाधिष्यते ॥

॥*॥ श्रुयजीषिस्तुभ्य करणे ॥*॥ श्रुयजीषिस्तुभ्य करणे क्तिन्वक्तव्य । श्रूयतेऽनयेति श्रुति । इज्यतेऽनयेति इष्टि । इष्यतेऽनयेति इष्टि । स्तूयते-ऽनयेति स्तुति ॥*॥ ग्ला[म्ला]ज्याहाभ्यो नि ॥*॥ ग्ला[म्लै]ज्याहाभ्यो निर्वक्तव्य । ग्लानि [म्लानि] ज्यानि हानि ॥ [ स्थागापापचो ] ।

प्रजयजोर्भावे क्यप् ॥ ३।३।९८ ॥

॥*॥ क्यब्विधिरधिकरणे च ॥*॥ क्यब्विधिरधिकरणे चेति वक्तव्यम् । समजन्ति तस्या समज्या ॥[ प्रजयजोर्भावे ] ।

कृञ. श च ॥ ३।३।१०० ॥

॥*॥कृञ श चेति वावचन क्तिन्नर्थम्॥*॥ कृञ श चेति वावचन कर्त-व्यम् ॥ [ किं प्रयोजनम् ? ॥ 'क्तिन्नर्थम्'] । क्तिन्नपि यथा स्यात् । कृति ॥

इच्छा ॥ ३।३।१०१ ॥

किं निपात्यते ? ॥*॥ इषे शे यगभाव ॥*॥ अल्पतरमिदमुच्यते

प्र.]पुरस्तादपवादन्यायो नास्तीति भाव ।ण्वुलिमपीति। 'विभाषाख्यानपरिप्रश्नयो'-रित्यनेन विहितं । पुरस्तादिति । अनन्तरबाधने तन्मात्रबाधो विधि परत्वादुत्त-रेण बाध्यत इत्यर्थ । श्रुयजीति । ल्युड्बाधनार्थं वचनम् । [स्थागापापचो] ।

प्रजयजो । क्यब्विधिरिति । उत्तरसूत्रे इति भाव । [प्रजयजो] ।

कृञ श च । चकारेणानन्तरस्य क्यप एव समुच्चयो न तु व्यवहितस्य क्तिन इति मत्वाह-वावचनमिति । तेन क्रिया कृत्या कृतिरिति रूपत्रयसिद्धि ॥

उ ] स्थागापा । बाध्यमानेति । बाध्यसामान्यचिन्तेयम् । बाध्यसमुदायेति । विशेषचिन्तायामपि प्रकारविशेष । [ स्थागापा ] ॥

प्रजयजो । उत्तरेति । भावे तद्विधौ दोषाभावादिति भाव । [प्रजयजो] ॥

कृञ श च । वा वचनमिति । इदमेव ज्ञापयति 'वर्णगौरवादपि योग-

१ 'आस्था '।२ इद क्वचित ।३'का त्व स्थायिकास्था '।४ 'क्तिरि'।५ इति क्वचित् ।
६ 'इषे शे यगभावो निपात्यते' इत्यन्यव्याख्या। इद भाष्यमित्यन्ये। ७'इतिभाव '।

इच्छेति॥[ ॥इच्छापरिचर्यापरिसर्यामृगयाऽट्याट्यानामुपसङ्ख्यानम् ॥*]॥ इच्छा-परिचर्यापरिसर्यामृगयाऽट्याट्यानामुपसङ्ख्यानं कर्तव्यम् ॥*॥ जागर्तेरकारो वा ॥*॥ जागर्या । जागरा ॥ [ इच्छा ] ॥

## पिद्भिदादिभ्योऽङ् ॥ ३।३।१०४॥

॥*॥ भिदा विदारणे ॥*॥ भिदा विदारण इति वक्तव्यम् । भित्ति-रन्या ॥*॥ छिदा द्वैधीकरणे ॥*॥ छिदा द्वैधीकरण इति वक्तव्यम् । छित्ति-रन्या ॥*॥ आरा शस्त्र्याम् ॥*॥ आरा शस्त्र्यामिति वक्तव्यम् । आर्तिरन्या । ॥*॥ धारा प्रपाते ॥*॥ धारा प्रपात इति वक्तव्यम् । धृतिरन्या ॥*॥ गुहा गिर्योषध्योः ॥*॥ गुहा गिर्योषध्योरिति वक्तव्यम् । गूढिरन्या । [पिद्भिदा] ॥

## ण्यासश्रन्थो युच् ॥ ३।३।१०७ ॥

किमर्थश्चकारः ? ॥ ॥*॥ [ चकारः ] स्वरार्थः ॥*॥ 'चितोऽन्त उदात्तो भवती'त्यन्तोदात्तत्वं यथा स्यात् ॥ नैतदस्ति प्रयोजनम् । 'उदात्त' इति वर्तते 'भूवीरा उदात्त' इति ॥ यद्युदात्त इति वर्तते 'प्रजने वीयते' 'अजपोर्भावे क्यप्'–किमर्थं पकारः ? ॥ तुगर्थः । ह्रस्वस्य पिति कृति तुगिति ॥ उदात्त इति वर्तते ॥ एव-मपि कुत एतत्तदन्तस्योदात्तत्वं भविष्यति न पुनरादेरिति ? ॥ उदात्त इत्य-नुवर्तनसामर्थ्याद्यस्याप्राप्तः स्वरस्तस्य भवति ॥ कस्य चाप्राप्तः ?॥ अन्त्य-स्य ॥ सामान्यग्रहणाविघातार्थस्तर्हि ॥ क्व सामान्यग्रहणाविघातार्थे-नार्थः ? ॥ युवोरनाकाविति ॥ एतदपि नास्ति प्रयोजनम् । यद्यप्येतद्–

प्र.] पिद्भिदादि ॥ आर्तिरिति । आङोऽर्नेश्च 'उपसर्गाद्धाने घाता'विति वृद्धिरेका-देशः । गुहा गिर्योषध्योरिति । गिरिशब्दोऽत्र गिर्येकदेशे वर्तते । [ पिद्भिदा ]।

ण्यासश्रन्थो ॥ युवोरिति । अन्यथा निरनुबन्धकत्वात्सर्वत्र ग्रहणं स्यादनु-न्युडादीनामिति भावः । अनुनासिकवचनादिति । तत्र ल्युडादीनामपि अनु-

उ.] विभागो गरीया'निति भावः । [ कृत्य० ३ ५ ]।

इच्छा । रो यगभाव इति । आनार्धधातुक० प्राप्ते. । [ इच्छा ]।

पिद्भिदा । ननु गुहा न गिरिरत आह–गिरिशब्द इति [ पिद्भिदा ] ॥

ण्यास । भाष्ये न पुनरादेरिति। एवञ्च पाक्षिकप्रत्ययोऽनिष्टप्रसङ्ग इति भावः । ननु प्रयत्नाधिक्ये यत्नाऽभावादादेरेव स्यादिति तन्न ; तन्न्यायस्याऽत्र गाल्ल्नहृी-कारात् । अत एव 'आद्युदात्तश्चे'ति सार्थकम् । अत एव 'तित्स्वरित'मिति तन्त्रा-दावन्तस्वरितनिर्दिष्टमिति बोध्यम्। अन्त्यस्येति। आदेस्तु 'आद्युदात्तश्चे'त्यनेन सिद्ध

१ भाष्यवार्तिकमिदमन्ये । भाष्यमित्यपरे । इह वार्तिकम् । २ ना विधानं कर्तव्य' । ३ इदं दृष्टम् । ४ भाष्यमिदमित्यन्ये । ५ 'इच्छेव हि वर्तते' ।

वक्तव्य । कृपि । किरि । गिरि ॥*॥ संपदादिभ्यः क्विप् ॥*॥ संपदादिभ्यः क्विब्वक्तव्य । संपत् । विपत् । प्रतिपत् । आपत् । परिपत् । पर्षत् ।

## कृत्यल्युटो बहुलम् ॥ ३।३।११३ ॥

॥*॥ कृल्ल्युटः ॥*॥ कृल्ल्युट इति वक्तव्यम् ॥*॥ कृतो बहुलमिति वा ॥*॥ कृतो बहुलमिति वा वक्तव्य । पादहारकाद्यर्थम् ॥ पादाभ्यां ह्रियते पादहारकः । गले चोप्यते गलेचोपकः । श्वोऽग्नीनाधास्यमानेन । श्वः सोमेन यक्ष्यमाणेन ॥

## गोचरसंचरवहव्रजव्यजापणनिगमाश्च ॥ ३।३।११९ ॥

॥*॥ गोचरादीनामग्रहणं प्रायवचनाद्यथा कषो निकष इति ॥*॥ गोचरादीनां ग्रहणं शक्यमकर्तुम् ॥ घः कस्मान्न भवति ? ॥ 'प्रायवचनाद्यथा कषः निकष इति' । प्रायवचनात् [ कषो निकष इति ] घः न भवति ॥

## हलश्च ॥ ३।३।१२१ ॥

॥*॥ घञ्विधाववहाराधारावायानामुपसंख्यानम् ॥*॥ घञ्विधाववहाराधारावायानामुपसंख्यानं कर्तव्यम् । अवह्रियन्तेऽस्मिन्नवहारः । आध्रियन्तेऽस्मिन्नाधारः । एत्यैतस्मिन्नित्यावायः । [ हलश्च ] ॥

## उदङ्कोऽनुदके ॥ ३।३।१२३ ॥

प्र ]निष्पेतुः । क्तप्रत्ययस्य 'कृदति'ङित्यधिकाराद्धात्वविहितत्वेऽपि कृत्त्वम् । तदन्तस्य प्रातिपदिकत्वाद्विभक्त्युत्पत्तिः । एवं 'मत्वर्थीय' इति । अकारलोपलक्षणाऽभावेऽपि भाष्यकारवचनाद्बहुलग्रहणाद्वा । संपदादिभ्य इति । क्तिन्नपि बहुलवचनाद्भवति-संपत्तिरिति । [ रोगाख्यायां ] ।

कृत्य । कृल्ल्युट इति । कृत्यग्रहणमपनीय कृद्ग्रहणं व्यापकत्वात्कर्तव्यम् । तस्मिंश्च कृते ल्युड्ग्रहणं न कर्तव्यं, तस्यापि कृत्त्वात् । श्वोऽग्नीनिति । अनद्यतनेऽपि लृड्भवति ।

गोचरसंचर । प्रायवचनादिति । 'हलश्चे'त्यत्र प्रायग्रहणानुवर्तनात्क्वचिदपवाद एव भवतीत्यर्थः । [ गोचरसंचर ] ।

उ ]'आहो प्रभूतादिभ्यः' "गन्धनो परदारादिभ्य" इति प्रयोगा सङ्गच्छन्ते । कृत्येति । बाहुलकादित्यन्ये । एव मत्वर्थीय इति । 'प्रातिपदिकत्वाद्विभक्त्युत्पत्ति'-रित्यनुषङ्गः । आर्द्धधातुकत्वाऽभावादतो लोपाऽप्राप्तेः क्वादित्वाऽभावेनाऽप्रत्ययेनि लोपाऽप्राप्तेश्चाह-भाष्यकारेति । बहुलग्रहणादिति भावम् । तदाश्रयणे भाष्यकारवचनं हेतुः । बहुनाऽपि स्वार्थिकोऽयं छ । पदीनपुग्यात्पादिन्यादौ न कश्चिन्नार्थवता । हलश्च । नाने-णषेति । आनोऽर्थप्रदर्शनमिदम् । येन आने 'आनो युगि'ति युक् ॥

१ इदं क्वचिन्न । २ ॥*॥ 'कृतो बहुलमिति वक्तव्य पादहारकाद्यर्थम्' ॥*॥ [ कृतो बहुलमिति वक्तव्य ॥ किं प्रयोजनं ? ॥ 'पादहारकाद्यर्थम्' ] ॥ पा० ।

तदाचार्ये सुहृद्भूत्वाऽन्वाचष्टे—'कर्तृकर्मग्रहणं चोपपदसंज्ञार्थ'मिति॥

अन्येभ्योऽपि दृश्यते ॥ ३।३।१३० ॥

॥*॥ भाषायां शासियुधिदृशिधृषिभ्यो युच् ॥*॥ भाषायां शासियुधिदृशिधृषिभ्यो युज्वक्तव्यः । दुःशासनः । दुर्योधनः । दुर्दर्शनः । दुर्धर्षणः । ॥[*॥ मृषेश्च ॥*]॥ मृषेश्चेति वक्तव्यम् । दुर्मर्षणः । इति श्रीमद्भगवत्पतञ्जलिमुनिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ।

वर्तमानसामीप्ये वर्तमानवद्वा ॥ ३।३।१३१ ॥

प्र ]मुभूयत इति। अत्र गतित्वात्सुशब्दस्य धातोः प्राक्प्रयोगः। 'स्वात्तं भवं भवते'त्यादौ खल् विवक्षणसामर्थ्यादानीत्वरजन्तरं कर्तृकर्मणी प्रयुज्येते। तदाचार्य इति। एतच्च विवरणादव्ययस्य सुभर्योऽभ्यते। चकारस्य सन्नियोगार्थत्वादीषदुस्त्वोऽप्युपपदान्याश्रीयन्ते। [ कर्तृकर्मणोश्च ]।

अन्येभ्यो। भाषायामिति। छन्दसीत्यधिकाराद्भाषायां न प्राप्नोतीति वचनम्॥*॥इति श्रीमहाभाष्यप्रदीपे तृतीयस्याध्यायस्य तृतीये पादे प्रथममाह्निकम्॥*॥

वर्तमान सा। समीपमेव सामीप्यमिति स्वार्थे ष्यञं वर्णयन्ति। अन्ये समीपस्य भावः सामीप्यं, वर्तमानस्य सामीप्यं वर्तमानसामीप्यमिति व्याचक्षते। ननु भूतभविष्यतोरनेन प्रत्ययानामतिदेशात्तयोरेव सामीप्यसम्बन्धो न वर्तमानस्येति समासाऽप्रसङ्ग।नैष दोषः। पारंपर्येण संबन्धसद्भावात्। अथवाऽस्मिन् पक्षे 'गुणेन ने'ति षष्ठीसमासप्रतिषेधः कस्मान्न भवति?। अत्र केचिदाहुः—धीरस्यादीनां रूपादिविवो-

उ ]रणसामर्थ्यादिति। न च 'पुल्मुदुज' इत्यादिविषयत्वेऽपि कृद्ग्रहणपरिभाषया सुम्प्रसंरूपेन तच्चरितार्थमिति वाच्य, भाष्यप्रयोगेणैव व्यवस्थापनादिति तत्त्वम्। बहुलग्रहणेनेत्यन्ये।हु सर्वोऽप्युपपदार्थमिति।समासस्तु पर्यावेणेति ध्येयम्॥

अन्येभ्यो। छन्दसीत्यधिकारादिति। 'छन्दसि गत्यर्थेभ्य' इत्यत ॥

॥*॥ इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते महाभाष्यप्रदीपोद्योते तृतीयाध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥*॥

वर्तमान ॥ समीपमेवेति। बाल्यकरणम् चार्थेन सामान्याधिकरण्यार्थमिति भावः। अन्याऽस्मिन् पक्षे षष्ठीसमास एव। समासाऽप्रसङ्ग इति। भूतभविष्यतिरूपितं वर्तमानस्य यत्सामीप्यं तत्र वर्तमानप्रत्ययातिदेशोऽनर्थकः। ते हि वर्तमाने प्रत्ययान्ते समीपभूतेऽपि तस्मिन् सिद्धा एव, अतो वर्तमाननिरूपितं भूतभविष्यतोर्यत्सामीप्यं तत्रैवार्थः स्वदात्ते। तथा च वर्तमानपदेन समासाऽप्रसङ्ग इति भावः। सामीप्यसम्बन्ध इति तृतीयातत्पुरुषः।सामीप्यनिमित्तिकः सम्बन्ध इत्यर्थः। सामीप्येनाऽऽश्रयतारूपः साक्षात्सम्बन्धस्तयोरेवेत्यर्थः। पारम्पर्येणेति। तत्र

वत्करणं किमर्थम् ? ॥ 'वर्तमानसामीप्ये वर्तमाने वे'तीयत्युच्यमाने वर्तमाने ये प्रत्यया विहितास्ते [ वा ] वर्तमानसामीप्ये धातुमात्रात्स्यु । वत्करणे पुन क्रियमाणे न दोषो भवति ॥ यदि च याभ्य प्रकृतिभ्यो येन विशेषेण वर्तमाने प्रत्यया विहितास्ताभ्य प्रकृतिभ्यस्तेनैव विशेषेण वर्तमानसामीप्ये भवन्ति ततोऽमी वर्तमानवत्कृता स्यु । अथ हि प्रकृतिमात्रात्स्यु प्रत्ययमात्रं वा स्यान्नामी वर्तमानवत्कृता स्यु ॥ इह वर्तमानसामीप्ये वर्तमानवद्वेत्युच्यते लडेवोदाह्रियते, यदि पुनर्लट् लङ्गवतीत्येवोच्येत ? ॥ अत उत्तरं पठति ॥ ॥वर्तमानसामीप्ये वर्तमानवद्वचनं शत्राद्यर्थम् ॥१॥ वर्तमानसामीप्ये वर्तमानवद्वचनं क्रियते ॥ [किं प्रयोजनम् ?] । 'शत्राद्यर्थम्'। शत्राद्यर्थोऽयमारम्भ । एषोऽस्मि पचन् । एषोऽस्मि पचमान इति ॥ नैतदस्ति प्रयोजनम्। लडादेशौ शतृशानचौ, तत्र लट् लङ्गवतीत्येव सिद्धम्॥ यौ तर्हि

प्र ]धाना समासप्रतिषेध इति।अन्ये त्वाहु —अयमेव निर्देशो ज्ञापयति 'अनित्य समास प्रतिषेध' इति । अपरे त्वाहु —गुणशब्दस्य सम्बन्धिशब्दत्वाद्गुणाक्षिप्तस्य गुणिन एव समासप्रतिषेध , न च वर्तमान सामीप्यस्य गुणी, भूतभविष्यतोरतद्गुणत्वात्। वत्करणमिति । 'वर्तमाने' इत्येतावतैव वर्तमानसहचरिताना प्रत्ययाना सिद्धत्वा दिति प्रश्न । धातुमात्रादिति । वर्तमानग्रहणेन साहचर्यात्प्रत्ययाना रूपमात्रमेव लभ्येत, ततश्च सङ्करोऽपि स्यात् । यस्माद्धातोर्वर्तमाने य प्रत्ययो विहित स विशेषा नुपादानाद्धात्वन्तरादपि स्यादित्यर्थ । लडेवेति । प्रवृत्तिरिति भाव । शत्राद्यर्थ मिति । 'लट शतृशानचा'वित्यनेन वर्तमानाधिकाराद्वर्तमानकाल विहितस्यैव लट शतृशानचौ भवत ,न तु कालान्तरविहितस्येति भाव । लडादेशाविति । लडादेशौ । वर्तमानग्रहणस्य तत्रानपेक्षणादिति भाव । यौ तर्हीति। 'पूङ्यजो शानन्'

उ ]सर्गादद्वारा सामीप्येन सम्बन्ध इति भाव ।प्रतियोगिनासम्बन्धनाऽन्वय । वर्त मानकालप्रतियोगिकसामीप्ये सतीत्यर्थ इत्यन्ये । 'भूतादौ वर्तमानसामीप्ये सति वर्तमानवत्प्रत्यया' इति वाक्यार्थ । एवञ्च तत्समीपे भूतादौ फलतीति बोध्यम् । तद्गुणित्वात् । सामीप्यगुणित्वादित्यर्थ । 'तद्गुणत्वा'दिति पाठे षष्ठ्यर्थे । अत मेव युक्त पाठ । 'वर्तमाने' इति प्रथमान्तेन 'वर्तमाने ये प्रत्यया' इत्यर्थ स्य लभ्यतेऽत आह—सहचरितानामिति । लक्षणयेति भाव । रूपमात्रमिति । त द्रूपाधिविशिष्टमित्यर्थ । वत्करणे तु 'वर्तमानेऽर्थे यथा भवन्ति तथा सामीप्येऽपि भवन्ती'त्यर्थान्न दोष इति भाव । रूपमात्रेति । मात्रशब्द कार्त्स्न्य । भाष्ये— यौ तर्हीति । शानानादित्यर्थ । न चायमपि वर्तमानसमीपभूतभविष्यतोर्विधीयमान

१ इद क्वचित्। २ 'विशेषणेन' । ३ किं स्तेनो' । ४ इद त्यक्तम्' ।

लडादेशौ, एषोऽस्मि पवमानः एषोऽस्मि यजमान इति॥यौ चापि लडादेशौ तावपि प्रयोजयतः। वर्तमानविहितस्य लटः शतृशानचावुच्येते, अविशेषविहितश्चाऽयं योगः॥ शत्राद्यर्थमिति खल्वप्युच्यते बहवश्च शत्रादयः एषोऽस्म्यलङ्करिष्णुः। एषोऽस्मि प्रजनिष्णुः॥ [ वर्तमानसामीप्ये ]॥

## आशंसायां भूतवच्च ॥ ३।३।१३२ ॥

आशंसा नाम भविष्यत्कालः। ॥१॥ आशंसायां भूतवदतिदेशे लङ्लिटोः प्रतिषेधः ॥१॥ आशंसायां भूतवदतिदेशे लङ्लिटोः प्रतिषेधो वक्तव्यः ॥१॥ न वाऽपवादस्य निमित्ताऽभावादनद्यतने हि तयोर्विधानम् ॥२॥ न वा वक्तव्यः॥ किं कारणम्? ॥ 'अपवादस्य निमित्ताऽभावात्'। नात्राऽपवादस्य निमित्तमस्ति॥ कथम्? ॥ अनद्यतने हि तयोर्विधानम् ॥ अनद्यतने हि तौ विधीयेते लङ्लिटौ। न चाऽत्राऽनद्यतनः कालो विवक्षितः॥ कस्तर्हि? ॥ भूतकालसामान्यम्। ॥३॥ आशंसासम्भावनयोरविशेषात्तद्विधानस्याऽप्राप्तिः॥३॥

प्र.]'ताच्छील्यवयोवचनशक्तिषु चानश्'इङ्धार्यादिभ्यः शतृप्रत्यय इत्यर्थः।वर्तमानविहितस्येति। लट्स्मे इत्यादिविहितलटि व्यर्थमवस्य तत्र वर्तमानग्रहणमपेक्षणीयमिति भावः। अविशेषविहित इति।वर्तमानलक्षणाद्विशेषादन्यस्मिन्विशेषे विहित इत्यर्थः।

आशंसायाम्। आशंसेति।आशंसा-अभिमतार्थवाञ्छा,सा वर्तमानापि विषयस्य भविष्यत्वाद्भविष्यत्कालेत्युच्यते।इह चाशंसानिर्देशस्य विषयभावेनोपात्ता।'आशंसायां विषय आशंस्यमानक्रियावचनाद्धातोर्भूतवद्वर्तमानवच्च प्रत्यया भवन्ती'त्यर्थं संपद्यते।नवेति।अत्र सूत्रे भूतशब्देन भूतमात्रमुच्यते न तु तद्विशेषोऽनद्यतनत्वं सामान्यातिदेशे विशेषानतिदेश इति न्यायाल्लङ्लिटौ न भवत इत्यर्थः। आशंसासंभावनयोरिति। यद्यविशेषः कथं द्वन्द्वनिर्देश इति चेत्,शब्दस्वरूपाभिधायित्वाददोषः।

उ.]त्यनविशेषविहित इत्यत आह-वर्तमानलक्षणादिति।भाष्ये-अयं योग इति। एतद्योगविहित इत्यर्थः। प्रयोजनान्तरमप्याह भाष्ये-शत्राद्यर्थमिति। इष्णुजादयोऽपि वर्तमान एव विधीयन्त इति भावः। सुत्रे शतृशानचोरनुवृत्तिरेव सर्वकालत्वमुक्तं 'भूत' इति सूत्रे भाष्य इति चानुवृत्तिः कैयटे चिन्त्या॥[वर्तमान]।

आशंसायां। सूत्रप्रयोजनं दर्शयति भाष्ये-आशंसा नामेति। आशंसाया भविष्यत्कालत्व वचनमत आह-आशंसेति। ननु भविष्यत्त्वमाशंसायामेव प्रयत्न वस्तुतः त्येनत आह-इहेत्येति। एवञ्च वाक्यस्य सर्वत्र लकारप्रकृत्यर्थं एवाऽन्वयस्य दृष्टत्वादाऽऽशंसायां तदन्वय इति भावः। अपवादस्येति भाष्यस्य,-अपवादस्य निमित्तमुपादायाऽनिर्देशाऽभावादित्यर्थः।तदाह-नाऽत्राऽपवादस्येति।निमित्तमुपात्त-

१ 'दनुदेशे'। २ इदं भाष्यमिति केचित्। ३ 'भूतसामान्य'। ४ 'इहन्निति'।

आशंसासम्भावनमित्यविशिष्टावेतावर्थौ । 'आशंसासम्भावनयोरविशेषात्तद्विधानप्राप्तिः ' । आशंसायां ये विधीयन्ते ते सम्भावनेऽपि प्राप्नुवन्ति, ये च सम्भावने विधीयन्ते ते आशंसायामपि प्राप्नुवन्ति ॥ किं तर्ह्युच्यते 'अप्राप्तिरिति ? ॥ न साधीयः प्राप्तिर्भवति ॥ इष्टा व्यवस्था न प्रकल्पेत । न सर्वे सर्वत्रेष्यन्ते । ॥ ॥ न वा सम्भावनस्यान्यत्वादाशंसायाः ॥ ॥ न वैष दोषः ॥ किं कारणम् ? ॥ 'सम्भावनस्यान्यत्वादाशंसायाः ' । सम्भावनादन्येयमाशंसा । आशंसा नाम प्रार्थितोऽर्थोऽभिनीतश्चाऽनभिनीतश्च । सम्भावनं नाम प्रार्थितोऽर्थोऽभिनीत एव ॥ ॥यथाऽसन्देहो वाऽन्यत्वात्सम्भावनस्य॥४॥ अथ वाऽसन्देह एव पुनरस्य ॥ किं कारणम् ?॥ 'अलमर्थत्वात्सम्भावनस्य' । सम्भावने आलमर्थ्यं गम्यते आशंसायां पुनरनालमर्थ्यम् ॥ आचार्यप्रवृत्तिर्ज्ञापयति सम्भावने[ऽप्य]नालमर्थ्यं गम्यत' इति यदयं सम्भावनेऽलमिति आह । तस्मात्सूत्र्यते 'न वा सम्भावनस्यान्यत्वादाशंसाया इति ॥ [ आशंसायां ] ।

## क्षिप्रवचने लृट् ॥ ३।३।१३३ ॥

॥*॥ क्षिप्रवचने लृट् आशंसावचने लिङ्विप्रतिषेधेन ॥*॥ क्षिप्रवचने लृट् आशंसावचने लिङ्भवति विप्रतिषेधेन। क्षिप्रवचने लृड्भवतीत्यस्याऽवकाशः—उपाध्यायश्चेदागतः क्षिप्रमध्येष्यामहे। आशंसावचने लिङ् भवतीत्यस्यावकाशः—उपाध्यायश्चेदागतः आशंसे युक्तोऽधीयीय। इहोभयं प्राप्नोति—उपाध्यायश्चेदागतः आशंसे क्षिप्रमधीयीय। लिङ्भवति विप्रतिषेधेन॥ ॥ ॥अनिष्पन्ने निष्पन्नशब्दः शिष्योऽनिष्पन्नत्वात्॥*॥ अनिष्पन्ने निष्पन्नशब्दः शिष्यः—शासितव्यः॥ किं कारणम्?॥ 'अनिष्पन्नत्वात्'। देवश्चेद्वृष्टो निष्पन्नाः शालयः। तत्र भवितव्यं 'संपत्स्यन्ते शालयः' इति॥*॥ सिद्धं तु भविष्यत्प्रतिषेधात्॥ ॥ सिद्धमेतत्॥ कथम्?॥ 'भविष्यत्प्रतिषेधात्'। यल्लोके भविष्यद्वाचिनः शब्दस्य प्रयोगं न मृष्यति। कश्चिदाह 'देवश्चेद्वृष्टः संपत्स्यन्ते शालयः' इति। स उच्यते 'मैवं वोचः, संपन्नाः शालय इत्येवं ब्रूहि'॥ ॥*॥ हेतुभूतकालसंप्रेक्षितत्वाद्वा॥*॥ हेतुभूतकालसंप्रेक्षितत्वाद्वा

---

प्र.]नियमेनाऽलमर्थो गम्येत तदा व्यभिचाराभावादलमिति विशेषणं नोपाददीतेत्यर्थः।

क्षिप्रव०। अनिष्पन्न इति। अनाशंसार्थमिदम्। 'वृष्टश्चे'दित्यादि वस्तुस्वरूपकथनम्। सिद्धं त्विति। अप्शालिबीजसंयोग एव निष्पत्तिः। शालीनां तत्रैव निष्पत्तेर्वर्तनादिति भावः। हेतुभूतकालसंप्रेक्षितत्वाद्वेति। कारणसम्बन्धी कालः कार्यस्य व्यवस्थापने कारणान्तरापेक्षाभावप्रतिपादनार्थेत्यर्थः। हेतुभूतस्य वर्षादेर्यः कालः स एव कार्ये संप्रेक्षितः, कारणस्यैव कार्यरूपतया विवक्षितत्वात्। कार्यकारण-

---

उ.]त्यर्थः। ज्ञानमिति। ज्ञानेच्छयोश्च भेदः स्पष्ट एवेत्यर्थः। तयोर्भेदे एकदेशयुक्तयुक्तयन्तरमाह भाष्ये—अर्थाऽसन्देहो वेति। तयोरर्थाऽविशेषेऽप्यालमर्थ्याऽनालमर्थ्यकृतो भेद इति भावः। तद्ध्वनयति—आचार्येति। नाऽऽलमर्थ्यमिति। नियमेनाऽऽलमर्थ्यं न गम्यत इत्यर्थः॥ [ आशंसायाम् ]॥

क्षिप्रव०। भाष्ये—निष्पन्न इति। भविष्यति भूतप्रत्ययो वक्तव्य इत्यर्थः। अनाशंसार्थमिति। आशंसायां पूर्वेण भूतवन्निर्देशाद्भविष्यत्यपि क्तः सिद्ध इति भावः। आगमाऽसार दर्शयति भाष्ये—देवश्चेद्वृष्ट इति। तदेवाह—वस्तुस्वरूपेति। न तस्याऽऽशंसाविषयत्वेनेति भावः। उष्टौ जातायामेवं वादो लोकस्य। भाष्ये—यल्लोक इति। यल्लोको भविष्यत्प्रयोगं न मृष्यति तस्मान्न मुख्या निष्पत्तिर्निष्पदेऽर्थः, किन्त्वन्य एवेत्यर्थः। तमेवाह—अप्शालीति। अयमेव निष्पत्तिपदार्थोऽभिमतस्येति भावः। शालीनामिति—पूर्वोऽन्वयि। तत्रैवेति। अप्शालिबीज-

---

१ 'निष्पद्यन्ते' 'संपद्यन्ते' 'निष्पत्स्यन्ते'।

अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः शासितव्याः । कूपोऽस्ति, कूपो भविष्यति, कूपो भविता, कूपोऽभूत्, कूप आसीत्, कूपो बभूवेति ॥ कथं पुनर्ज्ञायते भवन्त्या एषोऽर्थ इति ?॥ 'कर्तुर्विद्यमानत्वात्' ॥ कर्ताऽत्र विद्यते ॥ कथं पुनर्ज्ञायते कर्ताऽत्र विद्यत इति ? ॥ कूपोऽनेन कदा चिद्दृष्टो न चास्य किं चिदपायं पश्यति । स तु तत्र बुद्ध्या नित्यां सत्तामध्यवस्यति,—कूपोऽस्तीति[1] ॥*॥ सिद्धं तु यथास्वं कालसमुच्चारणात्[2]॥*॥ सिद्धमेतत् ॥ कथम् ?॥ [ 'यथास्वं कालसमुच्चारणात्' ] । यथास्वमेता विभक्तयः स्वेषु स्वेषु कालेषु प्रयुज्यन्त इति॥ कथं पुनर्ज्ञायते यथास्वमेता विभक्तयः स्वेषु स्वेषु कालेषु प्रयुज्यन्त इति ? ॥*॥ तत्त्वात्[3] ॥*॥ यत्र वा भाष्यन्ते ॥*॥ असिद्धविपर्यासश्च ॥*॥ असिद्धश्च विपर्यासः । न हीह कश्चित्कूपोऽस्तीति प्रयोक्तव्ये 'कूपोऽभू'दिति प्रयुङ्क्ते ॥ किं पुनः 'कारणं न वा भाष्यन्ते' 'असिद्धश्च विपर्यासः' ?॥ इह हि[4] किं चिदिन्द्रियकर्म, किं चिद्बुद्धिकर्म । इन्द्रियकर्म समा-

प्र ]न तु भूतभविष्यद्रूपत्वमित्यर्थः । तत्त्वादिति । अविप्रलिप्सत्वादित्यर्थः । एतदेवाह—यत्र वा भाष्यन्त इति । एतदुक्तं भवति,—यदि वचनेन वर्तमाने लडादयो विधीयेरन् तदा लोके विकल्पेन प्रयुज्येरन् । 'कूपोऽभू'दिति प्रयोक्तव्ये 'कूपो भविष्यती'त्यपि प्रयुज्येत । तदेव दर्शयति—असिद्धविपर्यासश्चेति । इह किं चिदिति । इन्द्रियव्यापारकालस्य कूपसत्त्वं प्रति भेदकत्वेनाश्रयणात्तत्रापि तत्काललाभ इत्यर्थः । तदुक्तं हरिणा—'सत्तामिन्द्रियसम्बन्धात्सैव सत्ता विशिष्यते । भेदेन व्यवहारो हि वस्त्वन्तरनिबन्धनः ॥ अभिन्नं वस्तुमात्रं तु बुद्ध्या तु परिगृह्यते । यः समासादनाद्भेदः स तत्र न विवक्षितः ॥' इति ॥

उ.]त्वलिप्सत्वादिति । प्रयोगे इत्यर्थः । यत्र वेति । 'प्रयोगे' इति शेषः । वचनेन—'अस्त्यर्थाना'मिति वार्तिकेन । असिद्धविपर्यास इति भाष्येऽपि,—'लोके' इति शेषः । चो हेतौ । यतः शिष्टलोकप्रयोगाणामसिद्धो विपर्यासो विपरीतः प्रयोगोऽतो न विकल्पेन प्रयुज्यन्तेऽन्यत्र लोकेऽत्र यथाकालमेव प्रत्यया इत्यर्थः । किं पुन कारणमिति । किं पुनः कारणं वा न भाष्यन्ते, किं च कारणं शिष्टानां विपर्यासासिद्धिरिति भावः । कालान्तरकल्पभेदस्याऽभावाद्वचनेनैव साधने प्रयोगेऽपि विपर्यासादिकमिति भावः । इन्द्रियव्यापार—नयति । इन्द्रियपदेनाऽत्र कर्मेन्द्रियं । सता वस्तूनामिन्द्रियसम्बन्धात्—तत्सम्बन्धादेवैव सत्ता कालभेदमापन्ना वस्त्वन्तरम्—इन्द्रियव्यापारः । तदेवाह—यः समासादनादिति । तत्र—बुद्धिरूपनिर्माणविषये । वर्तमानेति । वर्तमाना-

1 'कूपोऽनास्तीति' । 2 'यथास्वकालं ननु' । 3 इदं लुप्तम् । 4 'यथा स्वकालमेता' । 5 इदं क्वचित् ।

सादन, बुद्धिकर्म व्यवसाय ॥ एव हि कश्चित्पाटलिपुत्रं जिगमिषुराह 'योऽयमध्वा गन्तव्य आ पाटलिपुत्रादेतस्मिन्कूपो भविष्यति' ॥ अनद्यतने कूपो भवितेति । समासाद्य 'कूपोऽस्ती'ति । समासाद्यातिक्रम्य 'कूपोऽभू'दिति । समासाद्यातिक्रम्योपि वा 'कूप आसी'दिति । समासाद्यातिक्रम्योपि वा विस्मृत्य 'कूपो बभूवे'ति । तद्यदेन्द्रियकर्म तदेता विभक्त्यो, यदा हि बुद्धिकर्म तदा वर्तमाना भविष्यन्तीति ॥ [ क्षिप्रवचने लृट् ] ॥

नाऽनद्यतनवत् क्रियाप्रबन्धसामीप्ययो ॥ ३।३।१३५ ॥

किमर्थमिमौ द्वौ प्रतिषेधावुच्यते नाऽद्यतनवदित्येवोच्येत? ॥१॥ नाऽनद्यतनवत्प्रतिषेधे लङ्लुटो प्रतिषेध ॥ ॥ नानद्यतनवत्प्रतिषेधे लङ्लुटो प्रतिषेधो द्रष्टव्य ॥*॥ अद्यतनवद्वचने हि विधानम् ॥*॥ अद्यतनवद्वचने हि सति विधिरेव विज्ञायेत ॥ तत्र को दोष ? ॥*॥ तत्र लुङ्विधिप्रसङ्ग ॥*॥ तत्र लुङ्विधि प्रसज्येत । ॥१॥ लुङ्लृटोश्चाऽप्रयोगः कालम् ॥*॥ लुङ्लृटोश्चाऽप्रयोग काल प्रयोग प्रसज्येत । लुङोऽपि विषये लृट् स्यात्, लृटश्च विषये लुङ्

प्र ] नानद्यतन । तत्र लुङ्विधिप्रसङ्ग इति । अपूर्वविधानेऽद्यतने लङो दृष्टत्वा द्भूतभविष्यदनद्यतने प्रसङ्ग । लुङ्लृटोश्चेति । ननु वत्करणात्साद्दृश्यार्थात्सङ्करो न भविष्यति । नैतदस्ति । अप्रसक्तप्रापणार्थे ह्यतिदेशस्य भूतभविष्यच्छब्दोपादानेन लुङ्लृटोर्विधानेऽप्यद्यतने दृष्टत्वमात्रेणाऽप्रयोगकालमपि प्रसङ्ग उच्यते। वत्करणं तु तदा विस्पष्टार्थमेव स्यात्। प्रतिषेधोपादाने तु वत्करणमनद्यतनविशेषविहितानामपि प्रतिषेधार्थम्। अन्यथा वत्करणमनर्थकं स्यात्, नानद्यतनइत्येव ब्रूयात्। तेन परोक्षे

उ ] पीति त्यर्थ ॥ [ क्षिप्रवचने ] ।

नाऽनद्यतन । अपूर्वेति । अद्यतनशब्दोपादानेन कस्याऽपि विध्यभावात्तत्र दृष्टमात्रेणाऽतिदेशो वाच्य ।तथा च भूतादिष्वनद्यतने लङपि स्यादिति भाव ।भाष्ये-लुङ्लृटोरिति। भविष्यदनद्यतने लुट्, भूतानद्यतने लङ् स्यादिति भाव । अप्रसक्तेति । लुङ्लृटौ भूतभविष्यतोरद्यतने दृष्टौ तत्राऽद्यतनवदित्युक्ते तस्मिन्नेवाऽद्यतने तयोरतिदेशोऽनर्थक इति वक्तिदृशस्याश्च । तत्राऽद्यतनोऽद्यत्वाभावेनाऽतिदेशे भूताऽनद्यतने लुङ्, भविष्यति तत्र लृडिति प्रयोगनिद्धानयि अद्यतनवदिति निरूपेण । तस्मादनद्यतनविलम्बेनाऽतिदेशो आश्रीयमाणे यथाऽसम्भव इति भाव । भाष्ये-यथा मासमेवेति । दृष्टैव विधानं ब्रुवेऽपि कालेषु भवन्तीति ॥ सावस्मरण इत्यर्थ । तेन परोक्षे इति । परन्तु मम भाति चिन्त्यम्, भाष्ये लुङ्लृटोरेवोपक्रमे उक्तत्वादिति दिक् ॥ [ नानद्यतनवत् ] ।

१ इति क्वचित् । २ 'भविष्यन्ति' । ३ 'विधानमिदम्' । ४ 'भूतादौ' ।

स्यात् ॥ अथ पुनरयं द्वौ प्रतिषेधावुक्त्वा तूष्णीमास्ते यथाप्राप्तमेवाद्यतने भविष्यतीति । [ नानद्यतनवत्क्रियाप्रबन्ध ] ॥

भविष्यति मर्यादावचनेऽवरस्मिन् ॥ ३।३।१३६ ॥

किमर्थमिदमुच्यते न 'नानद्यतनव'दित्येव सिद्धम् ? ॥*॥ भविष्यति-मर्यादावचनेऽवरस्मिन्क्रियाप्रबन्धार्थम् ॥*॥ [ भविष्यति मर्यादावचनेऽवर-स्मिन्क्रियाप्रबन्धार्थम् ]। अक्रियाप्रबन्धार्थोऽयमारम्भः ॥ किमुच्यते-ऽक्रियाप्रबन्धार्थ इति, न पुनः क्रियाप्रबन्धार्थोऽपि स्यात्॥*॥ क्रियाप्रबन्धार्थ-मिति चेद्वचनानर्थक्यम् ॥*॥ क्रियाप्रबन्धार्थमिति चेद् [ वचनानर्थक्यम् ] वचनमनर्थकं [भवति], सिद्धं क्रियाप्रबन्धे पूर्वेणैव ॥ इदं तर्हि प्रयोजनम् 'अनहोरात्राणा'मिति वक्ष्यामीति । इह मा भूत्-'योऽयं त्रिंशद्रात्र आ-गामी तस्य योऽवरः पञ्चदशरात्र' इति ॥*॥ अहोरात्रप्रतिषेधार्थमिति चेन्ना-निष्टत्वात् ॥*॥ अहोरात्रप्रतिषेधार्थमिति चेत्तन्न ॥ किं कारणम् ? ॥ 'अनि-ष्टत्वात्' । अत्रापि नानद्यतनवदित्येवेष्यते ॥ इदं तर्हि प्रयोजनं-भविष्यतीति वक्ष्यामीति । इह मा भूत्,-'योऽयमध्वा गत आ पाटलिपुत्रात्तस्य यदवरं साकेता'दिति ॥ 'नानिष्टत्वात्' । अत्रापि नानद्यतनवदित्येवेष्यते ॥ इदं तर्हि प्रयोजनं-मर्यादावचन इति वक्ष्यामीति । इह मा भूत् योऽयमध्वाऽपरिमाणो गन्तव्यस्तस्य यदवरं साकेता'दिति ॥ 'नानिष्टत्वात्' । अत्रापि नानद्यतनव-

प्र.]लिट्' 'ह्यश्वतोर्लङ् च' 'लट् स्मे' 'पुरि लुङ् चास्मे' इत्येतत्सूत्रविहिता अपि प्रत्यया प्रतिषिध्यन्ते । [ नानद्यतनवत् ] ।

भविष्यति । अक्रियाप्रबन्धार्थमिति । एतच्चोपलक्षणं, तेन असामीप्या-र्थं चेति द्रष्टव्यम् । वचनसामर्थ्याच्च क्रियाप्रबन्धसामीप्ययोरिति निवृत्तम् । अन-होरात्राणामिति । उत्तरसूत्रस्य प्रयोजनमेतत्स्यादिति भाव । अनिष्टत्वादिति । क्रियाप्रबन्धसामीप्ययोरहोरात्रविभागेऽप्यनद्यतने प्रतिषेध इष्यत इत्यर्थ ।मर्यादावचन इति । नियमार्थमेतत् स्यान्मर्यादावचन एवेति भाव । अत्रापीति । विधिनिवृत्त-सम्भवे विधेर्ज्यायस्त्वात् । [ भविष्यति मर्यादावचने ]॥

उ.] भविष्यति। उत्तरसूत्रे प्रयोजनमेतदिति पाठ । भाष्ये त्रिंशद्रात्र इति । 'संख्यापूर्वं रात्रं क्लीब'मिति तस्मादेव भाष्यप्रयोगात् , 'लिङ्गमशिष्यं लोकाश्रयत्वा-ल्लिङ्गस्ये'त्युक्तेर्वाऽनेनत्वमिति भाव । भाष्ये-योऽयमध्वाऽपरिमाण इति । 'अपरिमाण' इति च्छेदः । नियमार्थमिति । क्रियाप्रबन्धविषय इति भावः । विधीति । अक्रियाप्रबन्धार्थत्वादिति भाव ॥ [ भविष्यति मर्यादा ] ॥

१ इदं ढौ स्यात् । २ इदं घटितं । ३ साकेत -अयोध्या ।

न्मांसेन यदि मत्समीप आसिष्यते'ति ॥ तत्तर्हि वक्तव्यम् ?॥ न वक्तव्यम्। नाऽन्तरेण साधनं क्रियायाः प्रवृत्तिरस्तीति साधनातिपत्तिश्चेत्क्रियातिपत्तिरपि भवति । तत्र क्रियातिपत्तावित्येव सिद्धम्। [ लिङ्निमित्ते ] ॥

## भूते च ॥ ३।३।१४० ॥

॥*॥ भूते लङुताप्यादिषु ॥*॥ भूते लङुताप्यादिषु द्रष्टव्यः । उताध्यैष्यत । अप्यध्यैष्यत ॥ [ भूते च ]।

## वोताप्योः ॥ ३।३।१४१ ॥

॥*॥ विभाषा गर्हाप्रभृतौ प्रागुताऽपिभ्याम् ॥*॥ विभाषा गर्हाप्रभृती प्रागुताऽपिभ्यामिति वक्तव्यम्। वोताप्योरिति क्रियमाणे सन्देहः स्यात्, प्रागुताऽपिभ्यां, सह वेति । तदाचार्यः सुहृद्भूत्वाऽन्वाचष्टे 'विभाषा गर्हाप्रभृती प्रागुताऽपिभ्या'मिति ॥ [ वोताप्यो. ] ॥

## गर्हायां लडपिजात्वोः ॥ ३।३।१४२ ॥

॥*॥ गर्हायां लड्विधानानर्थक्यं क्रियाऽसमाप्तेविवक्षितत्वात् ॥*॥ गर्हायां लड्विधिरनर्थकः ॥ किं कारणम् ? ॥ 'क्रियाऽसमाप्तेविवक्षितत्वात् । क्रियाया अत्राऽसमाप्तिर्गम्यते। एष च नाम न्याय्यो वर्तमानः काले

प्र.]क्रियायास्तु निष्पत्तिरेव । साधनातिपत्तिश्चेदिति । करणभेदाद्भिन्नं भोजनक्रिया । तेन मासातिपत्तौ मासभोजनक्रियाऽनिष्पत्तिरेवेत्यर्थः ॥ [ लिङ्निमित्ते ] ॥

भूते च।भूत इति। वक्ष्यमाणसूत्रार्थपर्यालोचनलभ्यं चैतत्। 'उताप्यो'रित्यारभ्य यल्लिङ्निमित्तं तत्र भूते क्रियातिपत्तावनेन लृङ्प्रत्ययः, प्राक् ततो विकल्प इत्यर्थः ॥

वोताप्योः । विभाषेति । 'गर्हायां लडपिजात्वो'रित्यनेन लड्विधानान्निमित्ताऽभावाद्विभाषा कथमि लिङ् चेत्यत प्रभृति प्रागुताप्यो समर्थयोरित्यतः सूत्रात्यल्लिङ्निमित्तं तत्र लृङ् वा । मर्यादाया ग्रहणात्,नाभिविधावित्यर्थः । गर्हाप्रभृताविति । गर्हादिविशिष्टे प्रत्यये इत्यर्थः ॥ [ वोताप्योः ] ॥

उ.]साधनाऽतिपत्ति –साधनविशेषविशिष्टक्रियाऽनिष्पत्तिरित्यर्थः ॥

भूते चाऽत्राप्यो प्राग् 'वा'इत्यस्याऽधिकार इत्युक्त्वाऽन्यस्य तदुत्तरस्याधिकार इति लभ्यते, तदन्वाचष्टे इत्याह–वक्ष्यमाणेति । तत्रेति। तत्रादावित्यर्थः । लृङ्प्रत्यय इति । 'नित्य'मिति शेषः ॥ [ भूते च ] ॥

वोताप्यो. । भाष्ये विभाषा गर्हाप्रभृताविति । गर्हाविशिष्टप्रत्ययपर्यन्तविभाषापदघटित–'विभाषा कथमि लिङ् चे'ति सूत्रपर्यन्तमित्यर्थः । अनन्तरसूत्रस्यागे वोतन्मात्–गर्हायां लडपीति ॥ [ वोताप्यो. ] ।

१'समाप्तेरिति'।२'विधानानर्थक्यं'।३'क्रियाया असमाप्तेरि'।४'तिर्निरस्ता'।

यत्र क्रियाऽपरिसमाप्ता भवति तत्र 'वर्तमाने लं'डित्येव सिद्धम् ॥ यदि वर्तमाने लडित्येवमत्र लड्भवति शतृशानचावपि तर्हि प्राप्नुत । इष्येते च शतृशानचौ । अपि मा याजयन्तं पश्य । अपि मा याजयमानं पश्य ॥

अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ॥ ३।३।१४५ ॥

॥ * ॥ किंवृत्तस्यानधिकारादुत्तरत्राऽकिंवृत्तग्रहणानर्थक्यम् ॥ * ॥ किंवृत्तस्यानधिकारादुत्तरत्राऽकिंवृत्तग्रहणमनर्थकम् । नियमः 'किंवृत्त' इति, तस्मिन्नि-वृत्तेऽविशेषेण किंवृत्ते चाऽकिंवृत्ते च भविष्यति ॥ इदं तर्हि प्रयोजनम्,—उपपदसंज्ञा यथा स्यादिति ॥ उपपदसंज्ञावचने किं प्रयोजनम् ? ॥ 'उपपदमतिङि'ति समासो यथा स्यात् ॥ 'अतिङि'ति प्रतिषेधः प्राप्नोति ॥ यदा तर्हि लृट् सत्संज्ञो तदोपपदसंज्ञा भविष्यति ॥ भविष्यदधिकारविहितस्य लृटः सत्संज्ञावुच्येतेऽविशेषविहितश्चायम् ॥ [अनवक्लृप्त्यमर्ष] ॥

जातुयदोर्लिङ् ॥ ३।३।१४७ ॥

॥ * ॥ जातुयदोर्लिङ्विधाने यदायद्योरुपसङ्ख्यानम् ॥ * ॥ जातुयदोर्लिङ्विधाने यदायद्योरुपसङ्ख्यानं कर्तव्यम् । यदा भवद्विधः क्षत्रियं याजयेत् । यदि भवद्विधः क्षत्रियं याजयेत् । [ जातुयदोर्लिङ् ] ॥

शेषे लृडयदौ ॥ ३।३।१५१ ॥

---

प्र ] गर्हायाम् । इष्येते इति । तौ च सूत्रारम्भे सत्यवर्तमानकालविहितत्वाल्लृटो न प्राप्नुत इति शेषवाक्येन सूत्रारम्भ इत्यर्थः । [ गर्हायां लडपि ] ॥

अनव । इदं तर्हीति । 'अकिंवृत्त शब्देन किंवृत्तादन्यस्पद पर्युदासाश्रयणेन गृह्यते। तस्योपपदसंज्ञार्थमकिंवृत्तग्रहणं।तेन किंवृत्ताऽकिंवृत्तयोरुपपदसं.। सिध्यतीति भाव । अतिङिति प्रतिषेध इति । न विद्यते तिङस्मिन् समासे सोऽतिङिति बहुव्रीहिसमास्याश्रयणादिति भाव । उपपदसंज्ञेति । उपपदसंज्ञाकार्यं समास इत्यर्थः । भविष्यदधिकारविहितस्येति । 'लृटः सद्वे'त्यत्र भविष्यतीत्यधिकाराद्भविष्यतीत्येव विहितस्य 'लृट्शेषे चे'त्यस्य लृट आनन्तर्याद्वा शतृशानचौ। अविशेषेति । कालमात्रे विधानादयं लृडत्रापि भविष्यति भवति तथापि भविष्यदधिकारविहितो न भवतीति शतृशानचावस्य न भवत । [ अनवक्लृप्त्यमर्षयोर ] ॥

---

उ ] गर्हायां लु । अपि मा याजयन्तमिति । ताच्छील्यप्रतिपादनेन गर्हा । यद नेन क्रियते तत्सर्वं याचनार्थमिति सर्वदा याचयन्वाऽसाविति क्रियाया समाप्ति-रविरतिलेति भाव ॥ [ गर्हायां लडपि ] ॥

अनवक्लृ । ननु किंवृत्ते नेत्यर्थात्कथमुपपदत्वमत आह—अकिंवृत्तेति। उपपदसंज्ञाया अन्यदाऽपि भावात्तदा भविष्यतीत्यनुपपन्नमत आह—उपपदसंज्ञाकार्यमिति॥

॥*॥ इच्छार्थेषु लिङ्लोटौ कामप्रवेदने चेत् ॥*॥ [इच्छार्थेषु लिङ्लोटौ ] कामप्रवेदने चेद्गम्यत इति वक्तव्यम् । इह मा भूत्,—इच्छन्करोतीति ॥

विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ॥ ३।३।१६१ ॥

विध्यधीष्टयोः को विशेषः ?॥ विधिर्नाम प्रेषणम् । अधीष्टं नाम सत्कारपूर्विका व्यापारणा ॥ अथ निमन्त्रणामन्त्रणयोः को विशेषः ? ॥ संनिहितेन निमन्त्रणं भवत्यसंनिहितेनामन्त्रणम् [इति]॥ नैषोऽस्ति विशेषः । असंनिहितेनाऽपि निमन्त्रणं भवति,संनिहितेन चामन्त्रणम्॥एवं तर्हि यन्नियोगतः कर्तव्यं तन्निमन्त्रणम्॥ किं पुनस्तत्?॥हव्यं कव्यं वा । ब्राह्मणेन 'सिद्धं भुज्यता'मित्युक्तेऽधर्मं प्रत्याख्यातुं । आमन्त्रणे कामचारः ॥ कथं पुनरिदं विज्ञा-

प्र ] विधिनिमन्त्रणा । विध्यधीष्टयोरिति । उभयोरपि नियोगरूपत्वादिति प्रश्नः । प्रेषणमिति । भृत्यादेः कस्यांचित् क्रियायां नियोजनमित्यर्थः । अधीष्टं नामेति । गुर्वादेस्तु पूज्यस्य व्यापारणमधीष्टमित्यर्थः । प्रपञ्चार्थं न्यायव्युत्पादनार्थं वाऽर्थभेदमाश्रित्य भेदेनोपादानं विधिनिमन्त्रणादीनां कृतम्। विधिरूपता हि सर्वत्रान्वयिनी विद्यते । संनिहितेनेति । धावनाऽऽगमनादिना । यथेह भवानासीतेति संनिहितमासनं, तदनुपरमार्थं च निमन्त्र्यते । असंनिहितेति । यथेह भवान् भुञ्जीतेति भोजनमसंनिहितं तदर्थमामन्त्र्यते । यन्नियोगत इति । अवश्यकर्तव्यं नित्यं नैमित्तिकं च । तन्निमन्त्रणमिति।निमन्त्रणविषयत्वात्तदेव निमन्त्रणम्।अधर्मं

उ ] इच्छार्थेषु । कामप्रवेदनमिति । प्रयोक्तुः स्वाऽभिप्रायाऽऽविष्करणमित्यर्थः ॥

विधिनि। नियोगेति । नियोगः—प्रवर्तना,प्रवर्तकनिष्ठः प्रवृत्त्यनुकूलो व्यापारः । एतदेव प्रेषणम् । भाष्ये—व्यापारणेति । प्रवर्तनेत्यर्थः । एतेन नियोगः इष्टसाधनताज्ञानमिति परास्तम् । 'हेतुमति च' इति सूत्रस्थलिङादिविधौ पर्यायत्वशङ्कापरभाष्यविरोधापत्तेश्च्यातु । व्यायेति । शब्दशास्त्रविषयेत्यर्थः । अयं भावः—निमन्त्रणादिशब्दानां प्रयोक्तृनिष्ठव्यापारवाचकत्वस्य सर्वसम्मततया विधिशब्दस्याऽपि प्रयोक्तृनिष्ठव्यापारवाचित्वं [illegible] निष्टसाधनत्वादिबोधकत्वमिति । स चाऽत्र प्रयुज्यमानलिङादिरूपः । स च प्रेरणात्वेन लिङ्वाच्यः । प्रेरणात्वस्याऽखण्डोपाधिः । एतस्यैव रूपभेदेन वाच्यवाचकत्वे उपपद्येते । स च लोके पुरुषनिष्ठो, वेदे ईश्वरनिष्ठः । वेदस्याऽपौरुषेयत्वादिना मते—शब्दनिष्ठः । शब्दरूपत्वाच्च [illegible] 'शाब्दी भावने'त्युच्यत इति मञ्जूषायां विस्तरः । विधिरूपतेति । प्रेरणेत्यर्थः । यन्नियोगतः कर्तव्यं श्राद्धादि, तस्य निमन्त्रणत्वाऽभावादाह—निमन्त्रणविषयत्वादिति । भाष्ये—ब्राह्मणेनेति । 'सिद्धं हव्यं कव्यं वा भुज्यता'मिति ब्राह्मणेनोक्त-

१ इदं क्वचिन्न । २ इति क्वचिन्न । ३ 'तनाऽप्यामन्त्र' । ४ 'कव्यं च' ।

तु द्वितीयाकाङ्क्षस्य प्रकृते प्रत्ययार्थे प्रत्ययविधानात्॥ ॥ सिद्धमेतत् ॥ कथम्?॥ [ 'द्वितीयाकाङ्क्षस्य प्रकृते प्रत्ययार्थे प्रत्ययविधानात्' ]। द्वितीयाकाङ्क्षस्य धातोः प्रकृते प्रत्ययार्थे प्रत्ययो भवतीति वक्तव्यम् ॥ के च प्रकृता अर्थाः ?॥ भावकर्मकर्तारः ॥ [एवमपि] भवेत्सिद्धं,–प्राप्नोतु भवानामन्त्रणम्। अनुभवतु भवानामन्त्रणमिति,यत्र द्वितीयं आकाङ्क्ष्यते।इदं तु न सिध्यति,–निम

---

प्र ]द्वितीयमित्यादिकमर्थं यदा धात्वर्थ आकाङ्क्षति तदा लिङ्प्रत्ययः।यदा च धात्वर्थे समाप्ते नियोज्यो नियुज्यते तदा द्वितीयाकाङ्क्षित्वम्। इह तु 'देवदत्तो भवन्तमामन्त्रयते' इति नास्ति धात्वर्थस्य द्वितीयाकाङ्क्षित्वमिति लिङ् न भवति। प्राप्नोत्विति। धात्वर्थस्य प्राप्त्यादेर्भिन्नमामन्त्रणं प्रत्याकाङ्क्षा विषय इति भावः। आमन्त्र-

---

उ ]णान्तरं बोध्यम्। कर्त्रादिगतायाः सङ्ख्याया इति। क्रियायामारोपितायाः' इति शेषः। वस्तुतः प्रवर्त्तनानिष्टप्रेरणायाः प्रयोज्यकर्तृकत्वाऽभावात्तद्गतसङ्ख्याऽऽरोपे न मानं,वाच्यत्वे च तस्या एव विशेष्यत्वं, सा चैकैवेति द्विवचनाद्यनापत्तिः।धात्वर्थस्य कर्तृद्वित्वादिना द्वित्वाद्यारोपे तस्य विशेषणत्वाच्च द्विवचनादिनियामकता। कर्त्रादिबोधस्तु न युक्त इत्यग्रे स्फुटं भविष्यति। अत एव भाष्ये द्विवचनाद्यसिद्धावेकार्थत्वादित्येव हेतुरुक्तः। विज्ञनर्थोऽयमर्थो निमन्त्रणं नाम तस्यैकत्वादिति। अनेकविषयकमपि निमन्त्रणमेकमेवेति तदर्थः। एतेन विशेष्यगतसङ्ख्यैकवचनादिबोध्येति सूचितम्। अत एवाऽत्र पक्षे भावकर्त्रादीनां बोधाऽनापत्तिरिति दूषणं नोक्तम्। भाष्ये–इहाऽपि प्राप्नोतीति। लडादयस्तेभ्यो न स्युः, अनेन लिङा बाधितत्वादिति भावः। द्योतकतापक्षीयं दूषणमुद्धर्तुमाह–सिद्धन्त्विति। द्वितीयाकाङ्क्षधातोः प्रकृते प्रत्ययार्थे कर्त्रादौ लिङित्यर्थः। कर्त्रादीनामपि द्योत्यत्वमितिपक्षे 'प्रत्ययार्थे' इत्यस्य प्रत्ययद्योत्ये इत्यर्थः। नन्वेवं 'पश्य मृगो धावति'-त्यादावपि लिङ् स्यादत आह–द्वितीयं विध्यादिकमिति। द्वितीयशब्देन विध्यादिरेव गृह्यत इति भावः। नियोज्यः–प्रेर्यः। नियुज्यते–प्रेर्यते। प्रेरणाविषयधात्वर्थे यदा धातोरीक्षणा तदा प्रकृतेऽर्थे प्रत्यय इति भावः। प्रकृते प्रत्ययार्थे इत्यनेनाऽऽमन्त्रणादीनामर्थे इति पक्षेऽपि तदत्याग सूचितः, विरोधाऽभावात्। 'कर्त्रादयो द्योत्याः' इति पक्षस्य 'लुटस्तो'इति सूत्रस्थभाष्यसम्मततया बाधे मानाऽभावाच्च। अत एव वाचकत्वपक्षे द्विवचनाद्यसिद्धिर्वार्त्तिकाद्यैर्नोक्ता। भावकर्मकर्त्रर्थकत्वस्यात्मनेपदपरस्मैपदविभागेन तद्विधानात्। युष्मदस्मच्छेषसामानाधिकरण्याऽभावेन प्रथमपुरुषाद्यसिद्धिर्नोक्ता, अनियमश्च नोक्त इति दिक्। भिन्नमामन्त्रणमप्रतीतेति। धात्वर्थाऽतिरिक्तप्रेरणरूपव्यापारप्रतीत्यर्थः।'प्राप्नोतु भवा-

१ इदं क्वचिन्न। २ 'ये पुनः प्रकृता'। ३ 'द्यसिद्धिश्च'।

न्त्रये आमन्त्रये इति ॥ अत्रापि द्वितीय आकाङ्क्षयते ॥ ह. १ ॥ निमन्त्रिरेव । निमन्त्रये निमन्त्रणमामन्त्रये आमन्त्रणमिति ॥ कथं पुनर्निमन्त्रिर्नाम

ल ]ये इति। आमन्त्रणस्य धात्वर्थत्वात्तस्य चैवन्त्वाद्भेदपूर्विकाया अनाकाङ्क्षा आमन्त्रण प्रत्ययमात्र इति भाव । निमन्त्रये निमन्त्रणमिति । प्रकृतिवाच्य निमन्त्रण विशिष्टकर्मेत्यन्यत्, तद्विषय स्वकर्तव्यत्वलक्षणं निमन्त्रणमन्यदिति भिन्नत्वादस्येव द्वितीयाकाङ्क्षितम् । तदयमर्थ ,-त्वत्कर्तृकं भोजनादिषु निमन्त्रणं ममानुष्ठेयम्, ततो भोजनादिषु त्वा निमन्त्रये इति।अत्र चामन्त्रये आमन्त्रणं निमन्त्रये निमन्त्रणमिति,प्रत्ययार्थव्यतिरिक्तामन्त्रणसद्भावप्रदर्शनायाऽऽमन्त्रणनिमन्त्रणशब्दौ प्रयुक्तौ, नतत्र लौकिक प्रयोग ,लोटैव प्रत्ययार्थव्यतिरिक्तस्यामन्त्रणादेर्गमितत्वात्।

उ ]नित्यादे -अङ्गीकरोतु भवान्। आमन्त्रणऽङ्गीकारविषया प्रेरणेत्यर्थ ।ननु 'पाक पचतीतिवत् प्रवर्तनाविशेषरूपाऽऽमन्त्रस्यापि तद्विशेषामन्त्रणान्तरविषयाऽऽकाङ्क्षास्त्वत आह-भेदपूर्विकाया इति । तत्र सामान्यविशेषयोरभेदाऽन्वयो न तु तथा प्रतीत इति भाव । आमन्त्रणमप्रतीति । धात्वर्थव्यापाराऽतिरेकेण प्रेरणाऽप्रतीत्यर्थं । अत्रेदं तत्त्वं-स्वविषया प्रेरणा तु नाऽत्र प्रत्ययार्थं , स्वेच्छयैव तत्प्रवृत्तिसिद्धे । स्वप्रवृत्ते स्वप्रेरणाऽनपेक्षत्वेन तस्यास्तदर्थत्वाऽभावात्। इदमेवाऽभिप्रेत्य-'उत्तमपुरुषो विधिवाचिप्रतिपत्तक' इत्यन्याभाषिद । अत एव भगवतोत्तमपुरुषविषये एव शङ्कितम् । विशिष्टकर्मेकमिति । संबोध्यकर्मकमित्यर्थ । अवश्यकर्तव्यतालक्षणम्-अवश्यानुष्ठेयत्वलक्षणम्। ततो भोजनादिष्विति । तद्बोधनार्थं च 'निमन्त्रये' इत्यादिप्रयोग इति भाव । नन्वेवं 'निमन्त्रये निमन्त्रण'मित्यादौ निमन्त्रणादिपदप्रयोगोऽयुक्त , लोटैव तदर्थस्याभिहितत्वादत आह-नत्वयं लौकिक इत्यादि । धातूनामनेकार्थत्वात्-निमन्त्रणामन्त्रणशब्दावर्हत्यार्थकौ । अर्हं स्वत्वाऽवश्यकर्तव्यतालक्षण यैरस्योचम् । एवञ्च 'अर्हे कृत्यतृचश्च'त्यनेन लिङ्लोटावुत्तमपुरुषविषये इत्युक्तं भवतीति बोध्यम्।भा रे-कथं पुनरिति।धर्मिणो हि धर्माऽऽकाङ्क्षा न [illegible] धर्मस्येति प्रश्न । ओंत्यत्र क्रोधेनेत्यस्य क्षीणशब्द उदाहरणम्। प्रवर्तनाविषय एव कर्तृक पाठ इति बोध । 'अर्हं पानयेय'-

१' कथं निमन्त्रिर्निमन्त्रिणा,आमन्त्रिरामन्त्रिणा[युज्यते?]॥निमन्त्रिरपि निमन्त्रिणा युज्यते आमन्त्रिरामन्त्रिणा । दृष्टश्च भावेन भावयोग. । तद्यथा-नरीरिषिण युज्यते-एषितुमिच्छन्येषिषिषतीति । क्षीनं क्षीन्वेतीति । एवम्वाद्ये रेषि गायतं, वर्तमानकाले प्रत्यय । अवरस्य वाग गायत सर्वकाले प्रत्यय इति॥मूत तर्हि भिद्यते ॥ ययान्यासमेवास्तु ॥ ननु चोक्तं-'निमन्त्रणादिषु गम्यमानेषु इहापि प्राप्नोति-देवदत्तो भवन्तं निमन्त्रयत इति ॥ अस्तु तर्हि निमन्त्रणादीनामर्थ इति॥"

[मार्थोऽयमारम्भः, 'प्रैषादिष्वेव कृत्या यथा स्यु'रिति ॥*॥ प्रैषादिषु कृत्यानां वचनं नियमार्थमिति चेत्तदनिष्टम् ॥*॥ प्रैषादिषु कृत्यानां वचनं नियमार्थमिति चेत्तदनिष्टं प्राप्नोति । न हि प्रैषादिष्वर्थेष्वेव कृत्या इष्यन्ते ॥ किं तर्हि?॥ अविशेषेणेष्यन्ते । तुषोपेन्ध्य तृणोपेन्ध्यम् । धनधान्यम् ॥*॥ विध्यर्थं तु स्त्रियाः प्रागिति वचनात् ॥*॥ विध्यर्थं तु प्रैषादिषु कृत्यानां वचनम् । अथ प्रैषादिष्वर्थेषु लोड्विधीयते स विशेषविहितः सामान्यविहितान्कृत्यान्बाधेत ॥ वासरूपेण कृत्या अपि भविष्यन्ति ॥ न स्युः ॥ किं कारणम्? ॥ 'स्त्रियाः प्रागिति वचनात्' । प्राक्स्त्रिया वाऽसरूपः ॥ [ प्रैषातिसर्ग ] ॥

**कालसमयवेलासु तुमुन् ॥ ३।३।१६७ ॥**

॥*॥ प्रथमान्तेषु ॥*॥ प्रथमान्तेष्विति वक्तव्यम् ॥ किं प्रयोजनम्?॥ इह मा भूत्,—काले भुङ्क्ते ॥ तत्तर्हि वक्तव्यम्?॥ न वक्तव्यम् । प्रैषादिष्विति वर्तते । तच्चावश्यं प्रैषादिग्रहणमनुवर्त्यम् । प्रथमान्तेष्विति ह्युच्यमाने इहाऽपि प्रसज्येत, 'कालः पचति भूतानि कालः संहरति प्रजाः' ॥

॥६॥ इति श्रीमद्भगवत्पतञ्जलिमुनिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥ पादश्च तृतीयः समाप्तः ॥❀॥

**धातुसम्बन्धे प्रत्ययाः ॥ ३।४।१ ॥**

---

प्र.] प्रैषाति । तुषोपेन्ध्यमिति । अग्निस्तोकं तुषेण ज्वलनीयमिति वस्तुस्वरूपकथनं, न तु प्रैषादिप्रतिपत्ति । धनधान्यमिति । धनेन स्नेहादिना धान्यमिति, कठिनत्वादित्यर्थः ॥ इति श्रीमन्महोपाध्यायकैयटपुत्रजैयटकृते भाष्यप्रदीपे तृतीयस्याऽध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥ पादश्च तृतीयः ॥३।३।२॥

---

उ.] नादीने । वस्तुनो 'यावता चाऽऽदे'त्यादिग्रन्थ एकदेशिनः । एतेन 'प्रत्ययार्थव्यापारे तद्धात्वर्थेऽपि प्रत्ययान्तम् प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तिमत्' इत्यपास्तम्, एकदेश्युक्तित्वेनाऽश्रुते । नन्वेवमपि नियमेन न स्यादधिकार्थस्याऽपि भानादत आह—प्रसिद्ध इत्यादि । तत्र—अर्थे । अत येन इत्यादयो युक्ताः, उपयुक्ते 'पचे'त्यादावपि तत्प्रत्यनीक, सङ्ख्यालक्षणव्यक्तिनाऽस्या धात्वर्थे दोलनायापत्तेरिति भाव । एतच्च 'प्रवर्त्तनायाम् पाक' इत्यत्र बोध इति बोध्यम् ॥

प्रैषाऽति । भाष्ये—स्त्रियाः प्रागिति । इतःपरं शास्त्रे—'स्त्र्यधिकारादूर्ध्वं वाऽसरूपविधिर्न प्रवर्तत' इत्यर्थः ॥ इति० श्रीनागेशभट्टविरचिते महाभाष्यप्रदीपोद्योते तृतीयाऽध्यायस्य तृतीयपादे द्वितीयमाह्निकम् ॥ पादश्च तृतीयः समाप्तः ॥

धातुसम्बन्धे । धात्वोः सम्बन्ध इत्यर्थः । सम्बन्धवत्त्वेनान्, धातोः धात्वर्थ-

---

१ 'अविशेषेण' । २ 'वाचेन' । ३ इदं त्रुटितम् ।

प्रत्यय इति वर्तमाने पुनः प्रत्ययग्रहणं किमर्थम्? ॥ अधातुप्रत्ययानामपि धातुसम्बन्धे साधुत्वं यथा स्यात् । गोमानासीत्, गोमान्भवितेति ॥ इह पश्यामो,—भूतकालो भविष्यत्कालेनाभिसम्बध्यमानो भविष्यत्काले सम्पद्यते । कस्मान्न भविष्यत्कालो भूतकालेनाऽभिसम्बध्यमानो भूतकालः सम्पद्यते? ॥ ॥

प्र ] धातुसम्बन्धे प्रत्ययाः । सम्बन्धस्य अनेकाश्रितत्वात्सामर्थ्याद्द्वित्वेऽपि सङ्ख्याविशेषो द्वित्वमत्रगम्यते । धात्वोः सम्बन्धो–धातुसम्बन्धः । धात्वर्थश्चात्रोपचाराद्धातुशब्देनोच्यते । न हि स्वार्थे गुणीभूतयोर्धात्वोः परस्परेण सम्बन्ध उपपद्यते । धात्वर्थयोस्तु विशेषणविशेष्यभावलक्षणसम्बन्धोपपत्तिः । तत्र धातुसम्बन्धे कालान्तरविहितानां प्रत्ययानामन्यस्मिन् काले साधुत्वान्वाख्यानार्थमिदं सूत्रम् ।

प्रत्यय इति वर्तमाने इति । यद्यपि स्वरूपपदार्थकः प्रत्ययशब्दः प्रकृतस्तथापीह संज्ञिनिर्देशाऽभावात्संज्ञिपदार्थको विज्ञास्यत इति भावः ॥ अधातुप्रत्ययानामपीति । अन्यथा प्रकृतानामेव धातुप्रत्ययानां ग्रहणं स्यात् । प्रत्ययग्रहणात्तु सर्वप्रत्ययपरिग्रहार्थात्तद्धितानामपि कालभेदे साधुत्वं भवति । गोमानासीदिति । तदस्याऽस्त्यस्मिन्निति मतुप्प्रत्ययो वर्तमानसत्ताविशिष्टप्रकृत्यर्थयुक्तेऽर्थे विहितः । धातुसम्बन्धे तु प्रकृत्यर्थस्य भूतभविष्यत्त्वेऽपि साधुर्भवति । इह पश्याम इति । 'अग्निष्टोमयाज्यस्य पुत्रो जनिता'ति कालभेदे साधुत्वान्वाख्यानाय सूत्रम् । तत्र विशेषणानुवादात्तथा भूतकालपरित्यागेन जनितेत्येतत्सम्बन्धाद्भविष्यति काले भवति

उ ] सम्बन्धस्य कारकाणां वा धातुसम्बन्धस्य सार्वत्रिकत्वात् । धात्वोः सम्बन्ध इत्यर्थे तु समासो दुरुपपादो, तत्रौ सङ्ख्याविशेषस्याऽभावादत आह—संबन्धस्येति । द्वित्वमवगम्यत इति । वस्तुतो द्वित्वाऽभावेऽपि धातुत्वेनैव धातुद्वयबोध इति बोध्यम् । गुणीभूतयोरिति । स्वार्थप्रतिपादनव्यग्रयोरित्यर्थः । तदर्थद्वारकसम्बन्धो धात्वोरेवाश्रीयतां कर्मत्वसमानकर्तृकत्वादिवदिति चेन्न, 'गोमानासी' दित्यादौ प्रवृत्त्यनापत्तेः । न ह्यप्रयुज्यमानयोरर्थद्वारकोऽपि सम्बन्धो वक्तुं शक्य इति भावः । अर्थयोश्च कः सम्बन्ध इत्यत आह—विशेषणेति । स च प्रत्ययार्थद्वारको वाक्यार्थ इति बोध्यम् ।

अन्यस्मिन्काल इति । उपपदोपाधिप्रकृत्यर्थानान्तु न चारः, 'वर्तमानसामीप्य' इत्यारभ्य कालाऽन्यत्वस्यैव प्रतिपादनादिति भावः । प्रकृतानामिति । प्रकरणादिति भावः । वर्तमानसत्तेति । न च 'तदस्याऽस्ती'त्यत्र सङ्ख्यावद्वर्तमानकालोऽप्यविवक्षित इति वाच्यम्, 'दण्डिनमानये'त्युक्तेऽतीतदण्डस्याप्यानयनापत्तेः । इदञ्च तत्रैव भाष्येऽत्र च स्पष्टम् । भाष्ये—'भूतकाल' इत्यादयो बहुव्रीहयः । भाविव्यपदेशेति । भाविव्यवहारेत्यर्थः । अग्निष्टोमयाजीत्युत्तरम्—इति 'व्यत-

१ 'धातुत्व' । २ 'वाक्यर्थोनाय' ।

धातुसम्बन्धे प्रत्ययस्य यथाकालविधानादिदम् ॥ ॥ धातुसम्बन्धे प्रत्ययेषु यथाकालविधानादिदम्। यथाकालविहिता एवैते प्रत्ययाः स्वेषु स्वेषु कालेषु प्रयुज्यन्ते॥ कथं तर्हि कालाऽन्यत्वं गम्यते?॥ ॥ उपपदस्य तु कालान्यत्वम्॥ ॥ उपपदस्यैतत्कालान्यत्वम्॥ कुतो नु खल्वेतत्,—अग्निष्टोमयाजीत्येतदुपपदं भविष्यति, न पुनर्जनितेति॥ एवं तर्हि—॥ ॥ अस्त्यादिभिर्योगे ॥ ॥ अस्त्यादिविषयाः

प्र ]न्त्या जनितेति तृच्प्रत्ययो भविष्यत्कालत्वेनाग्निष्टोमयाजीत्येतत्संबन्धाद्भूते कस्मान्न भवतीति प्रश्नः । यथाकालविधानादिति ।—सूत्रप्रत्याख्यानेनोत्तरम् । 'अग्निष्टोमयाजी'ति भूत एव णिनिर्विधीयते 'जनिते'त्यस्य सम्बन्धात् भाविव्यपदेशप्रतिपत्तिः, यथास्य सूत्रस्य शाटकं वयेतीत्यर्थः । इतरोऽगृहीताभिप्राय आह—कथं तर्हीति। 'पुत्रोऽस्य जनिता स चाग्निष्टोमेन यष्टे'त्यत्र यदि भूते णिनिर्विधीयते तदा यागस्य भविष्यत्ताऽवगमो न प्राप्नोतीति प्रश्नः । उपपदस्येति । भाविव्यपदेशविशेषणाद्विशेषणस्य कालान्यत्वं वाक्यार्थवशादन्यत्रापि सूत्रारम्भे प्रतीयत इत्यर्थः । विशेष्याया आख्यातादिपदवाच्यायाः क्रियायाः प्राधान्यात् स्वकाल एवावस्थानं, विशेषणभूतायास्तु नियमाभावादुपलक्षणभावेनोपादानाद्भाविभूतव्यपदेशाविरुद्धताप्रतिपादनात्कालान्यत्वागम इत्यर्थः । इतरो यथोक्तमभिप्रायमबुद्ध्वा समीपे भूतत्वादुपपदत्वस्यावगम्य चोदयति—कुत इति । तत्राग्निष्टोमयाज्यस्य पुत्रो जात इत्यत्रापि वाक्यार्थे कस्मान्न भवतीति प्रश्नः । आचार्यदेशीय आह—एवं तर्हीति । धात्वधिकाराद्धातुग्रहणे सिद्धे धातुसम्बन्ध इति पुनर्धातुग्रहणं धातुविशेषपरिग्रहार्थं, तेनास्तिभूजनिसम्बन्ध एव प्रत्ययानां कालान्तरे साधुत्वमन्वाख्यायत इति सूत्रारम्भे सति विपर्ययो न भवतीत्यर्थः । अस्त्यादिविषया इति । अस्त्यादिविशेषणत्वेन प्रयुज्य

उ ]रिष्यमाण' इति शेष इति भावः । यष्टेतीति । 'इत्यर्थं प्रतीयत' इति शेषः । भाविव्यपदेशादिति । भविष्यद्व्यवहारविषयादग्निष्टोमयाज्यादिपदादित्यर्थः । वाक्यार्थवशादिति । 'जनिते'त्येतत्समभिव्याहारात्प्रतीयमानस्य वाक्यार्थत्वादित्यर्थः । व्यवहारस्य भविष्यत्त्वविषयभावेऽपि वस्तुनो नेति भावः । कैयटोक्तनिवारणस्य मूलयुक्तिं दर्शयति—विशेष्याया इति । भाष्ये—'उपपदस्ये'त्यस्य गुणभूतस्येत्यर्थः । सूत्रारम्भे तु नाऽयं न्यायः । न्यायेन वचनस्य बाधे मानाऽभावात् । धातौ संबन्धे ताभ्यां धातुभ्यां ये ये प्रत्ययास्तेऽन्यत्रापि काले भवन्तीति वाक्यार्थं इत्याशयः ।

सूत्रारम्भे इत्यनया च सूत्रस्य 'धातोरस्त्यादेः संबन्धे सति धातोः प्रत्ययाः कालान्तरे' इत्यर्थः इति भावः । नन्वस्त्यादिप्रकृतिकत्वाऽभावात्कथं तद्विषयत्वमत आह—अस्त्यादिविशेषणायेति । पूर्वोक्तेनेति । गुणप्रधानभावस्वन्यायाश्रयणाऽ-

१ इदं क्वचिन्न । २ 'भवति' । ३ इदं वार्तिकमित्यन्ये । ३ भाष्यमित्यन्ये । ४ 'विशेषणात्' ।

सुपां श्रवणं प्राप्नोति ॥ 'अव्ययादि'ति सुब्लुग्भविष्यति ॥ कथमव्ययत्वम्? ॥ 'विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्ती'ति निपातसंज्ञा, निपातोऽव्ययमित्यव्ययसंज्ञा ॥ इह तर्हि 'स भवाँल्लुनीहि लुनीहीत्येवायं लुनाति, 'तिङ्ङतिङ' इति निघातो न प्राप्नोति ॥२॥ समसङ्ख्यार्थं च ॥२॥ समसङ्ख्यार्थं च हिस्वयोः परस्मैपदात्मनेपदग्रहणं कर्तव्यम्। हिः परस्मैपदानां यथा स्यात्, स्व आत्मनेपदानाम्। व्यतिकरो मा भूदिति ॥२॥ न वा तध्वमोरादेशवचनं ज्ञापकं पदादेशस्य ॥*॥ न वा हिस्वयोः परस्मैपदात्मनेपदग्रहणं कर्तव्यम् ॥ किं कारणम्? ॥ 'तध्वमोरादेशवचनं ज्ञापकं पदादेशस्य'। यदयं 'वा च तध्वमो'रित्याह तज्ज्ञापयत्याचार्यः—'पदादेशौ हिस्वा'विति ॥*॥ तत्र पदादेशे पित्वादौ प्रतिषेधः ॥*॥ तत्र पदादेशे पित्त्वादेश्च प्रतिषेधो वक्तव्यः। पित्वस्य

प्र.] स्वादुत्पत्तिर्भवतीत्यर्थः। विभक्तीति। विभक्तिसंज्ञस्य हिस्वशब्दस्य तदन्तयोर्हिस्वयोरव्ययत्वमित्यर्थः। व्यतिकरो मा भूदिति। यदि लकारस्यैव स्थाने हिस्वौ विधीयेयाता तदा 'लः परस्मैपद'मिति द्वयोरपि परस्मैपदसंज्ञा स्यात्, ततश्च द्वावपि परस्मैपदिभ्य एव स्यातामिति व्यतिकरः स्यादित्यर्थः। न वेति। यदि लस्यैव हिस्वौ स्यातां तदा तध्वमशब्दोः स्थानिनोरभावाद्वा च तध्वमोरिति स्थानित्वेनोपादानमनुपपन्नं स्यादिति तध्वमोः स्थानित्वेनोपादानाल्लोट्शब्देन लोडादेशानां परस्मैपदात्मनेपदानां स्थानित्वमवसीयत इत्यर्थः। पदादेशस्येति। पदशब्देन पदसंज्ञानिमित्तानि तिङ उच्यन्ते। अथ वा 'सर्वे सर्वपदादेशा' इति न्यायात्तिङन्तस्य हिस्वान्तादेशौ प्राप्तौ। पित्वस्येति। तिप्सिपोर्मिपां स्थाने विधीयमानौ हि स्थानिवद्भावात्पित्स्यात्, ततश्च ङित्वाऽभावाल्लुनीहि लुनीहीतीत्वं न स्यात्। अनुदात्तत्वं च हे प्रसज्येत 'लुनीहि लुनीहि स भवा'नित्यादौ परत्वात् लुनीहिशब्दस्य 'तस्य

उ.] क्रियासमभिहारे आह—तत्रेति। अव्ययत्वमिति। तदन्तस्य विभक्त्यन्तप्रतिरूपकत्वादव्ययत्वमिति भावः। 'हिस्वयो'रित्यस्य हिस्वान्तयोरित्यर्थः। ननु 'व्यतिकरो नामाऽऽत्मनेपदिभ्योऽपि हि, परस्मैपदिभ्योऽपि स्व' इत्याकारः, स चाऽनुपपन्नः, आत्मनेपदसंज्ञाऽभावेन स्वादेशस्य परस्मैपदसंज्ञकत्वेन चात्मनेपदिभ्यो विधानाऽनुपपत्तेरत आह—यदीति। ननु तिङो हिस्वौ, न च तावन्मात्रं पदं, तदन्तस्य पदत्वादिति 'पदादेशस्ये'त्ययुक्तमत आह—पदशब्देनेति। निमित्तानीति। निमित्तशब्दो नित्यनपुंसक इति भावः। केचित्तु नामैकदेशग्रहणेन परस्मैपदात्मनेपदे 'पद'शब्देन भाष्ये उच्येते इत्याहुः। स्थानिवद्भावादिति। न च 'सार्वधातुकमपि'दिति ङित्त्वं स्यात् परत्वादिति वाच्यम्, एतद्विषयेऽपि स्थानिवद्भावप्रवृत्त्याऽनिर्दिष्टत्वमादायापित्त्वादिति निषेधप्रवृत्तेः, अन्यथा 'स्तु' 'धत्स्व' इत्यादौ

तावत्–भवाँल्लुनीहि लुनीहीत्येवायं लुनाति। आट खल्वपि–'सोऽहं लुनीहि लुनीहीत्येवैं लुनानि ॥ पित्त्वस्य तावन्न वक्तव्य । पित्प्रतिषेधे योगविभाग करिष्यते।इह–['से [3] हि'] सर्हिर्भवति । तत 'अपिच्च'।'अपिच्च भवति यावान् हिर्नामे'ति । आटश्चापि [प्रतिषेधो [4] ] न वक्तव्य । आटि कृते साङ्गस्यादेशो भविष्यति॥ इदमिह सम्प्रधार्यम्,–आट्क्रियतामादेश इति किमत्र कर्तव्यम् ?॥ परत्वादाडागम ॥ नित्य आदेश । कृतेऽप्याटि प्राप्नोत्यकृतेऽपि प्राप्नोति ॥ आडपि नित्य । कृतेप्यादेशे प्राप्नोत्यकृतेपि प्राप्नोति॥ अनित्य आट् । अन्यस्य कृतेऽप्यादेशे प्राप्नोत्यन्यस्याऽकृतेपि प्राप्नोति, शब्दान्तरस्य च प्राप्नुवन्विधि-रनित्यो भवति ॥ आदेशोप्यनित्य । अन्यस्य कृते आटि प्राप्नोति, अन्यस्याऽकृते प्राप्नोति, शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति । उभयोरनित्ययो परत्वादाडागम । आटि कृते साङ्गस्यादेशो भविष्यति ॥ इदं तर्हि–सोऽहं [5] भुङ्क्ष्व भुङ्क्ष्वेत्येवं भुनजै इति। 'श्नसोरल्लोप' इत्यकारलोपो न प्राप्नोति॥ समसङ्ख्यार्थस्य चाप्यपरिहृतमेव ॥*॥ सिद्धं तु लोण्मध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्विर्वचनात् ॥*॥ सिद्धमेतत् ॥ कथम् ? ॥ [लोण्मध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्विर्वचनात् [7] ।] । लोण्मध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्वे भवत इति वक्तव्यम् ॥ केन विहितस्य क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्विर्वचनमुच्यते ? ॥

प्र ]परस्माच्च तिङन्तमनुदात्तत्वे त्वनुदात्तं भवति।यावानिति।योगविभागकरणसामर्थ्यादान न्तर्यं नाऽपेक्ष्यत इत्यर्थ । भुङ्क्ष्व भुङ्क्ष्वेति।परत्वादाटि कृते उत्तमस्य पित्त्वे च स्यादेश स्थानिवद्भावात्पित्त्वादिति ङित्वाऽभावाल्लोपाऽभाव । समसङ्ख्यार्थत्वमिति । सर्वेषां तिङां द्वानपि पर्यायेण स्यातामित्यर्थ । एतदेवेति । 'वृद्धकुमारीवर' न्यायेन

उ ]गुणाऽनावसिरिति दिक्।स भवानित्यादावित्ति।'आदिश्यते' इति शेष । तद्धन यन्नाह–परस्येति । न'न्वनन्तरस्ये'ति न्यायाद्यावानित्यसङ्गतमत आह–योग-विभागेति । भाष्ये–'भुङ्क्ष्व'त्यस्याऽनुप्रयोगे 'भुनजै' इति पाठ । पित्वेन स्वादेश' इति पाठ कैयटे । सर्वेषां तिङामिति । तिङादेशत्वे ज्ञापितेऽप्यत्र दोष इत्यर्थ । वृद्धकुमारीति । एतद्भाष्यवार्त्तिकस्वरसात् 'क्रियसमभिहार' इति वार्त्तिक लोडन्त विषयकमेव द्रष्टव्यम्,अन्यथा तस्यैतो भिन्नवचनत्वे गौरवं स्यादित्याहु । दोषा न्तरमप्याह भाष्ये–लोण्मध्यमेति । ननु सर्वेषां स्थाने इत्यर्थेऽसम्भव परस्मैप-

१ 'त्येव लुनामि' 'लुनानि' । २'पित्व'। ३ इद लुप्त स्यात् ।
४ इति क्वचित् ।५ इद क्वाचित्कम् । ६ 'त्येव भुञ्जे' । ७इद लुप्त स्यात् ।
८ 'पुरुषस्य' । ९ 'इत्यनेन न्यायेन' ।

एतदेव ज्ञापयत्याचार्यो–'भवति क्रियासमभिहारे लो'डिति –यदयं क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्विर्वचनं शास्ति ॥ कुतो नु खल्वेतद् ज्ञापकादयं लोड्भविष्यति न पुनरयं एवास्तावद्विशेषविहित ॥ यदा क्रियासमभिहारे भवति तदा तस्य द्विर्वचनं भवतीति ?॥ लोण्मध्यमपुरुषैकवचन एव खल्वपि सिद्धं स्यादिमौ चान्यौ हिस्वौ सर्वेषां पुरुषाणां सर्वेषां वचनानामिष्येते ॥ सूत्रं च भिद्यते ॥ यथान्यासमेवास्तु ॥ ननु चोक्तं 'हिस्वयोः परस्मैपदात्मनेपदग्रहणं लादेशप्रतिषेधार्थं समसङ्ख्यार्थं चे'ति ॥ नैव दोषः । ॥५॥ योगविभागात्सिद्धम् ॥५॥ [ योगविभागात्सिद्धमेतत् ] । योगविभागः करिष्यते । 'क्रियासमभिहारे [ लोट्' । क्रियासमभिहारे ] लोड्भवति । ततो [ 'लोटो हिस्वौ' ] । लोटो हिस्वौ भवतः । लोडित्येवानुवर्तते[3] लोटो यौ हिस्वाविति॥ कथं 'या च तध्वमो'रिति?॥ 'या च तध्वंभाविनो लोट' इत्येवमेतद्विज्ञायते ॥ [ क्रियासमभिहारे लोट् ] ।

**यथाविध्यनुप्रयोगः पूर्वस्मिन् ॥ ३।४।४ ॥**

किमर्थमिदमुच्यते ? ॥ अनुप्रयोगो यथा स्यात् ॥ नैतदस्ति प्रयोजनम् ।

---

प्र.]क्रियासमभिहारविषयो लोडनुमीयत इत्यर्थः । कुतो न्विति। ज्ञापकं विघटयति। विध्यादिविषयस्य लोटो विद्यमानत्वात् क्रियासमभिहारविषये तस्यैवादेशयोर्द्विर्वचनार्थं ग्रहणं स्यादित्यर्थः । सर्वेषामिति ।'प्रसक्त'इति शेषः ।लोटो याविति। लोडादेशौ यौ हिस्वौ दृष्टौ तत्तुल्यावनेन हिस्वौ भवत इत्यर्थः । तेन नदीष्वरानीतिदेशात्परस्मैपदात्मनेपदग्रहणे हिस्वयोर्भवतः । तेन परस्मैपदिभ्यो हिरात्मनेपदिभ्यस्तु स्वो भवति । हिशब्दस्य कर्ता वाच्यः , स्वशब्दस्य भावकर्मकर्तारः । निघ्नन्त च भवतीति निघ्नन्ति इत्यादिकमर्थं भवति । पुरुषवचनसंज्ञे तु सामर्थ्यात्र भवतः । यदि हि ते अपि स्यातां हिस्वयोरनेन विधानमनर्थकं स्यात्, वचनान्तरेण तयोः सिद्धत्वात्। तध्वंभाविन इति । तुल्यार्थाऽसंभवे गौणी कल्पनाश्रीयते, तत्र तध्वभाविन्यालोटेन 'तध्व'शब्दात्सामुच्यत इति भावः । [ क्रियासमभिहारे ] ।

---

उ.]तादिभ्योऽप्रसादा आह–प्रसक्त इति शेष इति।दोषान्तरमप्याह भाष्ये–सूत्रेति।लोडादेशाविति।'लो'डित्यस्य च लोडित्यर्थः ।स्थानिवद्भावेनैव लोड्धर्मातिदेशस्य सिद्धे पुनर्लोडादेति वचनं लोट्स्थानिवद्भिस्वदतिदेशार्थमिति भावः । अतिदेशफलमाह–तेनेति । । वचनान्तरेणेति । पुरुषादिसंज्ञा युष्मदाद्यानाधिकरण्ये एकत्वे च भाव्यम् । तत्र च व्यर्थत्वेऽविधेरिति भावः ॥

यथाविध्य । ननु क्रियाप्रयाऽर्थप्रतीते कथमनभिव्यक्तार्थकत्वमत आह–

---

१ इदं ज्ञो स्यात् । २ इदं ग्रन्थिक्ष । ३ 'लोटौ' । ४ 'निघ्नन्त' ।

हिस्वान्तमव्यक्तपदार्थकं तेनाऽपरिसमाप्तोऽर्थ इति कृत्वाऽनुप्रयोगो भविष्यति ॥ इदं तर्हि प्रयोजनम्—'यथाविधीति वक्ष्यामी'ति ॥ एतदपि नास्ति प्रयोजनं, 'समुच्चये सामान्यवचनस्ये'ति वक्ष्यति । तत्राऽन्तरेण वचनं यथाविध्यनुप्रयोगो भविष्यति ॥ [ यथाविध्यनुप्रयोगः पूर्वस्मिन् ] ।

## समुच्चये सामान्यवचनस्य ॥ ३।४।५ ॥

किमर्थमिदमुच्यते ?॥ अनुप्रयोगो यथा स्यात् ॥ नैतदस्ति प्रयोजनम् । हिस्वान्तमव्यक्तपदार्थकं तेनाऽपरिसमाप्तोऽर्थ इति कृत्वाऽनुप्रयोगो भविष्यति ॥ इदं तर्हि प्रयोजनम्,– सामान्यवचनस्येति वक्ष्यामी'ति॥एतदपि नास्ति प्रयोजनम्। सामान्यवचनस्याऽनुप्रयोगोऽस्तु विशेषवचनस्येति सामान्यवचनस्यैवानुप्रयोगो भविष्यति, लघुत्वात् ॥ [ समुच्चये सा ] ॥

---

प्र ] यथावि । हिस्वान्तमिति । सख्याकालपुरुषाणामनभिव्यक्तत्वात् । एतदपीति । 'समुच्चय एव धात्वन्तरस्याऽनुप्रयोग' इति नियमात् क्रियासमभिहारे यथाविध्यनुप्रयोगो भविष्यति । ननु 'समुच्चये सामान्यवचनस्यैवे'ति नियमः स्यात्, ततश्च धात्वन्तरस्यापि लोड्न्तेनसमानार्थस्य क्रियासमभिहारेऽनुप्रयोगः स्यात् । नैतदस्ति । 'नह्येकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्याश्च तृतीयस्याश्च भवती'ति न्यायाल्लोड्न्तेनैवानुप्रयोक्ष्यते।पूर्वव्यवहितप्रयोगनिवृत्तिरपि नेष्टा, यतस्तदर्थो योगः स्यात् । [ यथाविध्यनुप्रयोग ] ।

समुच्चये।लघुत्वादिति।एतच्च लाघवं क्वचिदेव विषये शिष्टप्रयोगदर्शनादाद्रियते न सर्वत्र, अन्यथा तरुद्रुमादीनामेव प्रयोगः स्यान्न वनस्पत्यादिशब्दानाम् ।

---

उ ]सहारेति। न ह्येकस्या इति। एतेन 'समुच्चये एव सामान्यवचनस्ये'ति नियमेऽपि प्रकृते ■ पर्यायव्यावृत्तिरित्यपास्तम् । समुच्चयविषये सामान्यवचनस्येति वचनान्न्यायबाधेऽपि प्रकृतविषये तन्न्यायबाधे मानाऽभावाद्विनाऽपि वचनं सिद्धमिति भाष्याऽक्षरार्थः । नेष्टेति । अत एव 'लुनीहि लुनीहीत्येवाऽयं लुनाती'ति भाष्ये व्यवहितप्रयोगः सङ्गच्छते । तेनाऽनुप्रयोगशब्दार्थव्यभिचार उक्तः । पूर्वप्रयोगस्तु यदि नेष्टस्तदाऽनभिधानाद्वारणीयः । यद्दृष्ट एव स इत्याहुः । [ यथाविध्यनु ] ।

समुच्चये सा । भाष्ये–लघुत्वादिति । सर्वविशेषाऽनुगतैकसामान्यवाचकाऽनुप्रयोगे सामान्यस्य सन्निहितविशेषपर्यवसानात्सर्वेषां कालाद्यभिव्यक्तौ सिद्धायां विशेषवाचकानामनुप्रयोगो गौरवादिति भावः । क्वचिदेवेति । पर्यायविषये इत्यर्थः । एवं च तरुद्रुमवनस्पत्यादिषु पर्यायेषु लाघवगौरवाऽनादरान्न दोषः । इदं स्पष्टत्वं स्पष्टमेवेत्याहुः । [ समुच्चये सामान्यवचनस्य ]।

---

१ 'मनभिव्यक्तपदार्थकं' ।

उपसंवादाशङ्कयोश्च ॥ ३।४।८ ॥

॥ ३॥ उपसंवादाशङ्कयोर्वचनानर्थक्यं लिङर्थत्वात् ॥ ॥ उपसंवादाशङ्कयो-र्वचनमनर्थकम्॥ किं कारणम् ?॥ 'लिङर्थत्वात्'। 'लिङर्थे लेड्'इत्येव सिद्धम्। क्व पुनर्लिङर्थः ?॥ के चित्तावदाहुर्हेतुहेतुमतोर्लिङिति । अपर आह –वक्तव्य एवैतस्मिन्विशेषे लिट् । प्रयुज्यते हि लोके–'यदि मे भवानिदं कुर्यादहमपि त इदं दद्या'मिति ॥ [ उपसंवादाशङ्कयोश्च ] ॥

तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यै-शध्यैन्तवैतवेङ्तवेनः ॥ ३।४।९ ॥

तुमर्थे इत्युच्यते कस्तुमर्थः [नाम]॥ ऊर्ध्वं [तुमर्थः] ॥ यद्येवं नार्थस्तुमर्थ-ग्रहणेन । येनैव खल्वपि हेतुना कर्तरि तुमुन्भवति तेनैव हेतुना सेसादयोऽपि भविष्यन्ति॥ एवं तर्हि सिद्धे सति यत्तुमर्थग्रहणं करोति तज्ज्ञापयत्याचार्यो-

प्र ] उपसंवा।उपसंवादेति । नित्यार्थमिदमिति चेच्छन्दसि नित्योऽत्र लेट् इष्यते-ऽन्यत्र प्रमाणाऽभावः । व्यवस्थितविभाषया वा नित्यं लेड् भविष्यति । हेतुहेतुमतो-रिति । उपसंवाद –कर्तव्ये पणबन्धः,'यदि मे भवानिदं कुर्यादहमपि त इदं दद्या'-मिति। तत्र करणं हेतुर्दानं हेतुमत्। आशङ्कापि कारणस्यार्थोत्प्रेक्षेति हेतुहेतुमद्भावः । अपर इति । करणमवधिर्दानमवधिमदित्यवध्यवधिमद्भाव उपसंवादे प्रतीयते न तु हेतुहेतुमद्भावः । आशङ्कायामपि निश्चितो हेतुहेतुमद्भावो नास्तीति भावः । लिङ्-प्रयोगसिद्धये अवश्यवक्तव्यो लिङ्, न तु सूत्रप्रत्याख्यानार्थः । [ उपसंवादा ]।

उ.] उपसंवादा । इदं नित्यं लेड्विधानार्थं, तदाह–नित्यार्थमिति । पूर्वसूत्रे हि 'लिङर्थे लेड्'इत्यतोऽन्यतरस्याग्रहणमनुवर्तत इति भावः । व्यवस्थितेति । वेदे आपायरूपाऽभावात्सर्वविधीनां छन्दसि वैकल्पिकत्वादयं दोष इत्यन्ये । करणं हेतु-रिति । तदुत्तरकालत्वाद्दानस्येति भावः । करणमवधिरिति । तद्वस्तुदानस्य त्त्क-रणाऽभावेऽपि बहुशो दृष्टत्वात्तत्करणे सत्यपि बहुकालदानाऽभावाच्च व्याप्तिविरहेऽपि सति पूर्ववर्तित्वोत्तरवर्तित्वे नियतघटितकारणत्वं नैवच्छन्दतो भातं, किन्त्ववध्यवधिमद्भावस्यैवेति भावः । भाष्ये–इदमेवाशङ्काया अप्युदाहरणं । सम्भा-वनापरत्वेन तथात्वानस्य सम्भवासम्भवाभ्यां चाऽशाऽऽशङ्का, तदाह–आशङ्का-यामपीति । कारणत्वस्यार्थोत्प्रेक्षाया अपि दर्शनादित्यपि बोध्यम् । लिङ्प्रयो-गेति । लोकेऽपीत्यर्थः । एवञ्चाऽनयोरपि लिङर्थे वा लिङर्थे लेडित्येव सिद्धे इदं न कर्तव्यमिति भावः ॥ [ उपसंवादाशङ्कयोश्च ]॥

तुमर्थे से । ननु वर्णादिपदाऽनुकरणानामर्थं तेषु प्रमाचिरन आह–विषयेति।

१ इति क्वचित्। २ इद अत्र क्वचित्। ३ इदं वार्तिकमित्यन्ये। ४ 'कर्तव्य'।

'स्यन्य च तुंस्तुमुनोऽर्थ' इति ॥ क पुनरसौ ?॥ भाव ॥ कृतो नु खल्वे तद्भावे तुमुन्भविष्यति न पुन क्रमादिषु कारकेष्विति । ज्ञापका[त्ताव]द्य कर्तृरपत्र्यते । न चान्यस्मिन्नर्थे आदिश्यते, अनिर्दिष्टार्थाश्च प्रत्यया स्वार्थे भवन्तीति स्वार्थे भविष्यति। तद्यथा गुप्तिज्किद्भ्य सन् , यावादिभ्य कन्निति। सोऽसौ स्वार्थे भवन्भावे भविष्यति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? ॥ 'अव्ययकृतो भावे भवन्ती'त्येतद्व वक्तव्य भवति । [ तुमर्थे सेसेन ] ॥

उदीचा माङो व्यतीहारे ॥ ३।४।१९ ॥

किमर्थं मेङ सानुबन्धस्याऽऽत्वभूतस्य ग्रहण क्रियते नोदीचा मेङ इत्ये वोच्येत?॥तत्रायमप्यर्थ –उदीचा मेङ इति व्यतीहारग्रहण न कर्तव्य भवति॥ किं कारणम् ?॥ 'तद्विषयो हि स ' । व्यतीहारविषय एव हि भवति ॥ एव तर्हि सिद्धे सति यन्मेङ सानुबन्धस्यात्वभूतस्य ग्रहण करोति तज्ज्ञापय त्याचार्यो 'सानुबन्धकृतमनेकान्त्य भवती'ति ॥ किमेतस्य ज्ञापने प्रयोज नम् ? ॥ तत्र'ऽसरूपसर्वादेशदाप्प्रतिषेधे पृथक्त्वनिर्देशोऽनाकारान्तत्वा'दि त्युक्त तन्न वक्तव्य भवति ॥ किमर्थं पुनरिदमुच्यते न समानकर्तृकयो पूर्व काल इत्येव सिद्धम्?॥[*॥ अपूर्वकालार्थ ॥*]॥ अपूर्वकालार्थोऽयमारम्भ । पूर्वं ह्यसौ याचते पश्चादपमयते । [ उदीचा माङो व्यतीहारे ] ॥

प्र ] तुमर्थे सेस ।कृतो नियमि । नियया वर्गादीनामासेसतेष्वेन तुमुन् स्यादिति भाव । न वक्तव्यमिति । तुमर्थग्रहणानुरत्या तादीनां भावे सिद्धत्वात् । साध्यमान रूप भाव तादीनामर्थ । स एव[च]धात्वर्थ । घञादीनां तु धात्वर्थव्यति रिक्त सिद्धरूपो वाच्य । [ तुमर्थे सेसेनसे ] ।

उदीचाम् । सानुबन्धकृतमिति । एतच्च ज्ञापनमनुबन्धानामेकान्तत्वे उप युज्यते । अनेकान्त्वे स्यत एव एकान्तत्वाज्ञापनप्रयोजनाऽभाव । पृथक्त्वनिर्देशो नाकारान्तत्वा'दित्यत्तदाप्प्रतिषेधग्रहणमेव वक्तव्य न । दाधाघ्वदा'बित्यत्र दैपो- ऽपि पृथक् प्रतिषेधो वक्तव्य, अनाकारान्तत्वाद्घ्रूपताऽभावादित्यर्थ । अपमयत

उ ]नन्वव्ययकृतो भाव इत्येनतारत्ते घञादिवत्सिद्धे भावे तुमुनादय स्यु ,स्वार्थे विधाने तु साध्ये भावे इति विशेषोऽत आह–साध्यमानेति।वार्तिकेऽपि 'भाव'शब्देन साध्य भावस्यैव ग्रहणमिति भाव ।तुमर्थ इत्यनुवादाच्च तुमोऽपि भावे सिद्धिरिति बोध्यम् ॥

उदीचाम। साऽनुबन्धेति। तेनाऽनुबन्धविशिष्टस्याप्याप्यत्वमिति भाव । एका- न्तत्वे इति । अयमेव पक्षो न्याय्य इति 'तस्य लोप' इति सूत्रे भाष्ये ।

१ 'कारकेषु स्यादिति'।२ 'वार्तिकमिदमित्यन्ये । ३ 'व्यतिहार'। ४'दाप्प्रतिषेधेषु'। ५ 'तस्यलोप ' (१-३-९) इत्यत्रोक्तम् । ६ इद वार्तिक तुमं स्यादितिमन्ये ।

विज्ञानात् [ न सिध्यति ] ॥*॥ [ लोकविज्ञानात्तु सिध्यति ]। तद्यथा लोके 'ब्राह्मणाना पूर्वं आनीयता'मित्युक्ते सर्वपूर्वं आनीयते, एवमिहापि सर्वपूर्वाया क्रियायाः प्राप्नोति ॥*॥ अनन्त्यवचनात्तु सिद्धम् ॥*॥ [अनन्त्यवचनात्तु सिद्धम्] । समानकर्तृकयोरनन्त्यस्येति वक्तव्यम्॥ सिध्यति । सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवास्तु ॥ ननु चोक्तं 'समानकर्तृकयोरिति बहुत्वप्राप्ति'रिति ॥ परिहृतमेतत् 'सिद्धं तु क्रियाप्रधानत्वा'दिति ॥ ननु चोक्तमेतदपि लोकविज्ञानाच्च सिध्यती'ति ॥ नैष दोषः । सर्वेषामत्र मजिक्रियां प्रति पौर्वकाल्यम्। स्नात्वा मजति भुक्त्वा मजति पीत्वा मजतीति। एवं च कृत्वा प्रयोगो[ऽप्य]नियतो भवति स्नात्वा भुक्त्वा पीत्वा मजति। पीत्वा भुक्त्वा स्नात्वा मजतीति ॥*॥ व्यादाय स्वपितीत्युपसङ्ख्यानमपूर्वकालत्वात् ॥*॥ व्यादाय स्वपितीत्युपसङ्ख्यानं कर्तव्यम् ॥ किं पुनः कारणं न सिध्यति ?॥ 'अपूर्वकालत्वात्' । पूर्वं ह्यसौ स्वपिति पश्चाद्व्याददाति ॥ ॥*॥ न वा स्वप्नस्यावरकालत्वात् ॥*॥ न वा वक्तव्यम् ॥ किं कारणम् ? ॥ 'स्वप्नस्यावरकालत्वात्' । अवरकालः स्वप्नः । अवश्यमसौ व्यादाय मुहूर्तमपि स्वपिति॥

विभाषाऽग्रेप्रथमपूर्वेषु ॥ ३।४।२४ ॥

किमयं प्राप्ते विभाषाऽऽहो स्विदप्राप्ते ? ॥ कथं च प्राप्ते कथं वाऽप्राप्ते?॥

---

प्र.]मानने'त्युक्ते पङ्क्तौ य सर्वेषामादि स एवानीयते तथेहापि 'स्नात्वा भुक्त्वा पीत्वा मजती'ति स्नानस्यैव पूर्वत्वात्स्नातेरेव प्रत्ययेन भाव्यं न तु भुजिपिबत्योरित्यर्थः । सर्वेषामिति । स्नात्यादिगम्याया क्रियाया विशेष्यत्वात्प्राधान्यात्तां प्रति सर्वासां विशेषणत्वात्परस्परेणाऽसम्बन्धः । यथोक्तम्-'गुणानां च परार्थत्वादसम्बन्धः समत्वा'दिति । अवरकाल इति । यद्यपि स्वप्नक्षणानां व्यादानात्पूर्वकालता तथापि व्यादानानन्तरभाविस्वप्नक्रियापेक्षं व्यादानस्य पूर्वकालत्वमित्यर्थः ॥

विभाषाग्रे । इहाऽग्रादयः साधनपौर्वकाल्यविषया गृह्यन्ते न तु क्रियापौर्वकाल्यविषयाः । तेषां हि क्रियापौर्वकाल्यविषयत्वे तैरेव पौर्वकाल्यस्योक्तत्वात् तत्पानुप्रयो-

---

उ.]गुणानाञ्चेति । प्रधानक्रियाऽन्वये सम्भवति गुणभूतक्रियाऽन्वयोऽनुचित इति भावः । प्रत्येकानन्तर्यविवक्षायामिष्टप्रसिद्धिरित्याह भाष्ये-एवञ्च कृत्वेति । तेन प्रत्येकमानन्तर्यविवक्षाया वा न सा गुरित्याहुः । [ समानकर्तृकयोः ] ॥

विभाषाऽग्रे । साधनेति । साधनाऽन्तरजन्यस्वजातीयक्रियाऽपेक्षपौर्वकाल्यविषया इत्यर्थः । न तु क्रियेति । एककर्तृकभिन्नक्रियानिरूपितपौर्वकाल्यविषया इत्यर्थः । साधनपौर्वकाल्यविषयाणामेव ग्रहणे प्रमाणमाह-तेषां हीति । पूर्वादीना-

---

१ इदं क्वचिन्न भाष्यमित्यन्ये । २ 'पीत्वास्नात्वाभुक्त्वा' । ३ 'क्त्वा परः' । ४ 'चाऽप्राप्ते' ।

च्व्यन्तस्य च मकारान्तार्थम् ॥*॥ च्व्यन्तस्य च मकारान्तत्वं निपात्यते। अस्वादुं स्वादुं कृत्वा भुङ्क्ते स्वादुङ्कारं भुङ्क्ते॥ ॥२॥ आ च तुमुनः समानाधिकरणे ॥५॥ आ च तुमुनः प्रत्ययाः समानाधिकरणे वक्तव्याः ॥ केन ? ॥ अनुप्रयोगेण ॥ किं प्रयोजनम् ? ॥ 'स्वादुङ्कारं यवागूर्भुज्यते देवदत्तेने'ति देवदत्ते तृतीया यथा स्यात् ॥ किं [ च ] कारणं न स्यात् ? ॥ णमुलाऽभिहितः कर्तेति ॥ ननु च भुजिप्रत्ययेनाऽनभिहितः कर्तेति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया ॥ यदि सत्यभिधाने चाऽनभिधाने च कुल

प्र ]विहितनिमित्तत्वाद्वोतो गुणवचनादिति ङीप् न भवतीत्यर्थः । च्व्यन्तस्य चेति। णमुल्यपि सर्वत्र मुम् न सिध्यति, 'अनव्ययस्ये'त्यधिकारादिति भावः । यद्येवं मान्तत्वमेव निपात्यताम् प्रत्ययस्तु णमुलेव विधेयः । नैतदस्ति । अव्ययार्थमेव मान्तनिपातनं स्यादिति टीप् स्यादेव । णमुलि तु मान्तत्वमपूर्वं निधीयमानमीकाराभावार्थं च्व्यन्तस्य च मकारान्तार्थं विज्ञायते । अवश्यं चोत्तरार्थो णमुल् विधेय इति लाघवादिहैव विहितः । आ च तुमुन इति । पूर्वोक्तवाक्यार्थापेक्षया समुच्चयप्रतिपादनार्थश्चशब्दः । न केवलं स्वादुमि मान्तनिपातनमपि तु इदमपि वक्तव्यमित्यर्थः । शकधृषादिसूत्रविहितस्तुमुन् गृह्यते । अभिविधौ चाऽयमाकारः । णमुलेति । असत्यस्मिन्वचने कर्तरि कृदिति णमुलः कर्तरि भाव्यमिति भावः । अनभिहिताश्रय इति । अनभिहित इति पर्युदास आश्रीयते न तु प्रसज्य

उ ]पाठेऽप्ययमेवाऽर्थः । यत्नेव पाठं दृष्ट्वा भावप्रत्ययमात्रविषयं निपातनं, तेन क्त्वायोगेऽपीति। तथा स्वादुं कृत्वा यवागूं भुङ्क्ते अस्वादुं स्वादुं कृत्वा भुङ्क्ते इति भाष्यप्रयोगविरोधात् । स्वादौ कृत्वेनिवत् स्वादुङ्कारमित्यत्राऽपीकारः स्यात्तदभावाय निपातनमित्यर्थो भाष्यस्य। विहतेति । उकारान्तत्वाऽभावादित्यर्थः ।अव्ययार्थमेवेति। अपूर्वविधानात्प्रतिप्रसवस्य लघुत्वादिति भावः । 'आ च तुमुन' इत्यत्र चकारं निमपेक्ष्य इत्यत आह–पूर्वोक्तेति । 'मान्तनिपातन'मित्यस्य 'वक्तव्य'मिति शेषः । अभिविधौ चेति । एवञ्च तुमुनन्तधातुसम्बन्धाऽधिकारविहिता अव्ययकृत इत्यर्थः । तुमुन्त्वसामान्यात् 'तुमुन्ण्वुला'वित्यस्याऽपि ग्रहणं बोध्यम्। अत एवाऽग्रे 'भोक्तुमोदनं पचति' इत्युदाहरणं सङ्गच्छते। भाष्ये–समानाऽधिकरणे इति। न्वाऽन्वयि समभिव्याहृताऽख्यातवाच्यकारके इत्यर्थः । [भाष्ये]–अनुप्रयोगशब्देनेदमेवोच्यते । समानाऽधिकरणे कारके वर्तमानाद्धातोरित्यर्थः । तेन तस्य धात्वर्थं प्रति विशेषणत्वमेवेति न बोधे वैषम्यम् । ननु सत्यन्यस्मिन्कारके कर्तरि कस्मादभिधीयतेऽत आह,–असत्यन्यस्मिन्निति । नन्वभिहिते प्रतिषेधात्कथमनभिहिताऽऽश्रयो विधि

१ 'मकारान्तत्वं यथा स्यात्'। २ 'स्वादुं अस्वादुं'। ३ 'समानाधिकरणे भवन्तीति वक्तव्यः'।

श्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया, यवाग्वा द्वितीया प्राप्नोति॥ किं कारणम् ? ॥ णमुलाऽनभिहितं कर्मेति ॥ यदि पुनरयं कर्मणि विज्ञायेत ? ॥ नैवं शक्यम्, इह हि 'स्वादुङ्कारं यवागूं भुङ्क्ते देवदत्त' इति यवाग्वां द्वितीया न स्यात् ॥ किं कारणम् ? ॥ णमुलाभिहितं कर्मेति ॥

ननु च भुजिप्रत्ययेनाऽनभिहितं कर्मेति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति द्वितीया । यदि सत्यभिधाने चाऽनभिधाने च कुतश्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति द्वितीया, देवदत्ते तृतीया प्राप्नोति ॥ किं कारणम् ?॥ णमुलाऽनभिहितः कर्तेति॥ अथाऽनेन क्त्वामर्थः 'पक्त्वौदनो भुज्यते देवदत्तेनेति ? ॥ बाढमर्थः । देवदत्ते तृतीया यथा स्यात् ॥ किं च कारणं न स्यात् ? ॥ क्त्वाऽभिहितः कर्तेति ॥ ननु च भुजिप्रत्ययेनाऽनभिहितः कर्तेति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया। यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया, ओदने द्वितीया प्राप्नोति ॥ किं कारणम् ?॥ क्त्वाऽनभिहितं कर्मेति ॥ यदि पुनरयं कर्मणि विज्ञायेत ?॥ नैवं शक्यम् । इह हि 'पक्त्वौदनं भुङ्क्ते देवदत्त' इत्योदने द्वितीया न स्यात् ॥ किं च कारणं न स्यात् ? ॥ क्त्वाऽभिहितं कर्मेति ॥ ननु च भुजिप्रत्ययेनाऽनभिहितं कर्मेति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति द्वितीया ॥ यदि सत्यभिधाने चानभिधाने च कुतश्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति द्वितीया, देवदत्ते तृतीया प्राप्नोति ॥ किं कारणम् ? ॥ क्त्वाऽनभिहितः कर्तेति ॥ अथाऽनेन तुमुन्नर्थः— भोक्तुमोदनः पच्यते देवदत्तेनेति ? ॥ बाढमर्थः । देवदत्ते तृतीया यथा स्यात्॥ किं च कारणं न स्यात् ? ॥ तुमुनाऽभिहितः कर्तेति ॥ ननु च पचिप्रत्ययेनाऽनभिहितः कर्तेति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीया । यदि सत्यभिधाने चाऽनभिधाने च कुतश्चिदनभिधानमिति कृत्वाऽनभिहिताश्रयो विधिर्भविष्यति तृतीयौदने द्वितीया प्राप्नोति ॥ किं कारणम् ? ॥ तुमुनाऽनभिहितं कर्मेति कृत्वा ॥ यदि पुनरयं कर्मणि विज्ञायेत ? ॥ नैवं शक्यम् । इह हि भोक्तुमोदनं पचति देवदत्त इत्योदने द्वितीया न स्यात् ॥ किं च कारणं न स्यात् ? ॥ तुमुनाभिहितं कर्मेति ॥ ननु च पचिप्रत्ययेनानभिहितं कर्मेति

---

प्र.]प्रतिषेध इति भावः । यदि पुनरिति। 'अव्ययकृतः कर्मणि'ति वचनं यदि क्रियत इति भावः । अथानेनेति । 'आ च तुमुन' इत्यनेन वचनेनेत्यर्थः । अनेकप्रयोजनत्वमस्य वचनस्य प्रश्नद्वारेण दर्शयति । पक्त्वौदनमिति । भिन्नधात्वर्थविषयकर्म-

---

१ 'भवति' । २ 'किं कारणं न स्यात्' । ३ इदं क्वचित्। ४ 'विधिर्भविष्यति'।

बन्ध सञ्ज्ञाया' । तत –'कर्त्रोर्जीवपुरुषयोर्नशिवहो'रिति॥ कथमट्टालिकाबन्धं बद्ध घण्डालिकाबन्धं बद्ध. ? ॥ 'उपमाने कर्मणि च'त्येवं भविष्यति ॥

तिर्यच्यपवर्गे ॥ ३।४।६० ॥

अयुक्तोऽय निर्देश' । तिरश्चीति भवितव्यम् ॥*॥ सौत्रो निर्देशः ॥*॥

नाधार्थप्रत्यये च्व्यर्थे ॥ ३।४।६२ ॥

अर्थग्रहण किमर्थं?॥ 'नाधाप्रत्यय' इतीयत्युच्यमाने इहैव स्यात्,–द्विधाकृत्य । इह च न स्यात्,–द्वैध कृत्य । अर्थग्रहणे पुन क्रियमाणे न दोषो भवति । नाधाप्रत्यये च सिद्धं भवति, दध्नान्यस्तेन समानार्थः ॥

अथ प्रत्ययग्रहण किमर्थं ?॥ इह मा भूत् ,हिरुक्कृत्वा पृथक्कृत्वा॥

अन्वच्यानुलोम्ये ॥ ३।४।६४ ॥

अयुक्तोऽय निर्देश । अनूचीति भवितव्यम् । ॥[*॥सौत्रो निर्देशः ॥*]॥ सौत्रोऽय निर्देशः ॥

---

प्र ] अधिक । ग्रामे बन्ध इति । धातुलि सति 'ग्रामबन्ध बद्ध' इति प्राप्नोति ॥

तिर्य । सौत्रो निर्देश इति । अनुक्रियमाणस्य विनाशप्रसङ्गस्तु न परिहारो, न हि प्रयोजनमनुवर्ति प्रमाणम् । [ तिर्यच्यपवर्गे ] ॥

नाधा । द्वैध कृत्येति । यदा 'द्वित्र्योश्च धमु'रित्यादौ प्रत्ययपक्षस्तदेतदर्थग्रहणस्य प्रयोजनम् । आदेशपक्षे तु स्थानिवद्भावाद्धाग्रहणेन ग्रहणसिद्ध्यति । तथा च 'धमुञन्तात्स्वार्थे डदर्शन'मिति दप्रत्यय उदाहार्यो 'द्वैधकृत्ये'ति । 'ना'ऽर्थमप्यर्थग्रहणं कर्तव्यमन्यथा निरनुबन्धकपरिभाषया नाघो ग्रहणं न स्यात् ।

---

उ.]नथाऽप्यानन्तर्यमपि प्राप्नोतीत्याह–ग्रामबन्धमि त्यादिना।'ग्रामे बद्ध' इति स्वपाठ , कर्मणि चस्य विधेः भावनिर्देशणमुलोऽप्राप्ते । यद्यप्यत्र साध्यो भाव , स च सिद्धस्वभावस्तथापि सिद्धवस्त्वधिकरणेऽपि तस्याऽक्षते ।भाष्ये–एवं वक्ष्यामीति । 'सञ्ज्ञा'मित्यनेनैतन्नान्यन्यापकम् । कथमिति । सञ्ज्ञाऽभावात्प्रश्न । उपमान इति । एनमनधिकरणेपिताऽपि तेनैव साध्यमिति भाव । [अधिकरणे बन्ध ] ॥

तिर्यच्य । तिर्यक्शब्दोऽऋजुवाची,अपवर्ग –समाप्तिवाची च । न हन्ति । सौत्रत्वेन शास्त्राऽप्रवृत्तौ तु तद्विनाशप्रसङ्गो बीजमित्यन्यदिति भाव ॥[तिर्यच्यप]।

नाधार्थप्रत्यये । तथा चेति । तदा चेत्यर्थ । द्वैधकृत्येति । टाऽनेन समासे निश्चित्यैव । एतद्ग्रहणस्वरस्यात्प्रत्ययपक्ष एव तत्र न्याय्य इति तत्त्वम् । नाऽर्थमपीति। निरनुबन्धकमादाय स्यादि सिद्धेरनिष्टाऽभावाच्च तदर्थत्व चिन्त्यम्। 'हिरु'गिति। नाऽर्थत्वात्प्राप्ति ॥ [ नाधार्थप्रत्यये ] ।

---

१ इद भाष्यमित्यन्ये । २ 'द्विधा कृत्वा' । ३ 'नाधार्थ' । ४ इदं त्यक्तं स्यात् ।

## कर्तरि कृत् ॥ ३।४।६७ ॥

किमर्थमिदमुच्यते ? ॥*॥ कर्तरि कृद्वचनमनादेशे स्वार्थविज्ञानात् ॥*॥ कर्तरि कृतो भवन्तीत्युच्यते॥[किं प्रयोजनं ?॥ ] 'अनादेशे स्वार्थविज्ञानात्'। अनिर्दिष्टार्था प्रत्ययाः स्वार्थे भवन्ति। तद्यथा गुप्तिज्किद्भ्यः सन्, यावादिभ्यः कन्निति । एवमिमे प्रत्ययाः कृतः स्वार्थे स्युः । स्वार्थे मा भूवन्कर्तरि यथा स्युरित्येवमर्थमिदमुच्यते ॥ नैतदस्ति प्रयोजनं, यमिच्छति स्वार्थे आह तं 'भावे घञ्भवती'ति॥ कर्मणि तर्हि मा भूवन्निति ॥ कर्मण्यपि यमिच्छत्याह तं 'घञ् कर्मणि ष्ट्र'न्निति ॥ करणाधिकरणयोस्तर्हि मा भूवन्निति ॥ करणाधिकरणयोरपि यमिच्छत्याह तं 'ल्युट्करणाधिकरणयोर्भवती'ति ॥ सम्प्रदानापादानयोस्तर्हि मा भूवन्निति ॥ सम्प्रदानापादानयोरपि यमिच्छत्याह तं,-दाशगोघ्नौ सम्प्रदाने, भीमादयोऽपादान इति ॥ य इदानीमतोऽन्यः प्रत्ययः शेषः

प्र ] कर्तरि । किमर्थमिति । वक्ष्यमाणोऽभिप्रायः । अनादेश इति । यत्र वचनेनार्थो नादिश्यते तत्र प्रत्यासत्त्या प्रकृत्यर्थ एव प्रत्ययो भवति । यमिच्छतीति । असत्यस्मिन् सूत्रे 'घ नियेतावत्सूत्रं कर्तव्यम् । धातोर्घञ्भवतीति । तत्रानिर्दिष्टत्वाद्भावे घञ् भविष्यति । ततः पदरुजविशस्पृशः' इति द्वितीयं सूत्रं कर्तव्यं,तत्रश्च भाव इति न कर्तव्यम् । क्रियमाणं तु नियमार्थं भविष्यति—'घञेव भावे नान्य' इति । ततो धात्वर्थाक्षिप्ते कर्तरि कृद्भविष्यति नार्थः सूत्रेणेत्यर्थः । कर्मणीति । तत्रापि धात्वर्थेनाक्षेपादिति भावः । घ कर्मणि ष्ट्रन्निति। 'ष्ट्रन्नेव कर्मणि नान्य'इति नियमो विज्ञास्यते । यद्वा कर्मणो नियमात्प्रत्ययो न नियत इति कारकान्तरेऽपि ष्ट्रन् प्राप्नोति । नैष दोषः । एकमिदं वाक्यं 'घ कर्मणि ष्ट्र'न्निति । तत्र च कर्मणि विधीयमानः कथं कारकान्तरे स्यात् । अथवा द्वितीयो नियमः करिष्यते 'कर्मण्येव ष्ट्र'न्निति। य इदानीमिति।ननु 'कर्तरि भुवः खिष्णुच्खुकञौ' 'कर्तरि चर्षिदेवतयो'-

उ ] कर्तरि कृत् । ननु 'भावे' इति सूत्रं धातुमात्राद्धञ्विधय आवश्यकमत आह–घनियेतावदिति । भावपदोपादानं विनाऽप्यन्यप्रत्ययस्य स्वार्थे विधानेनैव भावे सिद्धमिति भावः । ततः पदरुजेति । कर्त्रर्थमिदम् । ष्ट्रन्प्राप्नोतीति । 'घ ष्ट्र'न्नित्येकं वाक्यं विध्यर्थम्, ततः 'कर्मणी'ति नियमार्थमिति भावः । परिहरति–एकमिदं वाक्यमिति । कथं कारकान्तरे इति । एकवाक्येऽपि विशेषणोपादानं नियमार्थमित्यर्थः । नन्वेवं विधित्वमेव स्यात्,विशेषणोपादानात् कर्मण्येवेत्येव स्यान्न तु ष्ट्रन्नेवेत्यरुचेराह—अथ वेति । आरुच्येति भावः । घत्वर्थोक्तेति कर्मण्यपि सिद्धेर्नियमार्थत्वमिति तात्पर्यम्। एवं करणाधिकरणयोरित्यत्रापि बोध्यम् । सार्वे

१ इदं तुम स्यात् । २ 'अनादिष्टार्थ । ३ 'देवमर्थं' ।

सोऽन्तरेण वचनं कर्तर्येव भविष्यति ॥ तदेव तर्हि प्रयोजनम्,—'स्वार्थे मा भूव'न्निति ॥ ननु चोक्तं 'यमिच्छति स्वार्थे आह तं-भावे घञ्भवती'ति ॥ अन्य स भावो बाह्य प्रकृत्यर्थात्। अनेनेदानीमाभ्यन्तरे भावे स्युः । तत्र मा भूवन्निति कर्तृग्रहणम् ॥ कः पुनरेतयोर्भावयोर्विशेषः ? ॥ उक्तो भावभेदो भाष्ये ॥ अस्ति प्रयोजनमेतत् ॥ किं तर्हीति ॥५॥ तत्र ल्युडादिप्रतिषेधो नानावाक्यत्वात् ॥६॥ तत्र ल्युडादीनां प्रतिषेधो वक्तव्यः । ल्युडादयः कर्तरि मा भूवन्निति॥ ननु च करणे ल्युडादयो विधीयन्ते ॥ कर्तरि न भविष्यन्ति॥ तेन च करणे स्युरनेन च कर्तरि ॥ ननु चापवादत्वाल्ल्युडादयो बाधकाः स्युः ॥ न स्युः ॥ किं कारणम् ? ॥ 'नानावाक्यत्वात्' । नानावाक्यं तच्चेदं च । समानवाक्येऽपवादैरुत्सर्गा बाध्यन्ते । नानावाक्यं चाबाधनं न प्राप्नोति॥

प्र ]रिति कर्तुरपि नियमः प्राप्नोति।नैष दोषः ।उभयत्र करणनिवृत्त्या कर्तृश्रुतिर्विध्यर्थैव न नियमार्था। उक्त इति।'सार्वधातुके य'गित्यत्र बाह्याभ्यन्तरयोर्भावयोर्विशेषो दर्शित । ननु चेति । ल्युडादिषु करणादिरर्थो विशेषविहितत्वात्कर्तुर्बाधको भविष्यतीति भाव । नाना वाक्यत्वादिति । 'इह ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याये'त्यभिप्रायात्मकादेक वाक्य विशिष्टस्य दानस्य प्रतिपादकमिति तक्रेण दधि बाध्यते । यदा तु कालभेदेन वाक्यद्वयमुच्चार्यते 'पूर्वाह्णे ब्राह्मणभोजनप्रकरणे दधि ब्राह्मणेभ्यो दीयता'मिति। अपराह्णे तु 'तक्रं कौण्डिन्याय दीयता'मिति। तदा तक्रेण दधि न बाध्यते । तथेहापि कालभेदेन वाक्यद्वयोच्चारणाद्बाध्यबाधकभावो नास्ती-

उ ] धातुके यगित्यत्रेति । नन्वाभ्यन्तरेऽपि भावे न भविष्यन्ति, 'तुमर्थे से'इति तुमर्थग्रहणेनाभ्यन्तरे भावे सेआदीनां नियमादिति चेन्न, सति ह्यस्मिन् तुमर्थग्रहणेन 'भाव'ग्रहणम्, असति तस्मिन् विधित्वप्रसक्तये तुमर्थग्रहणेन कर्तुरेव ग्रहणं स्यात्, तुमुनोऽप्युक्तन्यायेन कर्तर्येव प्रसक्तेरित्याशयः । 'ल्युट् कर्मणि च भावे चे'ति । भावग्रहणे तु न नियन्तुं शक्यो विज्ञातुम्, 'अकर्मकेभ्य' इति विशेषणाय तदावश्यकत्वात् । भाष्ये—ल्युडादयः कर्तरीति । अत्र भाव,—'स्वस्वविधायकैर्विहितानामप्रत्ययानां पश्चादनेनाऽर्थाऽऽदेशन'मिति पक्षे यथा तृजादीनामर्थादेशन एव ल्युडादीनामप्यादेशेनाऽविशेषात् । ततश्च तेऽप्यनेन कर्तरि स्युः, तत्तद्वाक्ये उपादानात्करणादिषु चेति करणादिरर्थो विशेषविहितत्वादिति । कथंश दतादेऽर्थस्याऽपि शाब्दमात्रगम्यत्वेन विधेयत्वादिति भाव । भाष्ये—ननु चापवादत्वादिति । ल्युडादिशास्त्रोपात्ताः करणादय इत्यर्थः । इहाऽपि काल-भेदेनेति । पूर्वं करणे विधानं, तदा तु न कर्त्रर्थोपस्थितिरिति बाधाऽभाव,

१ 'स्वार्थे यमिच्छति' । २ 'भावो' । ३ 'तेन कर्तरि' । ४ 'समाने वाक्ये चाऽप'।

॥४॥ तद्वच्च कृत्येष्वेवकारकरणम् ॥४॥ एवं च कृत्वा कृत्येष्वेवकारः क्रियते,–तयोरेव कृत्यक्तखलर्था इति, भावे चाकर्मकेभ्य इति ॥ किं प्रयोजनम् ? ॥५॥ तत्र भव्याद्यर्थम् ॥ ॥ भव्यादिषु समावेशः सिद्धो भवति । गेयो माणवकः साम्नाम्, गेयानि माणवकेन सामानीति ॥५॥ कर्तृदेवतयोस्तु

प्र.]सर्वं । यस्मिन्नर्थे विधानमे 'यथेक वाक्य नवैव च ततस्तत्रैवोऽस्य नानार्थत्वं तदा तदवसाद' इत्युक्तम् । तदर्थमसाधनेण यदाऽनस्येनि इत्येभाव यदाचविगतन्धे षष्ठी तदा स्थानसङ्करभाव ललोऽन्यस्येन्यनुपस्थान, नदेव वाचनादनम् । दनुना-दयस्तु कृत्यादनेन कर्तरि स्युः । करणादिष्वन्या च करणादिषु । तत्राऽनेकस्यार्थ-स्य युगपदभिधानाऽसम्भवात् पर्याय स्यात् । क्वचित् कर्तरि, क्वचित् करणादिषु ।

तद्वच्चेति । योऽयमर्थ उक्तस्तेन मुख्येनकारकरणनियमार्थं । तथाहि,-कृत्यान्कर्तरि कृत्यादय प्राप्ता एवकारेण कर्तुरपकृष्यन्ते, भावकर्मणोरेव यथा स्युरित्येवमर्थ-नियमार्थः । भावे चाऽकर्मकेभ्य' इत्यनेनाधिकारसहित वाक्य दर्शयति । किं प्रयो-जनमिति । एवकारेणाऽन्यत्र समावेशापादनेन किं प्रयोजनमिति प्रश्न । तत्र भव्याद्यर्थमिति । भव्यगेयादिसूत्रे वाग्रहण न कर्तव्यम्, तदन्तरेणापि भव्याद्य कर्तरि भवन्तीत्यनेन समावेशादवकारकरणाद्भावकर्मणी न बाधिष्येते इत्यर्थ । इदानीं 'तत्र लयुटादिप्रतिषेध' इत्यस्य परिहारमाह–कर्तृदेवतयोरिति ।

उ ]विधानोत्तरं पश्चादुपस्थितत्वात् कथं बाध, तत्प्रापितो तस्य नाऽप्रसक्तभावात् । यथा अपवादवचनबलेन पूर्वादपविधानस्य न बाध इति भाव । ननु 'इको गुणवृद्धी' इति सूत्रे नानावाक्यत्वमङ्गीकृत्य कथनवाक्यत्वोक्तिरत आह–यस्मिन्निति । तदस्म-त्समवायधर्मेणेति । 'अनेकान्यस्मे'त्यन्योऽनियतसमभावाऽभिप्राये'त्यर्थ, तदेवाह–यद्वेति । कृत्यादनेनेति । विपुलतरकार्यार्थमनवग्रहेणेत्यर्थ । तत्राऽनेकस्येति । कर्तृकरणौ स्वातन्त्र्याऽस्वातन्त्र्याभ्यां भिन्नस्वभावौ इति भाव । योऽयमिति । बाध्यबाधकभावनानात्वाभिप्राय इत्यर्थं । तेन मुख्यमिति । तत्राऽपि तद्वोधकत्वा-दिति भाव । इत्येवमर्थमिति । यदि बाध्यबाधकभाव स्यात्तदा भावकर्मभ्यां कर्तुर्बाधनम्भवात्तद्वैयर्थ्यं स्पष्टमेव । तस्मादेवकारेण ज्ञाप्यते–'अर्थस्याऽर्थान्तरं न बाधकमि'ति भाव । ननु 'भावे ने'त्यायुक्तेचारस्य विपर्ययस्त आह—भावे चेत्यादि । ननु कृत्यादीनां कर्मविषयत्वेऽसत्यपि एवकारप्रयोजनमिति शङ्काऽनवसरानुर-पत्तिरत आह–एवेति । 'वा'ग्रहणेन तन्निवृत्त्यर्थ आह–भव्येति । कर्तरि भवन्तीति । 'कर्तरि कृदि'ति सूत्रादिति भाव । इतो हेतोर्न कर्तृनियम्यत्व । नन्वेवमपि कर्त्रा भावकर्मणोर्बाध स्यादत आह–अनेनेति । अनेन–कर्त्रा । समा-

१. दृ॰ इत्येष ।

रलुगुच्यतेऽपवादः । यदप्युच्यते–'एवकारकरणं च स्वार्थं' इति । कथं पुनरन्यो नामाऽन्यस्यार्थे वर्त्तते । कथमेवकारश्चार्थे वर्त्तते ?॥ न एष एवकारः स्वार्थे वर्त्तते ॥ किं प्रयोजनम् ?॥ ज्ञापकार्थम् ॥ किं ज्ञाप्य ?॥ एतज्ज्ञापयत्याचार्यः 'इत उत्तरं समावेशो भवती'ति ॥ किमेतस्य ज्ञापने प्रयोजनम् ?॥ 'तत्र भव्याद्यर्थम्' । भव्यादिषु समावेशः सिद्धो भवति, गेयो माणवकः साम्नां, गेयानि माणवकेन सामानीति ॥ यद्येतज्ज्ञाप्यते इहापि समावेशः प्राप्नोति,–दाशगोघ्नौ सम्प्रदाने, भीमादयोऽपादाने इति॥ अत्रापि सिद्धं भवति यदयमादिकर्मणि क्तः कर्तरि चेति सिद्धे समावेशे समावेशार्थं चकारं शास्ति तज्ज्ञापयत्याचार्यः–'प्रागमुतः समावेशो भवती'ति ॥

प्र ]'अलुगुत्तरपदे'इति।तदुक्तं हरिणा–'अनेकारत्यातयोगेपि वाक्यन्यायापवादयो । पृथगेवेष्यते कैश्चिद्विरूपमिव स्थितम् ॥ नियम प्रतिषेधश्च विशेषश्च तथा सति । द्वितीये यो लुगाख्यातस्तच्छेषमलुकं विदुः ॥' इति ॥ कथमिति । एवकारस्य लौकिके प्रयोगे न क्वचित्स्वार्थऽर्थे वृत्तिर्दृश्यत इति भावः ।उत्तरमिति। कर्तरि कृ'दित्यस्मादुत्तरमित्यर्थः । तत्रेति । भव्यगेयादिसूत्रे 'वे'ति न कर्तव्य भवतीत्यर्थः । यदयमिति। 'आदिकर्मणि क्तः कर्तरी'त्येनावदस्तु नाऽर्थश्चशब्देन। समावेशोऽप्येवकारज्ञापितो भविष्यति । कृतस्तु 'च'शब्दो ज्ञापयति–आदिकर्मणी-

उ ]नार्थस्याऽस्य निरोपाधिनिर्देशेन बाध इति भावः । यद्वा तेषामर्थांशो निराकाङ्क्षत्वादेवानुपस्थितिरेव । तृजादिविधौ तु तेषामर्थाऽऽकाङ्क्षागरनात् 'कर्तरी'त्यस्याऽप्यर्थस्यावश्यकत्वेनोभयाऽऽकाङ्क्षया तत्रैवाऽन्वयो, न ल्युडादिषु, साक्षादर्थनिर्देशेन तेषां निराकाङ्क्षत्वादिति तत्त्वम्। अनेकाख्यातयोग –'यण् भवति' 'दीर्घो भवती'त्यादिरूप । न्याय –उत्सर्ग । 'विधिशेष' इति पाठे नियमप्रतिषेधौ विधिशेषावेव न तु स्वतन्त्रावित्यर्थः । तदुदाहरणमाह–द्वितीये इति। विशेषश्च तथे'ति पाठे विशेषोऽपवाद । एतत्त्रितयं विध्येकवाक्यतापन्नमित्यर्थः ।न कर्तव्य भवतीति । न च स्वार्थे वृत्तिमाश्रित्य सूत्रमेव न कार्यम् , अनिष्टप्रसङ्गस्तत्त्वनभिधानाद्वारणीय इति प्रागुक्तयुक्तम्, अनभिधानेन प्रत्याख्यानस्याऽयुक्तत्वादित्याहु ।एवञ्च स्वार्थे कृत्वा व्यावृत्तये सूत्रं कार्यं, ल्युडादिषु च करणत्पापेन बाधात् दोष । तत्र 'किमिदं न्तपूर्वनयाऽर्थं बोधक प्रत्ययमितरार्थेभ्यो व्यावर्त्तयति, किं वा तत्राऽर्थे लोके प्रयुज्यमानस्यैव कृदादिप्रकृति प्रतिपादयती'ति सन्दिह्य,–तत्र द्वितीयस्य सिद्धान्तत्वकरणेनाऽपि'ल्युडादीनां तत्र प्रतिषेध'इति वार्तिकप्रत्याख्यानानुगुणत्वमते भाष्ये–किंपुनरिति । कृत्प्रत्ययो नियम्यत इति । एतावतैव सूत्रव्यापार, 'कर्तारं ब्रुवन्

१ 'वियते' । २ 'ज्ञाप्यते' । ३ 'समावेशं शास्ति' ।

नियमे पुन सति परिगणिताभ्य प्रकृतिभ्य पर घञ् नियोगत कर्तारमाह न चेमास्तत्र परिगण्यन्ते प्रकृतय ॥*॥ विभक्तादिषु चाऽप्राप्ति प्रकृते प्रत्ययपर वचनात् ॥*॥ विभक्तादिषु च प्रत्ययनियमस्याऽप्राप्ति ॥ किं कारणम् ? ॥ प्रकृते प्रत्ययपरवचनात्[१] । परिगणिताभ्य प्रकृतिभ्य पर क्त स्वभावत कर्तारमाह, न चेमास्तत्र परिगण्यन्ते ॥ न तर्हीदानीमय साधुर्भवति ? ॥ भवति साधुर्न तु कर्तरि॥कथ तर्हीदानीमत्र कर्तृत्व गम्यते?॥ अकारो मत्व र्थीय । विभक्तमेषामस्ति विभक्ता । पीतमेषामस्ति पाता इति ॥ ॥[*॥उत्तरपदलोपो वा ॥*]॥ अथ वोत्तरपदलोपोऽत्र द्रष्टव्य । विभक्तधना विभक्ता । पीतोदका पाता इति ॥ [ कर्त्तरि कृत् ] ॥

प्र ]ति दोषोपन्यास । प्रकारान्तरेण साधुत्व दर्शयिष्यते । प्रत्ययनियमवादिनस्त्वय मदोष । गत्यर्थाकर्मकेत्यत्र परिगणिताभ्य प्रकृतिभ्य पर क्त कर्तरि नियुज्यते । नहि तत्र भनिषिद्धी परिगणनाविचार्य । सज्ञानियमवाद्याह–विभक्तादिषु चेति । ममापि गत्यर्थाकर्मकेति सूत्र न दण्डवारितम् । तत्र गत्यर्थादिभ्य एव क्त स्वभा वत कर्तारं ब्रुवन् कृत्प्रत्ययसज्ञो भवतीति भनिषिद्धेभ्या कस्य कर्तरि साधुत्वा ऽप्रसङ्ग । प्रकृतेरिति । गत्यादिकाया इत्यर्थ । प्रत्ययपरवचनादिति । क्तप्रत्ययस्य कर्तरि वर्तमानस्य साधुत्वेन प्रतिपादनादित्यर्थ । तदेव स्थितमेतत्–स्वभावतस्तेषु तेष्वर्थेषु वर्तमानता प्रत्ययसज्ञाविधानद्वारेण साधुत्वमन्वाख्यायते । इदानी भाष्य कार प्रश्नपूर्वक प्रयोगसमर्थन करोति–न तर्हीति । न तु कर्तरीति । 'तयो रेवे'ति वचनात्कर्मण्येव साधुरित्यर्थ । विभक्तमिति । धनमिति भाव । पातमिति । उदकमित्यर्थ । आकृतिगणत्वादर्श आदि । अथ वेति । गम्यमानार्थस्य शब्दस्या ऽप्रयोग एव लोपोऽभिमत । 'विभक्ता भ्रातर' इत्यत्र च धनस्य यद्विभक्तत्व तद्भ्रातृषूपचर्यते । 'पीता गाव' इत्यत्राप्युदकस्य पीतत्व गोष्वारोप्यते । [कर्त्तरि]॥

उ ] सिध्यतीत्यर्थ इति भाव । असाधुत्व वीजमाह–क्रियाकारकसबन्धेनेति । धन कर्मकविभागकर्तार इत्यर्थ इति भाव । प्रकारान्तरेण–अन्वर्थसज्ञाविधिबलेन बोध इत्य र्थ । क्त कर्तरि नियुज्यत इति । शास्त्रेण बोध्यत इत्यर्थ । भाष्ये प्रकृते प्रत्ययेति । प्रकृतिविशेषप्रत्वाद परस्य क्तप्रत्ययस्य कर्तारि साधुत्ववचनादित्यर्थ । तदाह–क्तप्रत्ययस्येति । 'भवति साधुर्न तु कर्तरी'ति भाष्यायेन कर्मणि स्वरसतो विधान तत्रेति स्फुटम् इत्याशयेनाह–धनमिति भाव इति । एतेन इदम्भाष्य सकर्मकेभ्योऽपि भावे क्ते साधुत्वमुक्तमित्यन्त परास्तम् । उत्तरपद लोपविधायकवचनाऽभावादाह–गम्यमानेति । [ कर्तरि कृत् ] ॥

१ 'तर्हि कथ' । २ इद वार्तिकमित्यन्ये । ३ 'मत्वीति' । ४ इद उत स्यात् ।

तत्तत्राऽकर्मकग्रहणं कर्तव्यम्॥ ननु चेहापि 'क्रियते भावे चाकर्मकेभ्य' इति॥ परार्थमेतद्भविष्यति–'तयोरेव कृत्यक्तखलर्थाः', भावे चाकर्मकेभ्य इति॥ यावदिह लग्रहणं तावत्तत्राऽकर्मकग्रहणम्। इह वा लग्रहणं क्रियेत तत्र वाऽकर्मकग्रहणं को न्वत्र विशेषः[१]॥ अयमस्ति विशेषः,–इह लग्रहणे क्रियमाणे आनः कर्तरि सिद्धो भवति। तत्र पुनरकर्मकग्रहणे क्रियमाणे आनः कर्तरि न प्राप्नोति॥ तत्राप्यकर्मकग्रहणे क्रियमाणे आनः कर्तरि सिद्धो भवति॥ कथम्॥ भावकर्मणोरित्यतो यदन्यदात्मनेपदानुक्रमणं तत्सर्वं कर्त्रर्थम् ॥२॥ विप्रतिषेधाद्वानः कर्तरि ॥३॥ विप्रतिषेधाद्वाऽऽनः कर्तरि भविष्यति । तत्र भावकर्मणोरित्येतदस्तु

प्र.] भावकर्मणो'रित्येव करिष्यते, भावप्रत्यार्थाकर्मकग्रहणं भावार्थं भविष्यति। अकर्मकाणां कर्माऽसम्भवात्। सूत्रारम्भवाद्याह–तयोरिति। सूत्रप्रत्याख्यानवाद्याह–ननु चेति। 'लकारा'विति शेषः । आरम्भवाद्याह–परार्थमिति । सूत्रप्रत्याख्यानवाद्याह–यावदिहेति । कर्मणि च भावे चाकर्मकेभ्य इत्येतदत्र प्रदेशे द्वाभ्यामपि वक्तव्यम् । त्वया तु 'लः' इत्येतत्पदमत्र कर्तव्यम्, मया 'भावकर्मणो'रित्यत्र अकर्मकग्रहणमिति पदेन पदस्य साम्यम् । मात्रालाघवं त्वत्र न विवक्षितम् । आरम्भवाद्याह–अयमस्तीति । आन इति । आत्मनेपदसंज्ञत्वाद्भावकर्मणोरिति वचनाद्भावकर्माभिधायित्वमेव स्यान्न तु कर्तृवाचित्वमिति 'शयान' इत्यादौ कर्तर्यानो न स्यात् । सूत्रारम्भे तु कर्तर्यप्यान सिध्यतीत्यर्थः । प्रत्याख्यानवाद्याह–तत्रापीति । 'अनुदात्तङित' इत्यादिभिः सूत्रैः कर्तर्यात्मनेपदविधानार्थैरान कर्तरि 'शयान' इत्यादौ भविष्यतीत्यर्थः । विप्रतिषेधाद्वेति । 'भावकर्मणो'रित्यस्य तदवकाशः, यत्र कृत्संज्ञाया अभावात्कर्तरि कृदिति न प्रवर्तते 'आस्यते पच्यते' इति । 'कर्तरि

उ.] तदनुसरणस्याऽऽवश्यकत्वादिति भावः । स चाऽयमेवविहित इति । सोऽयं लकार एवं 'लः कर्मणि चे'ति सूत्रशरीरे यथा विहितस्तथा विहित इत्यर्थः । अतोऽपि 'लः' इत्यस्य पञ्चम्यन्तत्वपक्षोऽयुक्तः । तथा सति 'ते चेमे' इति वदेत् । भाष्ये–इत्यपि स्यादिति । लकारेण कर्तृकर्मणोरनभिधानादिति भावः । इत्येतदत्र प्रदेश इति । तयोरेवेति सूत्रार्थमित्यर्थः । पदेनेति । पदमनुदात्तेतकं सूत्रे भगवान्पाणिनिरपर नाद्रियत इति भावः । वस्तुतस्तत्र लग्रहणे कर्मभावाभ्यां कर्तृसमाऽर्थोऽनाधाय 'च'द्वय कार्यम्, उत्तरसूत्रे च 'तयो'रिति वाच्यम् । ननु कर्मणि कृत्यक्तखलर्था भावेऽकर्मकेभ्य इत्येतेन मात्राल्पत्वमस्त्येवेति बोध्यम् । भाष्ये सूत्राऽनुसारेण 'च'घटितो न्यास, कैयटे च तथैव न्यासो दर्शितः ।

१ 'तत्रापि यावदिह' । २ 'रिति' । ३ 'तोऽन्यथा' ।
४ 'सर्वं तत्' । ५ भाष्यमिदमित्यन्ये ।

कर्तरि कृदिति,—कर्तरि कृदित्येतद्भविष्यति विप्रतिषेधेन ॥४॥ सर्वप्रसङ्गस्तु ॥*॥ सर्वेभ्यस्तु धातुभ्य आनः कर्तरि प्राप्नोति । परस्मैपदिभ्योऽपि ॥ नैष दोषः । अनुदात्तङित इत्येष योगो नियमार्थो भविष्यति॥ यद्येष योगो नियमार्थो विधिर्न प्रकल्पते । आस्ते शेते इति ॥ अथ विध्यर्थ,आनस्य नियमो न प्राप्नोति । आसीनः शयान[इति] । तथा नेर्विशः इत्येवमाद्यनुक्रमणं यदि नियमार्थं, विधिर्न प्रकल्पते । अथ विध्यर्थमानस्य नियमो न प्राप्नोति ॥ अस्तु तर्हि नियमार्थम् ॥ ननु चोक्तं 'विधिर्न प्रकल्पते' इति ॥ विधिश्च प्रक्लृप्तः ॥ कथम् ? ॥ 'भावकर्मणो'रित्यत्राऽनुदात्तङित इत्येतदनुवर्तिष्यते ॥ यद्यनुवर्तते एवमप्यनुदात्तङित एव भावकर्मणोरात्मनेपदं प्राप्नोति ॥ एवं तर्हि योगविभागः करिष्यते । 'अनुदात्तङित [आत्मनेपदम्' । अनुदात्तङित ] आत्मनेपदं भवति । ततो 'भावकर्मणोः' । ततः 'कर्तरि' । कर्तरि चात्मनेपदं भवति । 'अनुदात्तङित'इत्येव । [आस्ते शेते] । 'भावकर्मणो'रिति निवृत्तम् । ततः 'कर्मव्यतिहारे' । 'कर्तरी'त्येवानुवर्तते । 'अनुदात्तङित' इत्यपि निवृत्तम् ॥ यदप्युच्यते 'तथा नेर्विश इत्येवमाद्यनुक्रमणं यदि नियमार्थं विधिर्न प्रकल्पते, अथ विध्यर्थमानस्य नियमो न प्राप्नोती'ति । अस्तु

प्र ]कृ'दित्यस्य तृजादवकाशः । आनस्य तूभयप्रसङ्गे कर्तरि कृदिति परत्वात्कर्तोऽर्थः भविष्यतीत्यर्थः । आरम्भवाद्याह—सर्वप्रसङ्ग इति । परस्मैपदिभ्यो धातुभ्य आनः कर्तरि प्राप्नोतीत्यर्थः । प्रत्याख्यानवाद्याह—नैष दोष इति । 'अनुदात्तङित आत्मनेपदं नान्यस्मा'दिति नियमादानः कर्तरि परस्मैपदिभ्यो न भविष्यतीत्यर्थः । आरम्भवाद्याह-यदीति । भावकर्मणोरात्मनेपदविधानात्तेऽनुदात्तङितो न प्राप्नुवन्ति । 'अनुदात्तङित' इत्यनेन आन एव धातुविशेषे नियम्यत इत्यवशिष्टस्य वाक्यस्य विधिनियमार्थत्वेन सूत्रेण न प्रकल्पेते इत्यर्थः । प्रत्याख्यानवाद्याह—अस्तु तर्हीति । भावकर्मणो'रित्यत्रेति । 'अनुदात्तङित आत्मनेपद'मित्यनेनैकेन वाक्येन आनस्य नियमः क्रियते । 'भावकर्मणो'रित्यत्र त्वनुवृत्त्या द्वितीयेन वाक्येन तदा विधिः क्रियत इत्यर्थः । एवमपीति । भावकर्मणो'रित्यत्रानुदात्तङित इत्यनेनैव

उ.]तृजादय इति । तत्रात्मनेपदादिसंज्ञाऽभावादिति भावः ।परत्वात्कर्त्रर्थ इति। इदं पाक्षिकाद्यवादे । एवं हि भावकर्मणोर्न स्यादिति लभ्ये भाष्य एव स्पष्टम् । सर्वप्रसङ्ग इति । विशेषे स्वादे दूषणम् । तदोऽनुदात्तेति । कर्तरी'ति शेष । एवं 'नेर्विश' इत्यादीनां नियमत्वे कर्तरि तङ् न स्यात्, विधित्वे चैवमर्थस्यान स्यादित्यादि बोध्यम् । तङः विधिरिति । 'कर्तरी'ति शेष । भावकर्मणोरिति ।

१ इति क्वचित्र । २ इदं लुप्तं स्यात् । ३ 'नियम.' ।

## लस्य ॥ ३।४।७७ ॥

॥१॥ लादेशे सर्वप्रसङ्गोऽविशेषात् ॥१॥ लादेशे सर्वप्रसङ्ग । सर्वस्य लकारस्यादेशः प्राप्नोति । अस्यापि प्राप्नोति,—लुनाति लभते॥ किं कारणम्?॥ 'अविशेषात्' । न हि कश्चिद्विशेष उपादीयते एवजातीयकस्य लकारस्यादेशो भवतीति । अनुपादीयमाने विशेषे सर्वप्रसङ्ग ॥ ॥ ॥ अर्थवद्ग्रहणात्सिद्धम् ॥*॥ अर्थवतो लकारस्य ग्रहणम् । न चैषोऽर्थवान् ॥*॥ अर्थवद्ग्रहणात्सिद्धमिति चेन्न वर्णग्रहणेषु ॥ ॥ अर्थवद्ग्रहणात्सिद्धमिति चेत्तन्न ॥ किं कारणम्?॥ वर्णग्रहणमिदम् । न चैतद्वर्णग्रहणेषु भवत्यर्थवद्ग्रहणे नानर्थकस्येति ॥४॥ तस्माद्विशिष्टग्रहणम् ॥५॥ तस्माद्विशिष्टस्य लकारस्य ग्रहणं कर्तव्यम् ॥ न कर्तव्यम् । 'धातो'रिति वर्तते ॥ एवमपि शाला माला मल इत्यत्रापि प्राप्नोति । ॥६॥ उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥६॥ एवमपि नन्दन अत्रापि प्राप्नोति॥ ह्रस्वत्वाऽत्र बाधिता भविष्यति॥इहापि तर्हि बाधेत—पचति पठतीति ॥ इकारोऽभावादत्रेत्संज्ञा न भविष्यति ॥ इदमस्तीत्कार्यं 'लिति प्रत्ययात्पूर्वमुदात्तं भवती'त्येष स्वरो यथा स्यात् ॥ 'लिती'त्युच्यते न चाऽत्र

प्र ] त्ति प्रयोगेऽश्रवणेऽपि लुटोर्यवत्त्वम्, अनुप्रयोगात्तु तदर्थाभिधानमस्तीति त्यदोष ।

लस्य । अर्थवद्ग्रहणादिति । लादय एव भावाद्यर्थाभिधायिन स्थानित्वेन गृह्यन्त इत्यर्थ । न वर्णग्रहणेष्विति । लस्येत्यत्र लकारेऽकार उच्चारणार्थ । ततश्च वर्णमात्रस्याऽत्र निर्देश ।वर्णनिर्देशेषु च विद्यमानाप्यर्थवत्ता शब्देन नाश्रिता, वर्णरूपमात्रस्याश्रयणात् । तथा च यस्येति लोपोऽनर्थकस्यापि भवति—दैवदत्तिरिति। तस्मादिति।भावाद्यर्थाभिधायिनो लस्येति वक्तव्यमित्यर्थ । धातोरिति वर्तत इति । तिङ्विशेषण च धातुग्रहणमाश्रीयत इत्यभिधित्भ्यत इत्यत्रापि न भवति । शालेति । शलमलिभ्यां णित्त्वादिको लप्रत्यय । ह्रस्वत्वात्रेति । तस्या च तस्या लोपे [च] इते स्थान्यभावादेत्त्वाधित्वाच्च स्थानिवद्भावाऽभावादादेशो न भविष्यतीत्यर्थ । इहापीति । तत्रापाऽप्यादेशा न स्युरित्यर्थ । लितीत्युच्यत इति ।

उ ] सूत्रगतिस्यात्मकर्मकनिरर्थकमिति भाष्याच्च।अस्वत्वे ल इति ग्रहणमिति स्यात् । समासेऽपि विभक्तिलोपेऽकारश्रवणाऽनापत्ति , अलोपे विसर्गश्रवणापत्ति । अन्यदपि प्रयत्नान्तरसाधकमग्रुपम् ॥ [ ल कर्मणि च ] ॥

लस्य । भावाद्यर्थाभिधायिन इति । शास्त्रप्रतिपादनाऽर्थवन्त इति भाव । अकार उच्चारणार्थ इति । अन्यथा लिडादीना तिपो न स्यु । ततश्च 'परस्मैप-

१'सर्वस्य'। २अपि क्वचित्।३इदं वार्तिकं वाचनिकी वार्तिककृत परिभाषा। भाष्यनिबन्धे । ४ 'ह्रस्व' । 'अत' ।

तस्माट्टिदेप ॥ आदिस्तर्हि कस्मान्न भवति ?॥ षष्ठ्यादेशाः स्थानेयोगत्वं प्रयोजयन्ति तानेषो नोत्सहते विहन्तुमिति कृत्वाऽऽदेर्न भविष्यति ॥

पर्यवपाचस्त तर्हि कस्मान्न भवति—लविषाटेति ? ॥ 'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इति ॥ इदं तर्हि—'प्रकृतानामात्मनेपदानामेत्वं भवती'ति ॥ के च प्रकृताः ? ॥ तादयः ।

॥५॥ आने मुग्ज्ञापकं त्वेते टित्तद्योतिसीरिच ।
डारौर तु टिदटित प्रकृते तद्गुणे वचम् ॥६॥

प्र ]अत्र च छन्दस्युभयथेत्यार्धधातुकत्वादिट् एष्टव्यम् । आर्धधातुके इत्यादेशविधानात् । षष्ठ्यादेशेति । लस्येत्येषा षष्ठी, सा यद्यवयवावयविसम्बन्धे स्यात्तदा इट एवानुग्रहः स्यान्न तिबादीनाम्, तस्माद्भूयसा स्थान्यादेशसम्बन्धस्य प्रयोजकत्वात्स्येति स्थानेयोगा षष्ठ्यादेश एवेङ्क्वनि न त्वागम । असिद्धमिति । बल्यार्धधातुकापेक्षत्वादन्तरङ्गापेक्षत्वाच्च बहिरङ्ग इडागम । 'इट्टोऽ'दित्यङ्गावस्तु लिङसम्बन्धीऽपेक्षणादन्तरङ्ग । तत्र कर्तव्ये आगमस्यासिद्धत्वादन्त्यत्वाऽभाव । प्रकृतानामिति । तिबादय इहानुवर्तन्ते, तैरात्मनेपदानि विशेष्यन्ते । अथवा प्रकरणस्य विशेषणत्वनिहेतुत्वात्प्रकृतान्येवात्मनेपदानीहात्मनेपदशब्देनोच्यन्ते । ज्ञापकमत्याह—आने मुगिति । यद्येकमानस्य स्यादानेति मुगिति वक्तव्यं स्यादित्यर्थ । टित्तद्यामिति । टिति स्थाने ये तङ तेषामेव न त्वानस्यापि । अथाप्येतेन्यादौ डारौरसामेत्वं कस्मान्न भवतीत्याह—इटिसीरिच इति । 'लिटस्तझयोरेशिरेच्' 'थास से' इत्येताभ्यां सूत्राभ्यां स्वभावार इश् सि इरिच् इत्येते आदेशा विधेया । एतस्माऽनेन सिद्धत्वात् । ज्ञापनाय तु सयादयो विहिता स्वदेशादेशात्वनेत्वाऽभावस्य । टिद्दित

उ. ]आर्धधातुकत्वाऽभावादाल्लोपो न स्यादत आह—अत्र चेति।स्थान्यादेशसम्बन्धस्येति । स्थान्यादेशसम्बन्धं प्रति भूयसा प्रयोजकत्वात्स्थानषष्ठीत्यन्वय । टद्वारस्तु 'इट्टोऽदि'त्यत्र विशेषणार्थं । बलाद्यार्धधातुके इति । अनेन प्रकृतिप्रत्यययोमध्येऽवस्थितत्वमागमस्य दर्शयति । भाष्ये—इदन्तर्हयुक्तमिति । इदमपि 'गाङ्कुटादि'त्यनेनोक्तम् । तैरात्मने इति । तिबादीनां मध्ये यान्यात्मनेपदानीत्यर्थ । न च तन्मध्ये शानजिनविष्ट इति भाव । अनुवृत्ति विनाऽपीष्टसिद्धिमाह—अथ चेति । भाष्ये एकदेशमाह—आने मुगिति । 'आनयो'रिति प्रयोगे इत्यनेनानभ्यस्तवानुकरण न्याय्यमिति भाव । वस्तुतस्त्वल्पदेशो शानचानशादिसंबन्ध्यानेऽपि मुक्सिद्धये तथा निर्देश आवश्यक । पचमानो यजमान इति । मानस्यात्मनेपदत्वेन ते त्वदेश इति,—शानचोऽमस्तदचेरस्यति—प्रकृते तदिति । ज्ञापनाय तु सयादय इति । ननु परत्वादेत्वे पुन प्रसङ्गविज्ञानेन टादिषु 'लक्ष्ये लक्षणस्ये'ति न्यायेनैताऽप्रवृत्तौ सिम-

## परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ॥ ३।४।८२ ॥

॥*॥ णत्र शित्करणं सर्वादेशार्थम् ॥*॥ णल्शित्कर्तव्यः ॥ किं प्रयोजनम्? ॥ 'सर्वादेशार्थं'। शित्सर्वस्येति सर्वादेशो यथा स्यात्। अक्रियमाणे हि शकारेऽलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य प्रसज्येत ॥*॥ उक्तं वा ॥*॥ [उक्तं वा]॥ किमुक्तम्? ॥ 'अनित्यत्वात्सिद्ध'मिति। णकारः क्रियते तस्याऽनित्यत्वात्सिद्धम् ॥ न चैष परिहारो न्याय्यः—शकारमसि चोदितो 'णकारं करिष्यामि शकारं न करिष्यामी'ति। णकारो वाऽत्र क्रियेत शकारो वा को न्वत्र विशेषः? ॥ अवश्यमत्र णकारो वृद्ध्यर्थं कर्तव्यो 'णिती'ति वृद्धिर्यथा स्यात् ॥ नार्थो वृद्ध्यर्थेन णकारेण। णित्त्वे योगविभागः करिष्यते। इदमस्ति 'गोतो णित्'। ततः 'अल्'। अल्च णिद्भवति। ततः 'उत्तमो वे'ति ॥ एवं तर्हि लकारः क्रियते तस्याऽनित्यत्वात्सिद्धम् ॥ एवमपि न एष परिहारो न्याय्यः शकारमपि चोदितो 'लकारं करिष्यामि शकारं न करिष्यामी'ति। लकारो वा क्रियेत शकारो वा कोऽन्वत्र विशेषः? ॥ [अयमस्ति विशेषः]॥ अवश्यमेनात्र

---

प्र.] इति—'अजुर्वी'त्यत्र परिहारः। पठितो ल्ङः स्थाने टिदिद् इति इत्वेन न भवति। प्रकृते सिद्धिरिति। तत्—एश प्रकृते तस्यात्मनेपदे भवति न त्वाने। गुणे कथमिति। श्लोकपूरणार्थमनुक्तम्। तन् टे इत्यत्र पचावेदम् इत्यादुणे कृते कथमेत्वं न भवतीति चोद्यम्। परिहारस्तु वक्ष्यते,—बहिरङ्ग आद्गुण इति ॥ [इति आत्मने] ॥

परस्मै। णल इति। किं पुनरस्य शकारः क्रियते, यथादौ णकारस्य अनादित्वादित्संज्ञा न प्राप्नोति। मध्ये शस्येत्संज्ञाया अभावः। अन्ते तु लस्येत्संज्ञाया अप्रसङ्गः। एवं तर्हि लस्त्रियामध्य। ल्भुत्तमो वेति करिष्यते। योगविभागश्चेति मन्यते। अथवा णल् शिदित्यनिर्देशः कर्तव्यः। अक्रियमाणे हीति। नानुबन्ध-

---

उ.] र्थमिद, इत्यत्र 'डा'विधायके भाष्ये एतदिति चक्ष, एकदेशयुक्तित्वनाऽश्रने। शकारस्य पक्षेऽभावादाऽस्यान्तरम्। 'एधन्त' इत्यादौ परत्वा'द्वार्णादाद'मिति वा पूर्वमन्त्यादेशे पूर्वत्वे 'सर्वे सर्वपदादेशा' इति न्यायेनाऽन्तस्याऽऽदेशादेशत्वेन शकारेण नैत्वाऽऽपत्तिरित्यन्ये। श्लोकेति। श्लोकपूरणयाऽन्यमुत्तरविषयपूर्वपक्षोऽत्र दर्शित इति भावः। तद्गुणयाह—एत ऐ इत्यत्रेति। अनेनाऽस्य श्लोकस्यैक-देशयुक्तित्वं स्पष्टीकृतम् ॥ [ इति आत्मनेपदानां टेरे ] ॥

परस्मैपदानां। मध्ये शस्येति। 'अनादित्वा'दिति शेषः। प्रथमपुरुषे 'पपाचे' त्यादौ वृद्धिसिद्धय आह—योगविभागश्चेति। धात्वधिकारे त्विति। परनिर्देशग-

---

१ इद क्वचिन्न। २ 'सिद्धमिति'। ३ 'कथमेव'। ४ इदं भाष्यं वार्तिकं वेति सन्दिग्धम्। ५ अयं पाठः क्वचिन्न। ६ 'मत्र'।

स्वरार्थो लकार इत्कर्तव्य । 'लिति प्रत्ययात्पूर्वमुदात्त भवती'त्येष स्वरो यथा स्यात् ॥ नैतदस्ति प्रयोजनम् । धातुस्वरे कृते द्विर्वचन, तत्रान्तर्यतोऽन्तोदात्त-स्याऽन्तोदात्त आदेशो भविष्यति ॥ कथ पुनरयमन्तोदात्त स्याद्यदेकाच्? ॥ व्यपदेशिवद्भावेन ॥ यथैव तर्हि व्यपदेशिवद्भावेनाऽन्तोदात्त एवमाद्युदात्तोपि, तत्रान्तर्यत आद्युदात्तस्याऽऽद्युदात्त आदेश प्रसज्येत ॥ सत्यमेवमेतत् । न त्विद लक्षणमस्ति 'धातोरादिरुदात्तो भवती'ति,इद पुनरस्ति 'धातोरन्त उदा

प्र ]त्तत्वमनेनाऽन्त्यमित्यन्त्यस्य स्यादित्यर्थ ।एतच्च प्राग्लादेशाद्धात्वधिकार इति पक्षमा श्रित्योच्यते । धात्वधिकारे तु सन्यादे परस्येत्यादे प्राप्नोति । धातुस्वर इति । प्रत्ययस्य पित्वादनुदात्तत्वाद्धातुस्वर प्रवर्तते । यदेकाजिति । योऽनेकाच् जजा गारेति,—तत्र धातुस्वरे कृते शिष्टस्यानुदात्तत्वे प्रवर्तमानो द्विर्वचन सर्वानुदात्त सिध्यतीत्येकाच एव धातुर्निरूप्यते । व्यपदेशिवद्भावेनेति । 'आद्यन्तवदेकस्मि'न्नित्य नेनेत्यर्थ । यथैवेति । व्यपदेशिवद्भावेनेत्यर्थ [illegible] मन्यते । न त्विदमिति । शास्त्राऽनिर्देश इति

उ ]पक्षे दत्तम् । निहितविशेषणे तु तदग्रहणस्याऽन्त्यस्यैव प्राप्नोतीति यथाश्रुतमेव भाष्य रमणीयमिति दिक् । भाष्ये—अनित्यत्वादिति।वाक्यार्थबोधे सति प्रत्ययस्वज्ञाने इत्सञ्ज्ञा समकालमेव सर्वादर्शनेति तदाऽनेकाल्त्वस्याऽप्राप्तिरित्यर्थ । [भाष्ये] तस्याऽनित्यत्वा दिति । वाक्यार्थबोधात्प्रागनित्त्वादस्याऽन्वाख्यानुपपत्तिस्वज्ञानादित्यर्थ । एवचाऽ नुबन्धलक्षणाऽभावात्तस्मिन्समये 'नाऽनुबन्धकृत'मित्यस्याऽप्राप्तिरिति भाव । यदि तु भाष्यनुबन्धत्व गृहीत्वा तत्प्रवृत्तिस्तदा 'डा'वत् 'ण-अत्' इति प्रश्लेषणाऽनेका ल्त्वात्सर्वादेशत्वम् । निरूपितश्चेद 'तुह्य प्रथमस्ये'ति सूत्रेऽस्माभि । क एष परिहारो न्याय्य इति । अन्याय्य एष परिहार क उच्यत इत्यर्थ । एष तर्हि लकार इति । 'ल' इति 'ल'णिति यादेश कार्य इति भाव । धातुस्वर प्रवर्तत इति । प्रवृत्त सतिशिष्टस्वरेण न निवर्त्यत इत्यर्थ । भाष्ये—अन्तोदात्त आदेश इति । स्थाने द्विर्वचनमिति भाव । सर्वाऽनुदात्तम्—अनुदात्ताऽभ्याससमर्पणेत्यर्थ । निरूप्यत इति । विचारविषयीक्रियत इत्यर्थ । भाष्ये—कथम्पुनरयमिति । द्विर्व-चनप्रवृत्तिरित्यर्थ । यदेकाजिति । यदेकाजित्यादि प्रवृत्तिरित्यर्थ । धातोरन्तो ऽनुदात्त इत्यर्थ इति भाव । व्यपदेशिवदिति । तत्राऽनिर्देशेनाऽन्तवत्त्वातिदेशा-त्स्वरसिद्धिरित्यर्थ । अस्य आद्यन्तवत्सूत्रपरतया कैयटोक्ते व्याख्याने धीर चि-न्त्यम् । इतरोऽन्तोदात्तत्वव्यवहार एवाऽनेन व्यपदेशिवद्भावेनोक्त इति तत्राद्य-र्थरेति । अन्तोदात्तत्वादिधर्माऽनिर्देश एव कैयटे कार्यातिदेशपदेनोक्त । न त्वि-दमिति । एवचाऽनेनाऽन्तत्वाऽनिर्देशो शास्त्रेणाऽन्तस्यप्रयुक्तोदात्तत्वे तद्व्यवहार-सिद्धि , आद्युदात्तविधायकस्याऽभावात्तु न तद्व्यवहार इति भाव । 'दाम्याऽनि

## यासुट्परस्मैपदेषूदात्तो ङिच्च ॥ ३।४।१०३ ॥

किमर्थं यासुटो ङित्त्वमुच्यते ? ॥ ॥यासुटो ङिद्वचनं पिदर्थम् ॥१॥ [ यासुटो ङित्त्वं क्रियते ॥ किं प्रयोजनम् ? ॥ 'पिदर्थम्' ] ॥ पितीति वचनानि प्रयोजयन्ति ॥ अथ किमर्थमुदात्तवचनं क्रियते ? ॥ ॥उदात्तवचनं च ॥२॥ [ उदात्तवचनञ्च ] ॥ किम् ? ॥ 'पिदर्थमेव' ॥२॥ आगमानुदात्तार्थं वा ॥३॥ अथ वैतज्ज्ञापयत्याचार्य 'आगमा अनुदात्ता भवन्ती'ति ॥ अमत्यन्यस्मिन्प्रयोजने ज्ञापक भवति । उक्तं चैन-यासुटो ङिद्वचनं पिदर्थमुदात्तवचनं चेति ॥ शक्यमनेन वक्तुं—यासुट्परस्मैपदेषु भवति अपिच ङिद्भवतीति, सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्य —'आगमा अनुदात्ता भवन्ती'ति ।

## आतः ॥ ३।४।११० ॥

किमिदं जुस्याकारग्रहणं नियमार्थमाहोस्वित्प्रापकम् ? ॥ कथं च नियमार्थं स्यात्, कथं वा प्रापकम् ? ॥ यदि सिज्ग्रहणमनुवर्तते ततो नियमार्थम्, अथ निवृत्तं ततः प्रापकम् ॥ कश्चात्र विशेषः ? ॥ ॥ जुस्याकारग्रहणं नियमार्थमिति चेत्सिज्लुग्ग्रहणम् ॥१॥ 'जुस्याकारग्रहणं नियमार्थमिति चेत्सिज्लुग्ग्रहणं कर्तव्यम् । 'आतः सिज्लुगन्ता'दिति वक्तव्यम् । इह मा भूत्—अकार्षुः अहार्षुः ॥ अस्तु तर्हि प्रापकम् ॥ ॥ प्रापकमिति चेत्प्रत्ययलक्षण

प्र ]तदादिविध्यभावादनयोरपि नियो सुद्भवति ॥ [ लिङ सीयुट् ] ॥

आत । अकार्षुरिति । अत्र नाकारान्तात्सिजिहित, नापि परः, रेफेण व्यवधानादिति जुस्न स्यात् । ननु यदकार्षुरित्यादावपि नियमः स्यात्तदा पूर्वसूत्रेण सिजन्तात्तु स्विधानमनवकाशं स्यात् । नैष दोषः । अगुरस्त्वरित्यादेरवकाशत्त्व सम्भवात् । विषयविभागश्च न लभ्यते, यतोऽकार्षुरिति जुस् भवति, अभूवन्नित्यत्र तु

उ. ]शप्यभाव । मङ्क्षीष्ट सीयुगो बाध स्यादित्यर्थः । कार्यिभेदादिति । प्रयक्तद्विर्वचनस्य द्वितीयद्विर्वचनेन कार्यिभेदेऽपि बाधदर्शनाच्चिन्त्यमिदम् । 'तस्मादपकर्षो विग्रहेने'त्युत्तर भाष्ये 'लस्यायासुडादेः सीयुटः प्रतिषेधो वक्तव्य' इति दोषः । एदेव च वचनं शस्यमत्र प्रकरणे बाध्यबाधकभावाऽभावस्येति कुत्र सीयुगो न बाध इति भाव इत्युचितम् ॥ [ लिङ. सीयुट् ] ॥

यासुट् प । आगमा अनुदात्ता इति भाष्य । 'अनुदात्तपद'मित्येकवाक्यताप-पत्तोदन्तादिविधिप्रवृत्तिसाऽध्याहितानामपि तेन निधानप्रवृत्तिर्नाप्यत इत्यर्थः । विस्तरेण चैतदागुदात्तार्थेत्यत्र निरूपितं प्रकृतसूत्रे शब्देन्दुशेखरे च ॥

आत । भाष्ये—इह मा भूदकार्षुरिति । नियमेन व्यवच्छेदो मा भूदित्यर्थः । ननु सिच परस्य झेर्जुस्त्वशासनस्य परत्वेनेन न दोष इत्यत आह—अत्रेति । नियम स्यादिति । नियमेन व्यवच्छेद स्यादित्यर्थः । अगुरिति । योगविभाग-

१ इद त्यक्तम् । २ 'अनु' ।

प्रतिषेध ॥*॥ ज्ञापकमिति चेत्प्रत्ययलक्षणस्य प्रतिषेधो वक्तव्य । अभूव क्षिति प्रत्ययलक्षणेन जुस्भाव प्राप्नोति ॥ ।॥एवकारकरण च ॥ ॥ एवकार करण च कर्तव्यम् । 'लङ शाकटायनस्यैवे'ति । नियमार्थे पुन सति नार्थ एवकारकरणेन॥ननु च ज्ञापकेऽपि सति सिद्धे विधिरारभ्यमाणोऽन्तरेणैवकार नियमार्थो भविष्यति॥[ इष्टतोऽवधारणार्थ *]॥ इष्टतोऽवधारणार्थस्तह्येवकार कर्तव्य । यथैव विज्ञायेत–लङ शाकटायनस्यैवे'ति,मैव विज्ञायि–'लङ एव शाकटायनस्ये'ति॥कि च स्यात् ? ॥ लुङ शाकटायनस्य न स्यात् । अदु । अयु अगु अस्थु ॥ ।॥लङ्ग्रहण च॥ ॥लङ्ग्रहणं च कर्तव्यम्।लङ शाकटायन स्यैवेति । नियमार्थे पुन सति नार्थो लङ्ग्रहणेन। 'आतो ङित' इति वर्तते । न चान्य आकारादनन्तरो ङिदस्त्यन्यदतो लङ ॥ अस्तु तर्हि नियमार्थम् ॥ ननु चोक्त 'जुस्भावग्रहण नियमार्थमिति चेत्सिज्लुग्ग्रहण'मिति ॥ नैष दोष । तुल्यजातीयस्य नियम ॥ कश्च तुल्यजातीय ? ॥ यो द्वाभ्यामनन्तर आतश्च सिचश्च ॥ अथ तर्ह्येवकारकरण नैव कर्तव्यम् ? ॥ कर्तव्य च ॥

प्र ]न भवति।यद्यत्र पूर्वसूत्रे सिज्ग्रहणमकृत्वा 'आत सिच' इति वक्तव्य स्यात्।नैत दस्ति । उत्तरत्राऽऽत इत्यस्यानुवृत्त्यर्था योगविभाग स्यात् । अथ वा योगविभागो ऽस्य नियमार्थत्वाय स्यात् । अस्य हि नियमार्थत्वे उत्तरत्र लङ्ग्रहण न कर्तव्य भवति। एवकारकरण चेति । यदा सिज्ग्रहणमिद नानुवर्तते तदानेनैव लङादेशस्य जुस्भावे उत्तरस्याऽयुरित्यादौ लुङि सिद्धे 'लङ शाकटायनस्यैवे'ति नियमार्थ एवकार कर्तव्य, अन्यथा अनेन अयानिष्यादि यथा स्यात् । यदा तु सिज्ग्रहणानुवृत्त्या नियमार्थमिद तदा 'लङ शाकटायनस्ये'त्येव पक्षे विध्यर्थं कर्तव्य, नार्थ एवकारेण इत्यर्थ । मैव विज्ञायीति। 'लङ एव शाकटायनस्ये'ति विज्ञायमाने लुङ शाकटाय नस्य न स्यात् । तत्र लुङि विकल्प प्रसज्येत । लङि तु नित्य स्यादित्यर्थ । तुल्यजातीयस्येति । सिज्लुक विना आत सिचश्चानन्तरो झिर्न भवतीति सिज्लु

उ ]गर्थेऽस्मिन्ननुवदनेव परिहरिष्यति।अत एव दूषणान्तरमाह–विषयविभागश्चेति । अभूवन्निति । अत्र प्रत्ययलक्षणेन सिन्नता बोध्या । योगविभाग स्यादिति । 'लङ शाकटायनस्ये'त्यत्र सिज्ग्रहणाऽननुवृत्त्यर्थ 'आत' इत्यस्याऽनुवृत्त्यर्थ योग विभाग इत्यर्थ ।ननु 'आत सिच' इत्युच्यमानेऽपि स्वरितत्वादाऽऽतग्रहणादात इत्येता ऽनुवर्तिष्यते न तु सिच इति, उत्तरत्र लङ्ग्रहणाच्चाऽन आह–अथ वेति । निय मार्थत्वायेति।तदन्तु 'अभूवन्नि'त्यत्र व्यावृत्ति । नियमपक्षे योगविभागप्रयुक्त गौरवेऽपि लाघवान्तर दर्शयति–अस्य हीति।ततश्च लुङीति। शाकटायनमते लङ एवा ऽन्यस्य तन्मते नेत्यर्थे लुङि शाकटायनमते निषेध ,अन्यस्य मते जुसित्यर्थाद्विकल्प पत्तिरि । लङि तु शाकटायननतेऽन्यमते च प्राप्त्या नित्य पत्तीति भाव ।

१ ग्रहणं' । २ 'वक्तव्यं' । ३ 'एवकारेण । ४ लुसं स्यात् । ५ विज्ञायेत' ।

किं प्रयोजनम् ? ॥ उत्तरार्थम् ॥ लिङ् लिटाशिषि आर्द्धधातुकमेव यथा स्यात् । इतरथा हि वचनादार्द्धधातुकसंज्ञा स्यात् , तिङ्ग्रहणेन च ग्रहणात्सार्वधातुकसंज्ञा ॥ अथ लङ्ग्रहणं नैव कर्तव्यम् ? ॥ कर्तव्यं च ॥ किं प्रयोजनम् ? ॥ लटैव यो लङ् तत्र यथा स्याल्लुङ्भावेन यो लङ् तत्र मा भूदिति ॥

आर्द्धधातुकं शेषः ॥ ३।४।११४ ॥

॥ * ॥ आर्द्धधातुकसंज्ञायां धातुग्रहणम् ॥ * ॥ आर्द्धधातुकसंज्ञायां धातुग्रहणं कर्तव्यम् । धातोः परस्यार्द्धधातुकसंज्ञा यथा स्यात् । इह मा भूत् वृक्षत्वं वृक्षतेति । क्रियमाणे चापि धातुग्रहणे-॥ * ॥ स्वादिप्रतिषेधः ॥ * ॥ स्वादीनां प्रतिषेधो वक्तव्यः । इह मा भूत्-लूभ्यां लूभिरिति ॥ अनुक्रान्तापेक्षः शेषग्रहणम्॥एवमपि अग्निकाम्यति वायुकाम्यतीति प्राप्नोति। तस्माद्धातुग्रहणं कर्तव्यम्॥तत्तर्हि धातुग्रहणं कर्तव्यम्?॥न कर्तव्यम्॥आतृतीयपरिसमाप्तेर्धात्वधिकारः प्रकृतोऽनुवर्तते॥क्व प्रकृतः?॥'धातोरेकाचो हलादेः'रिति॥एवमपि श्रीकाम्यति भूकाम्यतीति प्राप्नोति॥ * ॥तद्विधानात्सिद्धम्॥ * ॥ [ तद्विधानात्सिद्धम् ]॥विहितविशेषणं धातुग्रहणं 'धातोर्यो विहितः' इति॥धातोरेव विहितः॥ मङ्गीर्यं धातोरित्येवं यो विहित इति॥ इति श्रीभगवत्पतञ्जलिमुनिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥

---

प्र ]गन्तस्यान्तरङ्गेह प्रहणमिति नियमेन लिङ्लुङन्तमेव निरर्थ्यते।उत्तरार्थमिति। धात्वर्थकमशाधिकारादन्यत्र सञ्ज्ञासमावेशस्य दृष्टत्वात्लिङादेशानां सार्वधातुकसञ्ज्ञाऽपि स्यात् । तन्निमित्तविकरणप्रसङ्गः । आर्द्धधातुकसञ्ज्ञा चेष्टार्था स्यात् ॥

आर्द्धधा । अनुक्रान्तापेक्षमिति । अनुक्रान्ता ये प्रत्ययास्तिङ्शिद्वर्जितास्ते आर्द्धधातुकसंज्ञा भवन्ति न त्वनुक्रम्यमाना इत्यर्थः । धातोरित्येवमिति । धातोरित्येव धातुशब्दसुचार्य ये विहिता इत्यर्थः । इति महामहोपाध्यायश्रीमज्जैय्यटपुत्रकैयटकृते महाभाष्यप्रदीपे तृतीयाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ।

---

उ ]भाष्ये-लङ्ग्रहणमिति। असति लङ्ग्रहणे लुङ्यपि विकल्पः स्यात्। न च 'शात' इतियोगविभागात् तेन नित्य इति वाच्यं, लुङि विकल्पो लङि नित्य इति वैपरीत्यस्यापि सम्भवादिति भावः ॥एवञ्च 'आत'इति सूत्रं 'लिच'इत्यनुवृत्त्या नियमार्थम्, उत्तरसूत्रन्तु विध्यर्थम् । 'शाकटायनस्यैवे'त्येवकार उत्तरार्थः । लङ्ग्रहणं लटवद्भावेन लटोऽग्रहणार्थमिति बोध्यम् । एवञ्च 'धातो'रिति सूत्रस्यभाष्यं प्रौढ्या, एतत्सूत्रस्थभाष्यविरोधादिति बोध्यम् ॥ [ आत. ] ॥

आर्द्धधा।भाष्ये-धातोरेकाच इति।'धातो'रिति पृथक्सूत्रन्तु प्रयाम्यानमेव। धातोरित्येवमिति । स्याद्यभावादिति भावः ॥ इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते महाभाष्यप्रदीपोद्योते तृतीयस्याऽध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥ १ ॥